# सागरिका

संस्कृतत्रैमासिकी



षट्त्रिंशवर्षे अङ्कः प्रथमः

## संस्कृतगौरवविशेषाङ्कः







विक्रमसंवत् २०५८



सागरिका समितिः
संस्कृतविभागः
डॉ.हरीसिंहगौरविश्वविद्यालयः, सागरम्

# सागरिका

(संस्कृतत्रैमासिकी)



विक्रमसंवत् २०५८



षट्त्रिंशवर्षे अङ्कः प्रथमः
३६/१

**संस्कृतगौरवविशेषाङ्कः**



**संस्थापकः प्रधानसम्पादकश्च**

रामजीउपाध्यायः



**सम्पादकः**

राधावल्लभत्रिपाठी



**सागरिकासमितिः**

संस्कृतविभागः

डॉ.हरीसिंहगौरविश्वविद्यालयः सागरम् (म.प्र.)

## देयम्

| | | |
|---|---|---|
| प्रत्यङ्कम् | ६.०० | रूप्यकाणि |
| वार्षिकम् | ३०.०० | रूप्यकाणि |
| आजीवनग्राहकस्य | ५००.०० | रूप्यकाणि |
| अस्याङ्कस्य पृथङ्मूल्यम् | २०.०० | रूप्यकाणि |

**अङ्कप्रकाशः प्रतिवर्षम् -- आषाढाश्विन --पौष - चैत्रमासेषु**
(जून-सितम्बर-दिसम्बर-मार्च)

**पत्रव्यवहारसङ्केतः**
डॉ. राधावल्लभः त्रिपाठी,
संस्कृतविभागाध्यक्षः
डॉ.हरीसिंहगौरविश्वविद्यालयः
सागरम् ४७० ००३

**अक्षरयोजनम्**
नरेश सैनी (संस्कृतविभागे)
डॉ.हरीसिंहगौरविश्वविद्यालयः सागरम्

# अनुक्रमः

# सम्पादकीयम्

सागरिकायाः संस्कृतगौरवविशेषाङ्केऽस्मिन् प्रस्तूयते प्रथमं संस्कृतसेवापरायणानां संस्कृतिनिष्ठानां तपःपूतानां श्रीमतां रामज्युपाध्यानां परिचयः। परिचयोऽयं विगताङ्कस्य आधुनिकसंस्कृतसाहित्यविशेषाङ्कस्य परिशेषभूत आधुनिकसंस्कृतसाहित्यश्रियं समग्रयति। अनन्तरं चात्र प्रकाश्यन्ते त्रीणि व्याख्यानानि। प्रथमं व्याख्यानं भारतदेशस्य पूर्वराष्ट्रपतीनां दिवङ्गतानां श्रीमतां शङ्करदयालशर्ममहोदयानाम् वर्तते। एतद् व्याख्यानं तदानीन्तनैर्महामहिमराष्ट्रपतिभिः केन्द्रियोच्चतिब्बतीशिक्षासंस्थानस्य दीक्षान्तमहोत्सवे प्रदत्तम्। संस्कृतं प्रति भारतीयां परम्परां प्रति च तेषां महोदयानाम् अकुण्ठिता आस्था सुविदिता वर्तते। तथैव विज्ञायत एव तेषां बहुश्रुतत्वम्, अवितथा चाधीतिः। प्रस्तुते व्याख्याने भगवतो बुद्धस्य सन्देशं, तस्य सन्देशस्य साम्प्रतिकीमुपादेयतां चाधिकृत्य शर्ममहोदयैः सम्यक् विमर्शो व्यधायि। अतः परं व्याख्यानद्वयमिह भारतशासनस्य मानवसंसाधनविकासस्य विज्ञानप्रौद्योगिक्योः समुद्रविकासस्य च मन्त्रिणां श्रीमतां प्राध्यापकवर्याणां मुरलीमनोहरजोशीमहोदयानां वर्तते। तत्र प्रथमं व्याख्यानं नाम एषमो मई-मासस्य एकविंशतितमे दिवसे एतैः महोदयैः थाईलैण्डदेशे बैङ्काकनगरे शिल्पकार (सिल्पाकोन)- विश्वविद्यालयस्य संस्कृताध्ययनकेन्द्रेण "दक्षिणपूर्वेशियादेशेषु संस्कृतम्-- संस्कृतीनां समन्वयस्योपादानम्-" इति विषयमवलम्ब्य समायोजितस्य अन्ताराष्ट्रियसम्मेलनस्य उद्घाटनसत्रे प्रदत्तम् आधारभाषणम्। अस्मिन् व्याख्याने संस्कृतस्य वैश्विकं रूपं भारतीयविश्वबोधस्य जीवनदृष्टेश्च इदानीन्तने काले प्रसङ्गोपात्तत्वं प्रतिपादिते। द्वितीयं व्याख्यानं जोशीमहोदयैरेव देहल्याम् एषमो एप्रिलमासस्य पञ्चमतारिकायां विश्वसंस्कृतसम्मेलनस्य उद्घाटनावसरे प्रस्तुतं अध्यक्षभाषणं विद्यते। अस्मिन् भाषणे सम्प्रति भौतिकविज्ञानक्षेत्रे जायमानेन नवीनचिन्तनेन कथमस्माकमनूचानैः साक्षात्कृतानि सृष्टिरहस्यानि सङ्गतिं प्रकटयन्ति, कथं चाधुनिकं विज्ञानं संस्कृतशास्त्रेषु निहितैः विमर्शैः समधिकतरं अग्रसरं विधातुं शक्यत इति सप्रमाणं तथ्यान्वेषणपुरस्सरं प्रत्यपादि। आधुनिकसंस्कृतसाहित्यस्यापि समृद्धिः संस्कृतस्य साम्प्रतिकी रचनाशीलता चात्र साधु प्रकटीकृता।

शङ्करदयालशर्म-मुरलीमनोहरजोशीभ्यां एतानि भाषणानि संस्कृतेन एव प्रस्तुतानि। उभयोरपि अनयोर्महानुभावयोः संस्कृतभाषायाः संस्कृतसाहित्यस्य ज्ञानं समुज्ज्वलं चाध्ययनं तत्र परिलक्ष्यते। एतद्व्याख्यानत्रयं साम्प्रतिके काले संस्कृतभाषाया अवदानं, शास्त्रपरम्पराणां भारतीयतत्त्वचिन्तनस्य च महामहिमशालित्वं यथायथं निरूपयतीति संस्कृतगौरवविशेषाङ्केऽस्मिन् श्रीमद्रामज्युपाध्यायाभिनन्दनेन सह सगौरवमेतत् प्रकाशयामः। स्वव्याख्यानप्रकाशनाय अनुमतिं दत्तवते श्रीमते मुरलीमनोहरजोशीमहोदयाय तिब्बतीशिक्षासंस्थानाय च कृतज्ञतां प्रकटयाम इति दिक्। (रा०)

# सागरिका

(संस्कृतत्रैमासिकी)





विक्रमसंवत् २०५८



षट्त्रिंशवर्षे द्वितीयोऽङ्कः

३६ / २



**संस्थापकः प्रधानसम्पादकश्च**

रामजीउपाध्यायः



**सम्पादकः**

राधावल्लभ त्रिपाठी



सागरिकासमितिः

संस्कृतविभागः

डॉ.हरीसिंहगौरविश्वविद्यालय, सागरम्

**देयम्**

| | |
|---|---|
| प्रत्यङ्कम् | ६.०० रूप्यकाणि |
| वार्षिकम् | ३०.०० रूप्यकाणि |
| आजीवनग्राहकस्य | ५००.०० रूप्यकाणि |

अङ्कप्रकाशः प्रतिवर्षम् ––आषाढाश्विन ––पौष––चैत्रमासेषु
(जून–सितम्बर–दिसम्बर–मार्च)

**पत्रव्यवहारसङ्केतः**
डॉ.राधावल्लभ त्रिपाठी
संस्कृतविभागाध्यक्षः
डॉ. हरीसिंहगौरविश्वविद्यालयः
सागरम् – ४७० ००३

**अक्षर संयोजन**
नरेश सैनी (संस्कृतविभागे)
डॉ.हरीसिंहगौरविश्वविद्यालयः सागरम्

# अनुक्रमः

## अस्याङ्कस्य लेखकाः

१ **सच्चिदानन्द मिश्रः**, संस्कृत विभागे गन्ना किसान महाविद्यालयः, शाहजहाँपुरम्।

२. **राजेश्वरमिश्रः**, संस्कृत:पालि–प्राकृत–विभागः कुरुक्षेत्रविश्वविद्यालयः कुरुक्षेत्रम्।

३. **सीतानाथ आचार्य्य-शास्त्री**, एफ --१७७, रवीन्द्रपल्ली, पो.प्रफुल्लकानन, कोलकाता– ७४३ ५११।

४.. **मुरली मनोहरः पाठकः**, सस्कृत--प्राध्ययनकेन्द्रम् विक्रमविश्वविद्यालय, उज्जयिनी।

५ **निर्मला कुलकर्णी**, रिसर्च एसोशिएट, संस्कृत प्रगत अध्ययनकेन्द्रम विश्वविद्यालयः पुणे.।

६. **हर्षदेव माधव**, ए–१२, हीरामोती टेनामेंट्स, सिद्धि काम्पलेक्ससमीपम्, गुलाबसोपफैक्टरीप्रतीपम्, चाँदखेडा-- ३८२ ४२४, गान्धीनगरम्।

७ **हरेराम त्रिपाठी**, व्याख्याता संवदर्शन (न्याय) लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली।

८. **राधावल्लभ त्रिपाठी**, अध्यक्ष संस्कृत विभाग, डॉ. हरीसिंह गौर विश्व--विद्यालय, सागर (म.प्र.)

# सागरिका

संस्कृतत्रैमासिकी

विक्रमसंवत् २०५९





षट्त्रिंशवर्षे अङ्कौ तृतीय-चतुर्थौ

३६/३-४



## संस्कृतव्याकरणविशेषाङ्कः



संस्थापकः प्रधानसम्पादकश्च

रामजीउपाध्यायः



सम्पादकौ

राधावल्लभत्रिपाठी

कुसुमभूरिया



प्रबन्धसम्पादकः

अच्युतानन्ददाशः



सागरिकासमितिः

संस्कृतविभागः

डॉ.हरीसिंहगौरविश्वविद्यालयः सागरम् (म.प्र.)

## देयम्

| | | |
|---|---|---|
| प्रत्यङ्कम् | १५ | रूप्यकाणि |
| वार्षिकम् | ५० | रूप्यकाणि |
| आजीवनग्राहकस्य (व्यक्तिशः) | ७५० | रूप्यकाणि |
| आजीवनग्राहकस्य (संस्थायाः) | १५०० | रूप्यकाणि |
| अस्याङ्कस्य पृथङ्मूल्यम् | ३० | रूप्यकाणि |

अङ्कप्रकाशः प्रतिवर्षम् -- आषाढाश्विन -- पौष -- चैत्रमाषेषु
(जून-सितम्बर-दिसम्बर-मार्च)


## पत्रव्यवहारसङ्केतः

डॉ.अच्युतानन्ददाशः
संस्कृतविभागः
डॉ.हरीसिंहगौरविश्वविद्यालयः सागरम्- ४७० ००३
दूरभाष-फैक्स- ०७५८२-२३३६६



## अक्षरसंयोजनम्

नरेश सैनी (संस्कृतविभागे)
डॉ.हरीसिंहगौरविश्वविद्यालयः सागरम्

# अनुक्रमः

# श्रीमद्रामज्युपाध्यायचरितम्

***राधावल्लभः***

श्रीरामज्युपाध्यायः १९२०ई० वर्षे उत्तरप्रदेशस्य बलियाजनपदान्तर्वर्तिनि मलैजीग्रामे जनिमलभत। अस्य पिता श्रीमान् महावीरोपाध्यायः स्वयमेव संस्कारसम्पन्नः संस्कृतसाहित्यानुरागी चासीत्। बलियाजनपदं विद्यते परशुरामचतुर्वेदि- हजारीप्रसादद्विवेदिसदृशानां विदुषां तथैव भारतीयस्वातन्त्र्यसङ्ग्रामे विहितप्राणाहुतीनां वीराणां जन्मभूमिः। अस्या एव भूमेरधिगता उपाध्यायवर्येण संस्कृतं प्रति संस्कृतिं प्रति चाकुण्ठनिष्ठाया राष्ट्रप्रेम्णश्च संस्काराः। स्वजन्मग्रामे अनेन प्राथमिकी शिक्षा समधिगता। अनन्तरम् उच्चाध्ययनाय पित्रा प्रयागं प्रेषितः। तत्रायं बाबूरामसक्सेना- क्षेत्रेशचन्द्रचट्टोपाध्याय- लक्ष्मणशास्त्रितैलङ्ग- प्रसन्नकुमाराचार्य- सदृशानामाचार्याणां सम्पर्कमवाप्य तेजस्विनं स्वाधीतं चकार। इलाहाबादविश्वविद्यालयात् संस्कृतविषयमादाय स्नातकोत्तरोपाधिं प्राप्य श्रीमतां बाबूरामसक्सेनामहोदयानां निर्देशे संस्कृतप्राकृतमहाकाव्ययोस्तौलनिकमध्ययनमाश्रित्यायमुसन्धानं समपादयत्। तत्रैव च स्थित्वा भारतीयसंस्कृतिविषयकं प्रथमं पुस्तकमपि हिन्दीभाषया प्रणिनाय।

सागरविश्वविद्यलयेऽयं महाभागः प्रथितविधिविशेषज्ञस्य डॉ० हरीसिंहगौरस्य, विश्वविश्रुतेतिहासविदः रामप्रसादत्रिपाठिनः, विद्वत्कवेः दण्डनीतौ कौटिल्यतुल्यस्य डॉ० द्वारकाप्रसादमिश्रस्य राजनीतिशास्त्रप्राध्यापकस्य महादेवप्रसादशर्मणः दर्शनशास्त्रप्राध्यापकस्य चन्द्रशेखरावस्थिनः, प्रकाण्डपण्डितस्य बच्चूलालावस्थिनः इतिहासप्राध्यापकस्य डॉ० हीरालालगुप्तस्य तथैवान्येषां विविधविद्यावदातानां विदुषां सम्पर्कमाप, स्वकीयस्य ज्ञानक्षितिजस्य विस्तारं व्यदधात्, विविधग्रन्थरचनया च

पुपोष सुरसरस्वतीसाहित्यभाण्डागारम्।

**व्यक्तित्वम्-**

उपाध्यायमहोदयः सदैव शुभ्रखादीवस्त्रविभूषितः उन्नतभालः दीर्घकायः तेजस्वी भारतीयतायाः साकारविग्रहः प्रतीयते। गम्भीराणां समस्यानां निराकरणमयं सस्मितवदंनो विदधाति। अस्य विनोदप्रियता सदाऽस्य शिष्यैः सहयोगिभिरनुभूयते। अस्य परिहासकथनानि नर्मवचांसि च भवन्ति हृदयहारीणि। स्पष्टवादिता आदर्शप्रवणता दृढता चास्य गुणाः। प्राध्यापकजीवने संस्कृतच्छात्रान् न केवलं विद्यादानेन अपितु वित्तसाहाय्येन भोजनादिव्यवस्थया च पितेवायं संरक्षति स्म।

**संस्कृतसेवाकार्याणि-**

उपाध्यायमहाभागः १९४७ई०वर्षे जुलाईमासस्य सप्तमदिवसे सागरविश्वविद्यालयस्य संस्कृतविभागे व्याख्यातृपदे कार्यभारमग्रह्णात्। १९५७ई० वर्षे जुलाईमासस्य एकादशदिनाङ्केऽयं प्रवाचकपदं, १९६३ई०वर्षे सितम्बरमासस्य प्रथमदिने चाचार्यपदं प्राप। अस्मिन्नेव विभागे प्रायः त्रिंशद्वर्षाणि संस्कृतविभागाध्यक्षपदमप्यलङ्कुर्वन्नयं अध्यापने स्वाध्याये च दत्तचित्तः अनवरतं संस्कृतं सिषेवे। सागरे निवसताऽनेन प्रणीताः पञ्चाशत्प्रायाः ग्रन्थाः परःशतं च लेखाः, संस्थापिताः बहुविधाः संस्कृतसंस्कृतिकार्यपराः संस्थाश्च। अनेन संस्थापिताः काश्चन संस्था अत्र परिगण्यन्ते। तथाहि-

**सागरिकासमितिः-** इयं समितिः सागरिकापत्रिकायाः प्रकाशनाय उपाध्यावर्येण स्थापिता। स चास्याः १९६३ई० वर्षात् १९८०ई० वर्षं यावत् संस्थापकाध्यक्षोऽभवत्। विश्वविद्यालयस्य संस्कृतविभागे प्राध्यापिका श्रीमती वनमालाभवालकरमहोदया अस्या समितेः कोशाध्यक्षपदं, प्राध्यापकवर्यो विश्वनाथभट्टाचार्यश्च सचिवपदमलङ्चक्रतुः। समितिरियं सम्प्रत्यपि सक्रिया वर्तते।

**संस्कृतपरिषत्-** संस्कृतसाहित्यविषयकग्रन्थानां प्रकाशनाय सांस्कृतिककार्यक्रमाणामायोजनाय च परिषदियं संस्थापिता। पञ्चाशत्प्रायाः ग्रन्था अनया परिषदा प्रकाशिताः। परिषदियं सम्प्रत्यपि

तथैव प्रचलति।

**गान्धीपरिषत्-** महात्मनो गान्धिनः जीवनदर्शनस्य प्रचाराय संस्थापिता परिषदियमुपाध्यायवर्यस्य गान्धीवादे सुदृढामास्थामभिव्यनक्ति स्म। इतिहासविभाग आचार्य डॉ० हीरालालगुप्तोऽस्याः परिषदोऽध्यक्ष आसीत्। परिषदः पुस्तकालय आसीत्। गान्धीसाहित्यप्रथमा, गान्धीसाहित्यमध्यमा, गान्धीसाहित्योपाध्याय इत्यादयः परीक्षाः परिषदा सञ्चाल्यन्ते स्म। एताः परीक्षा उत्तीर्य छात्रा गान्धीदर्शने नदीष्णा बभूवुः। परिषदियं प्रायः १९६०ई०तः १९७०ई० वर्षं यावदेव सक्रिया अभूत्, सम्प्रति न प्रचलति।

**ढानासंस्कृतविद्यालयः-** संस्कृतविद्यालयोऽयं सागरनगरात् समीपवर्तिनि ढानाग्रामे उपाध्यायवर्येण स्थापितः प्राचीनगुरुकुलस्य वैशिष्ट्यमाविश्चकार। ग्रामजीवनस्य पावनत्वमत्र विद्योतते स्म। विद्यालयच्छात्रा भारतीयपारम्परिकगुरुकुलपद्धत्या अधीयाना तद्गतमौदात्त्यं गौरवं च भावयेयुरिति स्वप्नोऽत्र उपाध्यायवर्यस्य चरितार्थतां नीतः। दुर्दैववशात् विद्यालयोऽयं चिरस्थायी नाभूत्। ढानाग्रामे जीर्णतामुपगच्छत् शून्यं चास्य भवनं उपाध्यावर्याणां पुरुषार्थकथामद्यापि निःशब्दं प्रकटीकुरुते।

**सम्पादनम्**

सागरिकापत्रिका रामज्युपाध्यायमहाभागानां संस्कृतपत्रकारितायां महनीयं योगदानम्। इयं शोधपत्रिका सम्प्रति षट्त्रिंशद्वर्षे प्रचलति, समुन्मीलयति च संस्कृतविद्यायाः क्षेत्रे समुज्ज्वला अभिनवाश्चानुसन्धानदिशः प्रकटयति च भारतीयप्रज्ञाया उदात्तं रूपम्। अस्या लेखकेषु महामहोपाध्यायवासुदेवविष्णुमिराशी- विद्यानिवासमिश्र-पण्डितबच्चूलालावस्थि-राममूर्तित्रिपाठि-चिन्ताहरणचक्रवर्ती-पुल्लेलश्रीरामचन्द्रुडु-रेवाप्रसादद्विवेदि-अशोकचटर्जीशास्त्रि- प्रभृतयः प्रख्याता विद्वांसः सन्ति।

**आधुनिकसंस्कृतसाहित्यसङ्गोष्ठी-**

दशदिवसीया अखिलभारतीया सङ्गोष्ठीयं श्रीमतो रामज्युपाध्यायस्य सञ्चालकत्वे १९६५तमे ख्रिस्ताब्दे मई मासे आयोजिता। अत्र गोविन्दत्रिगुणायत- चिन्ताहरणचक्रवर्ति- रेवाप्रसाद-

द्विवेदि- राममूर्तिशर्म- प्रभृतयः षष्टिप्रायाः विद्वांसः आधुनिकसंस्कृत-साहित्यमधिकृत्य विविधविषयसंवलितं विमर्शं विदधिरे। सङ्गोष्ठ्यां प्रस्तुतानां लेखानां परस्तात् पुस्तकाकारं सङ्ग्रहः श्रीमता उपाध्यायेन सम्पाद्य प्रकाशितः।

**शिष्यपरम्परा** -

उपाध्यावर्यस्य शिष्येषु बहवः तेषु तेषु भारतीयविश्वविद्यालयेषु महाविद्यालयेषु वा संस्कृतप्राध्यापकपदानि समलङ्कुर्वाणा अस्य गुरुपरम्परां प्रख्यापयन्ति। तेषु स्वर्गीयो हरीन्द्रभूषणजैनः विक्रमविश्वविद्यालयस्य संस्कृतविभागे प्रवाचकपदात् सेवानिवृत्तः प्रातःस्मरणीयतां भजते। डॉ० हीरालालशुक्लः सम्प्रति भोपालनगरस्थे बर्कतुल्लाहविश्वविद्यालये तुलनात्मकभाषासंस्कृतिविभागे आचार्याध्यक्ष-पदाधिष्ठितः। डॉ० रामगोपालमिश्रः दिल्लीविश्वविश्वालये प्राध्यापकः। पण्डितप्रेमनारायणद्विवेदिनः कर्तृत्वं संस्कृतरचनावैशारद्यं च सर्वथा काव्यविदां समाजे सुविदितमेव। डॉ० शिवदर्शनतिवारी दमोहनगरस्थे स्नातकोत्तरमहाविद्यालये आचार्याध्यक्षः, राधावल्लभ- कुसुमभूरिया- आशा -सर्वटे इत्येते सागरविश्वविद्यालयस्य संस्कृतविभागे चाध्यापयन्ति। एवमेवास्य शिष्येषु हिमाचलप्रदेशस्थकेन्द्रियसंस्कृतविद्यापीठे व्याख्याता रामलखनपाण्डेयः, पटियालास्थे पञ्जाबीविश्वविद्यालये संस्कृतविभागे प्रवाचकः इन्द्रमोहनसिंहः, भोपालनगरस्थे बर्कतुल्लाहविश्वविद्यालये तुलनात्मकभाषासंस्कृतिविभागे प्रवाचकपदाधिष्ठितः डॉ० क्षेत्रवासीपण्डा, फैजाबादस्थे साकेत- महाविद्यालये प्राध्यापकः रविनन्दनस्त्रिपाठी, गुनानगरस्थे महाविद्यालये संस्कृतप्राध्यापकः परमानन्दमिश्रः, दमोहनगर-स्थो भागचन्दजैनो भागेन्दुः अन्ये च परःशतं पण्डिताः शिष्परम्परामस्य विस्तारयन्ति। जैनविद्यायाम् अप्रतिमो विद्वन्मनीषी साहित्याचार्यः स्वर्गीयः पण्डितपन्नालालजैनस्तथैव सागरविश्वविद्यालस्य संस्कृतविभागे प्रवाचकपदमलङ्कृत्य सेवानिवृत्ता भवालकरोपाह्वा श्रीमती वनमालापि चास्य निर्देशे पी०एच्०डीत्युपाधये शोधकार्यं सम्पादितवन्तौ।

शङ्करलालस्वर्णकारः, गोहदरसिंहकुरवेती, रामरतनपाण्डेयः अन्ये च केचनास्य शिष्याः प्रशासनिकसेवायामन्येषु विभागेषु कार्यरता अपि अस्मादधिगतान् सत्संस्कारान् पुष्णन्ति।

**अनुसन्धाने अवदानम्**

आधुनिकसंस्कृतसाहित्यमधिकृत्य महान् अध्यवसायः श्रीमता उपाध्यायेन प्रकटीकृतः। वस्तुतो निखिलेऽपि भारते शोधदृशा समकालिकसंस्कृतसाहित्यपरीक्षणेऽयं प्रवर्तकं कार्यं सम्पादयामास। भागद्वये प्रकाशित आधुनिकसंस्कृतनाटक इत्यभिधः ग्रन्थः परःसहस्रं पृष्ठेषु आ षोडशशतकाद् आ विंशशतकाच्च विरचितानां सहस्राधिकरूपकाणां परिचयं ददानोऽस्य वैदुषीमनुसन्धाननैपुणीं च प्रकटीकरोति।

नाट्यशास्त्रसिद्धान्तानामनुशीलनेऽनेन नवीना दिश उन्मीलिताः। धनञ्जयादिभिराचार्यैर्विहितस्य भरतातिक्रमस्य परीक्षणं विधाय नवीना उद्भावना अपि प्रदर्शिताः। तथाहि- पिशलप्रभृतिपाश्चात्त्यविदुषां मतानि प्रत्याख्याय छायानाटकस्य यथायथं स्वरूपमनेनेदम्प्रथमतयोन्मीलितम्। भारतीयसंस्कृतेरध्येतृषु व्याख्यातृषु चायं सर्वथा अग्रगण्यः।

संस्कृतसाहित्यसागरस्य गम्भीरं मन्थनं विधायानेन संस्कृतेरनर्घानि रत्नानि आविष्कृतानि, साक्षात्कृताश्च च प्राचीनानामुदात्तजीवनादर्शाः।

उपाध्यायवर्यः पुरातनादर्शानां, पुरातनगुरुपरम्पराया चारित्रिकदृढतायाश्च मानदण्ड एवेति न संशीतिः।

----ooo----

# श्रीरामज्युपाध्यायानां कृतयः

ग्रन्थाः

१. भारतस्य सांस्कृतिकनिधि : (पुरस्कृतः)
२. भारत की संस्कृतिसाधना
३. संस्कृत साहित्य का आलोचनात्मक इतिहास – भागद्वये
४. संस्कृतसूक्तिरत्नाकरः
५. भारत की सामाजिक संस्कृति
६. द्वा सुपर्णा – संस्कृत उपन्यासः
७. संस्कृत के महाकवि और काव्य (सहसम्पादनम्)
८. धम्मपद (सं.तथा अनु.)
९. संस्कृत व्याकरण और निबन्ध
१०. संस्कृत निबन्धावली (सम्पादनम्)
११. भारतीय संस्कृति का उत्थान (हिन्द्याम्)
१२. मनुस्मृतिनवनीतम् (सं.)
१३. संस्कृतमहाकाव्यादर्शः (सं.)
१४. भासनाटकचक्रम् (सं.)

१५. महाभारतीयसंस्कृतिकोशः (सं.)
१६. नाट्यशास्त्रीयानुसन्धानम्
१७. दशरूपकतत्त्वदर्शनम्
१८. नाट्यशास्त्रीय-प्रयोगविज्ञानम्
१९. नाट्यशास्त्रीय पारिभाषिकशब्दानुक्रमणिका (सं.)
२०. मध्यकालिकः संस्कृतनाटकालोकः
२१. प्राचीन भारतीय साहित्य की सांस्कृतिक भूमिका (हिन्द्याम्)
२२. आधुनिकसंस्कृतनाटक (पुरस्कृतः)
२३. Sanskrit and Prakrit Mahākāvyas
२४. सत्यहरिश्चन्द्रादयम्-संस्कृतमाख्यानम्
२५. भारत की प्राचीन संस्कृति (पुरस्कृतः)
२६. महाकविः कालिदास (पुरस्कृतः)
२७. पूर्वपथ (नाटकम्-हिन्द्याम्)
२८. विंशशताब्दिकः संस्कृतनाटकालोकः
२९. सीताचरितम् (नाटकम्)
३०. केकेयीचरितम् (नाटकम्)
३१. भारतीयसंस्कृतिसौरभम्
३२. विश्वमानवसंस्कृतिः

# श्रीरामजी उपाध्यायानां सागरिकायां प्रकाशिताः लेखाः/ग्रन्थाः

सङ्कलयिता : डॉ.धर्मेन्द्रकुमार

| लेखः/ग्रन्थः | | अंकाः |
|---|---|---|
| १. | संस्कृतस्यावनतिः पुनरुत्थानञ्च | १.१ |
| २. | राजेन्द्रप्रसादचरितम् | १.२ |
| ३. | तस्माद् युध्यस्व भारत | १.२ |
| ४. | आधुनिकशिक्षानीतिः | २.१ |
| ५. | भवभूतिर्विशिष्यते | २.४ |
| ६. | राजतरंगिणी | ३.३ |
| ७. | संस्कृतशिक्षणस्य कतिपय-समस्याः | ४.२ |
| ८. | नथमल-ब्रह्मचारिण आगमग्रन्थो मुखभाषा च | ४.३ |
| ९. | वैदिककालीनं शिल्पम् | ५.१ |
| १०. | ऋग्वैदिकचरित्रनिर्माणम् | ५.१ |

# आङ्ग्लभाषायां प्रकाशितौ शोधलेखौ

1. Kārya Among the Elements of Plot - Annals of Bhandarkar Oriental Research Institute Diamond Jubilee Vol. 1977-78.
2. Some Problems of Sanskrit Dramaturgy : Surbhārati, Journal of Sanskrit Parishad, Osmania University, Hyderabad, Vol. I.

# श्रीमतां रामज्युपाध्यायानां निर्देशे सम्पन्नाः शोधप्रबन्धाः

| | शोधकर्ता | विषयः | वर्षः |
|---|---|---|---|
| १. | हरीन्द्रभूषण जैन | जैन अंगों में मानव व्यक्तित्व का विकास | १९५७ |
| २. | कृष्णा सिन्हा | गुप्तकालीन नाटकों के नारीपात्र | १९५९ |
| ३. | विष्णुदेव शर्मा | ऋग्वेदकालीन आचार | १९६० |
| ४. | वनमाला भवालकर | महाभारत में नारी (प्रकाशितः) | १९६१ |
| ५. | रामगोपाल मिश्र | संस्कृत पत्रकारिता का विकास (प्रकाशितः) | १९६४ |
| ६. | पद्मा भार्गव | पुराणों में सामाजिक उत्सव | १९६४ |
| ७. | हीरालाल शुक्ल | अप्पाशास्त्रीराशिवडेकरः कृतियों का अध्ययन | १९६४ |
| ८. | शशिबाला | महाभारत में धर्म | १९६४ |

| | | | |
|---|---|---|---|
| ९. | इन्द्रजित उप्पल | महाभारत में शिक्षा | १९६५ |
| १०. | प्रेमलता पचौरी | महाभारत में आचार | १९६५ |
| ११. | किशोर त्रिपाठी | भागवत का सांस्कृतिक अनुशीलन | १९६५ |
| १२. | प्रेमनारायण द्विवेद्वी | वैष्णव पुराणों में आचार | १९६५ |
| १३. | गोतमप्रसाद मिश्र | संस्कृत साहित्य में परिजात-हरण कथा का विकास | १९६५ |
| १४. | कन्हैया द्विवेदी | बीसवीं शती में म.प्र. में संस्कृत अध्ययन का विकास | १९६५ |
| १५. | साधना गुप्ता | प्रमुख उपनिषदों में सांस्कृतिक प्रवृत्तियाँ | १९६६ |
| १६. | कृष्णकान्ता | क्षमाराव : कृतियों का अध्ययन | १९६६ |
| १७. | पी.डी.जैन | आचारांग सूत्र : एक अध्ययन | १९६६ |
| १८. | शिवदर्शन तिवारी | १९ वीं शताब्दी में संस्कृत रूपकों का विकास | १९६७ |
| १९. | मनोरमा सक्सेना | यतींद्रविमल चौधुरी-कृतियों का अध्ययन | १९६७ |
| २०. | कृष्णा खरे | १९ वीं शती में संस्कृत गीति काव्य का विकास | १९६७ |
| २१. | माया तिवारी | २०वीं शती में संस्कृत गीति काव्य का विकास | १९६७ |
| २२. | विजय लक्ष्मी कक्कड़ | संस्कृत साहित्य में गंगावतरण कथा | १९६८ |

| | | |
|---|---|---|
| २३. गौतम प्रसाद शुक्ल | अमरकोष में भारतीय संस्कृति | १६६८ |
| २४. गणेश प्रसाद | १६वीं शताब्दी के संस्कृत रूपक | १६७१ |
| २५. सुदर्शन त्रिपाठी | महालिंग शास्त्री-व्यक्तित्व और कृतित्व | १६७१ |
| २६. अच्युतानंद झा | रामावतार शर्मा | १६७० |
| २७. शंकरलाल स्वर्णकार | १७वीं शताब्दी के संस्कृत रूपक | १६७० |
| २८. बिहारीलाल नागार्च | १८ वीं शताब्दी के संस्कृत रूपक | १६७० |
| २६. गुलाबचंद जैन | २०वीं शताब्दी के संस्कृत रूपक | १६७० |
| ३०. राधावल्लभ त्रिपाठी | संस्कृत कवियों के व्यक्तित्व का विकास (प्रकाशितः) | १६७२ |
| ३१. कन्हैया पांडेय | १६वीं शती के संस्कृत महाकाव्य | १६७३ |
| ३२. पन्नालाल जैन | जीवन्धरचम्पू : एक अध्ययन (प्रकाशितः) | १६७३ |
| ३३. रंजना मिश्र | संस्कृत नाटकों में प्रकृति चित्रण | १६७५ |
| ३४. गायत्री देव | संस्कृत नाटकों में आचार | १६७५ |
| ३५. जय प्रसाद वार्ष्णेय | महाभारत और अर्थशास्त्र का तुलनात्मक अध्ययन | १६७६ |
| ३६. वीरेन्द्र पटेल | महाभारत में प्रकृति चित्रण | १६७६ |
| ३७. कु.वीणा ओखदे | संस्कृत में निबन्ध शैली का विकास | १६७६ |

| | | |
|---|---|---|
| ३८. रविनन्दन त्रिपाठी | संस्कृत में व्यायोग का विकास | १९७७ |
| ३९. कु.कुसुम भूरिया | कालिदास का नाट्य-शास्त्रीय अनुशीलन | १९७८ |
| ४०. श्री इन्द्रमोहन | भास का नाट्यशास्त्रीय अनुशीलन | १९७९ |
| ४१. कु.गायत्री श्रीवास्तव | संस्कृत साहित्य में ऐतिहासिक नाटक का विकास | १९८० |
| ४२. श्रीमती अर्चना मिश्रा | महाभारत में जीवन मूल्य | १९८० |
| ४३. गोपीकृष्ण द्विवेदी | महाभारत में संग्रामनीति | १९८० |
| ४४. कु.आशा सर्वटे | डॉ.व्ही.राघवन्-व्यक्तित्व तथा कृतित्व (प्रकाशितः) | १९८५ |
| ४५. रामलखन पाण्डेय | सत्रहवीं शताब्दी के संस्कृत महाकाव्य | १९८५ |

# श्रीरामज्युपाध्यायसाहित्यसमीक्षणम्

-रमाकान्तपाण्डेयः

१९२० तमे क्राइष्टाब्दे लब्धजनेरुपाध्यायस्य श्रीमद्रामजी-महाभागस्य उत्तरप्रदेशस्य बलियाजनपदान्तर्वर्तिनि मलेजीतिग्राम-वास्तव्यस्य नाम कः खलु सुरभारतीसमुपासको न जानाति । पित्रा महावीरोपाध्यायेन लालितः लब्धसंस्कारश्चायं वटुः स्वग्रामशालायां प्राथमिककक्षासु पठन् किमप्यपूर्वमेव सारस्वतं नैपुण्यं प्रदर्शितवानिति जनकेनायमुच्चशिक्षाप्राप्त्यर्थं वाराणसीं प्रेषितः। तत्र श्रीलक्ष्मणशास्त्रितैलङ्गानां स्वनामधन्यविदुषां श्रीचरणेषु स्थित्वा व्याकरणादिशास्त्राण्यपठत् । ततश्च प्राच्यपाश्चात्येत्युभयविधविद्या- विलासभूमित्वेन प्रसिद्धं प्रयागनगरं समवाप्य आधुनिकदृष्ट्या शास्त्रसमीक्षणसमीहया बाबूराम-सक्सेनामहाभागानाम् अन्तेवासित्वं स्वीकृतवान् । समधिगत-वैदुषीकस्ततश्चायं ७.७.१९४७ तमे दिनाङ्के सागरविश्व-विद्यालयस्य संस्थापककुलपतिना सरहरीसिंहगौरमहाभागेन स्वविश्वविद्यालयस्य संस्कृतविभागे व्याख्यातृपदे नियोजितः । यथैव सुरभारतीं तथैव प्राकृतभारतीं सेवमानः उपाध्यायोऽयम् "उपाध्याय " इति स्वोपनाम सार्थकीकुर्वन् विद्यार्थिवर्गे विद्वद्वर्गे च महतीं प्रसिद्धिं प्राप । न केवलमध्यापनपाटवेन अनुसन्धानपटुतया

चाप्ययं स्वीयामक्षुण्णां कीर्तिं प्रासारयदिति अज्ञानक्षारपूरितं सागरं महानुभावस्यास्य संसर्गेण काशीत्वेन पर्यणमत् मध्यप्रदेशे । अस्यानुसन्धानाध्यापनचातुरीं वीक्ष्य विश्वविद्यालयप्रशासनेन अयमत्रैव ११.७.१९५७ तमे दिनाङ्के प्रवाचकपदे नियुक्तः । अनन्तरं च १.९.१९६३ तमे दिनाङ्के स्ववैदुष्यप्रभावाद् आचार्यपदं संप्राप्य १.७.१९८० दिनाङ्कं यावद् अस्य विभागस्य आध्यक्ष्यमुद्वहन्नसौ अस्मिन्नेव दिनाङ्के विश्वविद्यालयसेवातो निवृत्तः ।

विविधकाव्यकाव्यशास्त्रीयग्रन्थसमीक्षकपदवीं समारूढोऽयं विशेषतो नाट्यशास्त्रीयपरम्पराया उत्थाने भारतीयसंस्कृतेश्च संरक्षणे दत्तावधानो दृश्यते । क्वचित् काव्यप्रणयनेऽपि रुचिरस्य विलोक्यते । तद्यथा राजेन्द्रस्य युद्धोद्योग इति कवितायाम् -

विश्ववन्द्यभारतदेशः,
हिंसां प्रति निष्कामः ।
न भवेत् सेना
आदर्शः संस्थाप्यः ।।

अस्य कृतयः त्रिधा विभिद्यन्ते -

१- भारतीयसंस्कृतिसम्बन्धिनो ग्रन्थाः
२- नाटकोपन्यासग्रन्थाः
३- समीक्षाग्रन्थाः अनुसन्धानग्रन्थाश्च

**१- भारतीयसंस्कृतिसम्बन्धिनो ग्रन्थाः -**

प्राचीनभारतीयसाहित्य की सांस्कृतिकभूमिका इति

महाप्रबन्धमुपस्थाप्य श्रीमानुपाध्यायो लब्धवान् सागर-विश्वविद्यालयस्य "डी.लिट्." इत्युपाधिम् । भारतीयसंस्कृति-सौरभम् इत्यस्मिन् महाग्रन्थे भारतीयसंस्कृतेः नानारूपाणि प्रतिपाद्य विदेशेषु वर्णव्यवस्था ,विदेशेषु अवगुण्ठनम् , अल्लाहमन्दिरम् , ग्रीकवैदिकधर्मयोः साम्यम् , ईरान-भारतयोः सम्बन्धाः , चीनदेशेन सम्बन्धः, वैदेशिकैः संव्यवहारः इत्यादिविविधविषयप्रतिपादनव्याजेन संस्कृतेरस्याः विश्वमुखत्वं निरूपितवान् ।संस्कृतिसम्बन्धिनोऽन्येऽपि चत्वारो ग्रन्थाः विदुषोऽस्य लभ्यन्ते -

१- प्राचीनभारतीयसंस्कृतिः

२- संस्कृतिसाधना

३-भारतस्य सांस्कृतिकनिधिः

४- भारतीय संस्कृति का उत्थान

**२- नाटकोपन्यासग्रन्थाः -**

श्रीमानुपाध्यायः कुशलश्चिन्तको निर्भीकश्च लेखको विद्यते । अनेन प्रणीतं नाटकद्वयं "सीताभ्युदयम् " "कैकेयीविजयम् " चेति प्रसिद्धम् । सीताचरितमुपजीव्य प्रणीते सीताभ्युदयम् इति षडङ्के नाटके लङ्काविजयानन्तरं रजकमुखादुत्थापितां सीताविषयिणीं विसङ्गतिमपाकर्तुं स्वकल्पितां कथां योजयति कविः। सीतायाः परित्यागः भारतीयसंस्कृतेः कलङ्कत्वेन वदन्ति समीक्षकाः इति उपाध्यायवर्योऽयं तद्दूरीकर्तुं तत्र परिवर्तनं करोति । रामेण सीता न परित्यक्ता , सा तु मुनेः वसिष्ठस्य आज्ञया आदिकवेः वाल्मीक्याश्रमे निवासं कृतवती । अभुक्तमूलनक्षत्रे पुत्रजननापराधं शमयितुमेव तत्र सीतायाः निवासः कल्पितः ।

एवमेव सीतायाः पातालगमनमनुचितं मन्वानः उपाध्यायकविस्तस्याः मात्रा पृथिव्या सह तत्र गमनं निरूपयति । भारतीयसंस्कृतेः रामकथामाध्यमेन प्रचार एव सीतायास्तत्र गमनस्य प्रयोजनत्वेन निरूपितः कविना ।

कैकेयीविजयं नाम कवेरुपाध्यायस्य द्वितीया नाट्यकृतिः। पञ्चाङ्केऽस्मिन् नाटके कैकेय्या निर्दुष्टमुदारचरितं वर्णितं कविना पौराणिकाख्यानानामुपजीव्यतयेति कैकेयीचरितस्य कश्चन अज्ञातपक्षो ग्रन्थेनानेनोपस्थाप्यते । ग्रन्थस्य आमुखे स्वपक्षसाधनाय कथ्यस्य विस्ताराय च तत्तत्पौराणिकोपाख्यानानां कैकेयीचरितसम्बन्धिनां चर्चा कृता ।

ब्रह्मणः प्रेरणयैव कैकेयी रामं वनं प्रेषयितुं प्रवृत्ता बभूव । नाटकीयसङ्घटनानां संयोजनेऽपीह कविर्विशिष्यते । संस्कृतसाहित्ये कैकेयी प्रथमवीराङ्गनारूपेण प्रतिष्ठापिता कविना उपाध्यायेन । राष्ट्ररक्षायै तया नैकानि कार्याणि सम्पादितानि ।

द्वासुपर्णा सत्यहरिश्चन्द्रोदयं चेति द्वावुपन्यासौ कवेः प्रकाशितौ। द्वासुपर्णायां पुराणप्रसिद्धां कृष्णसुदाम्नोः मैत्रीकथामाश्रित्य महात्मगान्धिनः ग्रामाभ्युदययोजनां सुदाम्नः धर्मपत्न्या कौमुद्या सञ्चालितामभिनवपरिवर्तनरूपेण वर्णितवान् कविः ।

सत्यहरिश्चन्द्रोदयेऽपि केषाञ्चित् तत्त्वानां परिवर्तनं लक्ष्यते। तद्यथा -

१ - पुत्रलाभार्थं वरुणानुग्रहमुद्दिश्य हरिश्चन्द्रोऽयोध्यातः सुन्दरवनं पद्भ्यां गत्वा तत्र तपोऽतप्यतेति कथारम्भे नव्यं तत्त्वं प्ररोचितम्।

२ - रोहिताश्वस्य उपनयनकालतोऽन्तेवासीभूय वरुणकुले समावर्तनं यावदध्ययनम् ।

३ - अत्रान्तरे मायारोहितो हरिश्चन्द्राय वरुणं नियुङ्क्ते ।

४ - त्रेतायुगे सत्यस्य ह्रासो जात इति संवादेन चिन्तितो ब्रह्मा देवर्षीन् परामृश्य विश्वामित्रं हरिश्चन्द्रस्य घोरपरीक्षार्थं नियोजयति ।

५ - काशिराजो हरिश्चन्द्रस्य स्वागतार्थं काशीनगरीं सज्जयामास । हरिश्चन्द्रं स्वातिथिं विधाय विश्वामित्राय लक्षमुद्रां दातुं योजनां विदधाति।

६ - विश्वामित्रः काशिराजयोजनां योगदृष्ट्या विज्ञाय हरिश्चन्द्रादीनां दासरूपं मायया विदधाति ।

७ - महाश्मशानस्य सौन्दर्यं संवर्धयितुकामो हरिश्चन्द्रः सहकर्मिणां साहाय्येन असाधारणं साफल्यमवाप्नोति ।

८ - हरिश्चन्द्रो रोहिताश्वस्य शवं स्वयमेव गङ्गामध्ये प्रवाहयति ।

९ - वरुणकुले विनीतो हरिश्चन्द्रपुत्रो रोहिताश्वो गुरूणामादेशेन निश्चेतनं पितरं तटं प्रापयति ।

१० - ब्रह्मादयो देवास्तस्मै परीक्षा-विवरणमुद्घाटयन्ति सदेहं हरिश्चन्द्रपरिवारं स्वर्गलोकं च नयन्ति ।

एवं पारम्परिककथासु युगानुरूपत्वप्रतिपादनमेव श्रीमदुपाध्यायस्य काव्यप्रणयनप्रयोजनमिति वक्तुं शक्यते ।

**३-समीक्षाग्रन्थाः अनुसन्धानग्रन्थाश्च -**

श्रीमदुपाध्यायेन हिन्दी-संस्कृत-आङ्ग्लभाषासु पञ्चाशत्प्राया ग्रन्थाः प्रणीताः। तेषु दशरूपकतत्त्वदर्शनम्, नाट्यशास्त्रीयानुसन्धानम् चेति द्वौ ग्रन्थौ विद्वत्कुले समधिकमभिनन्द्येते । उपाध्यायमहाभागानामन्येऽपि केचन प्रसिद्धाः ग्रन्थाः सन्ति -

१-संस्कृतसाहित्य का इतिहास (भागद्वयात्मकम् )

२- संस्कृत के महाकाव्य और कवि

३ - महाभारतीयसंस्कृतिकोशः

४ - नाट्यशास्त्रीयपारिभाषिकशब्दानुक्रमणिका

५ - मध्यकालिकः संस्कृतनाटकालोकः

६ - आधुनिकसंस्कृतनाटक

७ - नाट्यशास्त्रीयप्रयोगविज्ञानम्

८ - महाकवि कालिदास

९ - विंशशताब्दिकसंस्कृतनाटकालोकः

१० - Sanskrit and Prakrit Mahakavyas

११-भारतीयसंस्कृतिसौरभम्

भारतीयसंस्कृतेः समुपासकोऽयं मनीषी अद्यापि सारस्वतसेवायां संलग्नो विद्यते । विविधसंस्कृतिविरोधिष्वाख्यानेषु परिवर्तनं परिकल्प्य कविरयं भारतीयां संस्कृतिं संस्कृतसाहित्यं च नव्यभूमौ नयतीति दिक् ।

# महात्मनो बुद्धस्य दर्शनम्,आधुनिकं विश्वं च

डॉ० शङ्करदयालः शर्मा

सारनाथमागत्य अतीव प्रसन्नतामनुभवामि। अत्र महर्षिभिर्विचक्षणैश्च मानवजीवनस्य लौकिका आध्यात्मिकाश्च पक्षाः सुविचारिताः। अस्या एव भूमेः भगवतो बुद्धस्य शान्तिसद्भावनयोर्मानवीयः सन्देशो लोके प्रकाशं गतः। अनेन संवर्धितमस्माकं प्राचीनं जीवनमूल्यम्, सभ्यतासंस्कृतिश्च दार्ढ्यमापादिते। तस्य शाश्वतेन सन्देशेन युगे युगे सम्प्रेरिता मानवजातिः। भगवता बुद्धेन उपदिष्टानि करुणा- सर्वभूतहितैषिता- समता- मानवीयगौरवादि- सार्वभौमानि मूल्यानि अस्माकं समाजस्य राष्ट्रियतायाः व्यक्तित्वस्य च सुदृढं नैतिकम् आधारं द्रढयन्ति। इमान्येव अस्मत्स्वातन्त्र्यसङ्ग्रामे सिद्धान्तवाहीनि आसन्। इमानि मूल्यानि अस्माकं राष्ट्रचिह्ने अशोकसिंहध्वजे अस्मत्सार्वभौमत्वप्रतीकानि सन्ति। चत्वारः सिंहाः चतुर्दिङ्मुखाः विश्वं प्रति भारतस्य सन्देशमिव ददति। सर्वसमादृतमस्माकं राष्ट्रध्वजं जीवन-नियम-सत्यमयं धर्मचक्रं विभूषयतीव।

गौरवास्पदमिदं मे सारनाथागमनं, यत्र प्रवर्तितं प्रथमं धर्मचक्रं भगवता बुद्धेन। अवसरोऽयं मत्कृते बौद्धदर्शनस्य अध्यापकैः छात्रैश्च सह परस्परविचारविनिमयाय। प्रसन्नं नश्चेतो यत् केन्द्रिय-उच्च-तिब्बती-शिक्षा संस्थानेन परम्परागतबौद्धशिक्षापद्धतिः पुनरुज्जीव्यते। धन्यवादोऽस्ति मे तान् प्रति ये विभिन्नबौद्धदर्शनपक्षान् विवेचितवन्तः, अर्जितवन्तो विद्याम्, सञ्चितवन्तो ज्ञानम्, अथ समाद्रियन्तेऽत्र दीक्षान्तसमारोहे।

सम्प्रति बौद्धदर्शनस्य प्रासङ्गिकतैव विचार्यते मया। यथा यथा पठामि बुद्धदेशनां तथा तथा वर्तमानसमाजस्य जीवनस्य च कृते

तदर्थस्य गम्भीरतां महत्त्वं चानुभवामि । तथागतसन्देशः न केवलं व्यक्तिगताचरणार्थं परस्परव्यवहारार्थं वा महत्त्वपूर्णः अपितु अस्त्यस्य विशिष्टं महत्त्वं अस्माकं समाजकृते, राष्ट्रकृते, राष्ट्रीयसम्बन्धव्यवस्थापनकृते, वस्तुतस्तु समग्रमानवतायाः कृते ।

शाक्यमुनिः मनुष्याणां विचारेषु क्रियासु च मनसः पूर्वङ्गमत्वं प्रतिपादयति । सम्यक् चरित्रं मनसः शुद्ध्यैवाप्तुं शक्यते । आजीवनं स्वकीयचरितस्य विचारस्य च शुद्ध्या सः प्रदर्शितवान् यत् आत्मसाक्षात्कारमार्गो निर्वाणम् मनसः शुद्ध्यैव प्राप्तुं शक्यते । धम्मपदस्य प्रशस्ता प्रथमा एव गाथा विद्यते—

मनोपुब्बङ्गमा धम्मा मनोसेट्ठा मनोमया ।
मनसा चे पदुट्ठेन भासति वा करोति वा ।
ततो नं दुःखमन्वेति चक्कंव वहतो पदम् ।।

द्वितीया गाथाऽस्ति—

मनोपुब्बंगमा धम्मा मनोसेट्ठा मनोमया ।
मनसा चे पसन्नेन भासति वा करोति वा ।
ततो नं सुखमन्वेति छायाव अनपायिनी ।।

स्मरणीयो स सन्दर्भः कालश्च यदा बुद्ध एतद्दर्शनं दिष्टवान् । आसीत् स कालो यदा प्रतिष्ठिता धर्माः संस्थापिताः, यत्र अन्धविश्वासः अन्धश्रद्धा आभिजात्याश्रिता अभवन् प्रतिष्ठाधारभूमयः । यथा लिखितम् पण्डित-जवाहरलालनेहरूमहोदयेन स्वकीये ग्रन्थे 'डिस्कवरी आफ् इण्डिया' इति नाम्नि ।

''बुद्धेन प्राप्तं तत् साहसं येन प्रचलितधर्माः, अन्धविश्वासः, पौरोहित्यकर्मकाण्डः वैयक्तिको रागश्च घातिताः । स तत्त्वैकपरान् परमार्थविषयकान् विचारान्, कौतुकक्रियाः, प्रदर्शनानि, अतिमानवीयानि कृत्यानि च विगर्हितवान् । सः तर्कं, न्यायं अनुभवं च समर्थितवान्, नैतिकमूल्येषु तेन बलं दत्तम्, तस्य विचारपद्धतिश्चासीत् मनोवैज्ञानिकी । तस्य विचाराः अनाघ्रेय आध्यात्मिकवितण्डानन्तरम् पर्वताद् आगच्छन्तः शुद्धवायुप्रश्वासा इव आह्लादकाः'' ।

अयमासीत् स सन्दर्भो यदा बुद्धेन प्रवर्तितं स्वकीयं सुविचारितं चरित्र-विचार-दर्शनम् । स सर्वान् जनान् उपादिशद् यत् न केवलं स्व-स्व-दर्शन-व्यवहारेषु स्तरीयो विवेक: तर्को वाश्रयणीय: अपितु तं प्रत्यपि । अङ्गुत्तरनिकाये बुद्ध: कालामजनान् उक्तवान्—

एस तुम्हे, कालामा, मा अनुस्सवेन, मा परम्पराय, मा इतिकिरियाय, मा पिटकसम्पदानेन, मा तक्कहेतु, मा भयहेतु, मा आकारपरिवितक्केन मा भव्वरूपताय, मा समणो नो गरुति । यदा तुम्हे, कालामा, अत्तनाव जानेय्याथ—'इमे धम्मा अकुसला, इमे धम्मा सावज्जा, इमे धम्मा विञ्ञुगरहिता, इमे धम्मा....अहिताय दुक्खाय संवत्तन्ति । इति ।

एवंविध आसीत् तस्य विश्वासो यत्रोदारविचाराणां प्रामुख्यम्, यत: स आदिष्टवान् जनान् यत्ते अविचारपूर्वकं तस्यापि वचांसि न स्वीकुर्यु: अस्ति तद्वचनं शान्तरक्षितस्य तत्त्वसङ्ग्रहे-

तापाच्छेदाच् च निकषात् सुवर्णमिव पण्डितै: ।
परीक्ष्य भिक्षवो ग्राह्यं मद्वचो न तु गौरवात् ।।

एभि:सुशब्दैर्व्यज्यते भगवतो बुद्धस्य विनम्रता महत्ता च तदुपदेशस्य । केवलं बुद्ध एव, य: सर्वम् अहङ्कारं रागं च व्यापोहत, स एव एतादृशीं विनम्रतां प्रदर्शयितुं समर्थ: ।

प्रभवति प्रवहति च बुद्धदर्शनसारो मध्यमप्रतिपद: यां स: स्वकीये धर्मचक्रप्रवर्तने उपदिष्टवान् । अस्मिन् एव पुण्यतमे सारनाथे मृगदाये स उवाच—

'एते ते भिक्खवे, उभो अन्ते अनुपगम्म मज्झिमापटिपदा तथागतेन अभिसम्बुद्धा चक्खुकरणी ञाणकरणी उपसमाय अभिञ्ञाय सम्बोधाया निब्बानाय संवत्तति ।'

तदुपदेशेषु अतीव सशक्तम् उद्बोधनं जनाय समाजाय च विद्यते यत् जीवनस्य प्रतिक्षेत्रे असन्तुलनं विहाय अन्तद्वयं प्रहातव्यम् । जनकृते सम्यक्चर्या विद्यते कर्मविचारयो: समञ्जस-सन्तुलित-अनुग्राभ्यासात् । यथोक्तं विसुद्धिमग्गे—

चतुस्सच्चपटिवेधाय पटिपन्नस्स योगिनो निब्बानारम्बणं

अविज्जानुसयसमुग्घातकं पञ्ञाचक्खु सम्मादिट्ठि ।
मिच्छाहसङ्कप्पनिघातकं चेतसो निब्बानंपदाभिनिरोपनं सम्मासङ्कप्पां ।
वचोदुच्चरितसमुग्घातिका मिच्छावाचाय विरति सम्मावाचा नाम ।
मिच्छाकम्मन्तसमुच्छेदिका पाणातिपातादिविरति सम्माकम्मन्तो नाम ।
कुहनादिउपच्छेदिका मिच्छाजीवविरति, सो सम्माआजीवो नाम ।
कोसज्जसमुच्छेदको विरियारम्भो, एस सम्मावायामो नाम ।
मिच्छासतिविनिद्धुननो चेतसो असम्मोसो सम्मासति नाम ।
मिच्छासमाधिविनिहंसिका चित्तेकग्गता सम्मासमाधि नाम ।

सत्यान्वेषिणां कृते एवं विनिदर्शित आष्टाङ्गिक आर्यमार्गः । सम्यक्दृष्टिः तन्मार्गं प्रकाशयिष्यति, सम्यक्सङ्कल्पो भविष्यति निदर्शकः, सम्यक्वाक् भविष्यति तस्य मार्गे विश्रामस्थलम्, तद्गतिः ऋजु भविष्यति, यतो हि इदं सम्यगाचरणम्....तस्य सम्यगाजीवो भविष्यति पाथेयः, सम्यक्व्यायामः तस्य पदानि, सम्यक्विचाराः तस्य श्वासः, सम्यक्समाधिश्च तां शान्तिं प्रदास्यति या तत्पदचिह्नानि अनुगच्छति ।

एवमेव बुद्धेन आत्मनियन्त्रणाय बलमाहितम् । तेनोपदिष्टम्—

चक्खुना संवरो साधु साधु सोतेन संवरो ।
घानेन संवरो साधु साधु जिव्हाय संवरो ।।
कायेन संवरो साधु साधु वाचाय संवरो ।
मनसा संवरो साधु साधु सब्बत्थसंवरो ।
सब्बत्थ संवुतो भिक्खु सब्बदुक्खा पमुच्चति ।।

धम्मपद २५. (१) ३६०, ३६१

बुद्धोपदेशा आसन् न सब्बपापस्स अकरणाय, कुशलस्य सम्पादनाय, चित्तशुद्धया तद्विशोधनाय । तदेव दर्शनं अस्याम् धम्मपदगाथायां व्यञ्जितम्—

सब्बपापस्स अकरणं कुसलस्य उपसंपदा ।
सचित्तपरियोदपनं एतं बुद्धान सासनं ।।

धम्मपद १४ (४) १८३

इमे बौद्धसिद्धान्ताः न केवलम् एकस्यैव जनस्य दुःख-निराकर्त्तुकामस्य निर्वाणकामस्य वा कृते हितावहाः, अपितु सम्पूर्ण-समाजस्य अभ्युदयाय समृद्धये च समानतया महत्त्वपूर्णाः सन्ति । एक-

गाप्र्कृत तु मध्यमाप्रतिपद् अथवा उभयान्तप्रहाणं एकां राजनीतिकीं प्रक्रियां निर्दिशति या परस्परसंवाद-सहयोग-समन्वयान् आश्रिता । अत्र समाहितः स प्रयासः यत्र अधिकतमजनानां अधिकतमं हितं समन्वितम्। अत्र विद्यते तर्कविवेकाश्रितः स प्रजातान्त्रिकः संवादोपसंवादो येन लोकहितकारिणो विषया सर्वसम्मत्या निर्णेतुं शक्यन्ते ।

महापरिनिब्बानसुत्ते क्षान्तिम् भिक्षून् उपदिशन् बुद्धो यदवदत् तत्तु प्रजातान्त्रिकसमाजरचनाकृते महाविधायितन्त्रं भवितुमर्हति । ततोऽहं वक्ष्ये एकमुद्धरणं यद् अस्माकं कृते निर्विशेषमहत्त्वपूर्णं विद्यते यतो यतामहे वयम् प्रजातान्त्रिकमार्गानुगमनाय । अस्मिन् उद्धरणे विनिविष्टो गम्भीरोऽर्थः य अपेक्षतेऽवधानं विवेचनां व्यवहाराचरणञ्च । तदुद्धरणं तु इदम्—

यावकीवं च भिक्खवे, भिक्खू अभिण्हं सन्निपाता सन्निपातबहुला भविस्सन्ति ।

यावकीवं च भिक्खवे, भिक्खू समग्गा सन्निपतिस्सन्ति, समग्गा वुट्ठहिस्सन्ति, समग्गा सङ्घकरणीयानि करिस्सन्ति ।

यावकीवं च भिक्खवे, भिक्खू अपञ्ञत्तं न पञ्ञपेस्सन्ति, पञ्ञत्तं न समुच्छिन्दिस्सन्ति, यथा पञ्ञत्तेसु सिक्खापदेसु समादाय वत्तिस्सन्ति ।

यावकीवं च, भिक्खवे, भिक्खू ये ते भिक्खू थेरा रत्तञ्ञू चिरपब्बजिता
सङ्घपितरो सङ्घपरिणायका ते सक्करिस्सन्ति गरुं करिस्सन्ति मानेस्सन्ति
पूजेस्सन्ति तेसं च सोतब्बं मञ्ञिस्सन्ति ।

यावकीवं च, भिक्खवे, भिक्खू उप्पन्नाय तण्हाय पोनोब्भविकाय न वसं गच्छिस्सन्ति... ।

यावकीवं च, भिक्खवे, भिक्खू आरञ्ञकेसु सेनासनेसु सापेक्खा भविस्सन्ति ।

यावकीवं च, भिक्खवे, भिक्खू पच्चत्तञ्ञेव सतिं उपत्थपेस्सन्ति'', किन्ति अनागता च पेसला सब्रह्मचारी आगच्छेय्युं, आगता चपेसला सब्रह्मचारी फासु विहरेय्युं' ति ।

यावकीवं च, भिक्खवे, इमे सत्त अपरिहानिया धम्मा भिक्खुसुठस्सन्ति
इमेसु च सत्तसु अपरिहानियेसु धम्मेसु भिक्खू सन्दिस्सिस्सन्ति, वुद्धियेव भिक्खवे, भिक्खूनं पाटिकङ्खा, नो परिहानि ।

सम्यक्कर्मान्त-प्रजातान्त्रिकमूल्योपदेशनोपरि बलाधानातिरिक्तम् इयमासीत् बुद्धस्य दृढा अवधारणा यत् सङ्घव्यवस्थाकृते एकस्मिन्नेव जने सर्वाधिकारो न न्यस्तव्यः । शिष्यैः प्रष्टे सति यत् को भविष्यति मार्गोपदेष्टा बुद्धानन्तरम्, स उवाच 'धर्म' इति, धर्मविनय एव चरमः । इयं देशना या पञ्चशतोत्तरद्विसहस्रवर्षेभ्योऽपि पुरातनी, संभवतो न कदापि तथा समीचीना यथा सम्प्रति विद्यते । विराजते इयं अस्माकं संविधानेषु स्पन्दनशीलासु प्रजातान्त्रिकसंस्थासु च । सा आस्ते अस्माकं निरवच्छिन्नप्रेरणास्रोतः मार्गदर्शिका च । इदं तु बहुषु एकम् उदाहरणं मया प्रस्तुतं यत्र संकेतितम् अस्माकम् आधुनिकराष्ट्रस्य प्राचीन-मूल्यपरम्परासु ।

प्रजातान्त्रिकेन उपायेन परस्परघोरविरोधिष्वपि विचारेषु संवादेन समन्वयसेतुः स्थापितः । यथा बुद्धोऽवदत् धम्मपदे—

न हि वेरेन वेरानि सम्मन्तीध कुदाचन ।
अवेरेन च सम्मन्ति एस धम्मो सनन्तनो ।। धम्मपद १ (४) ५

बुद्धस्य मुख्यतमेषु उपदेशेषु तर्क-विवेकाश्रिता एका प्रजातान्त्रिकी पद्धतिः अस्ति अहिंसा शान्तिश्च ।

आसीत् सा एका धर्मान्तरीया सरणिः तस्मात् सा स्वीकरणीयेषु मूल्येषु सिद्धान्तेषु च व्यवस्थापिता । असंशयमेव बौद्धपरम्परा सर्वविभिन्नविचारदर्शनानि प्रति स्वकीयं प्रवेशद्वारं समुद्घाट्य एव तिष्ठति ।

इमे विचाराः सादरं समूढाः, यथोपलभ्यन्ते वर्तमानपेशावरसमीपे सम्राट्-अशोक संस्थापिते शाहबाजगढ़ी-शिलालेखे—

सल वढि तु बहुविध
तस तू इयो गुल यं वचगुति किति अतप्रषंडपुज
व पापषंडभारन व नो सिय
अपकरणसि लहुक व सिय तसि प्रकरणे,
पुजेतविय व चु परप्रषंड तेन तेन अकरेन,
एवं करतं अतप्रषंड वढेति, परप्रषंडंस पि च उपकरोति,
तद अथ करमिनो अत्रप्रषंडं, क्षणति परप्रषंडंस च अपकरोति,

यो हि कचि अतप्रषंडं पुजेति परप्रषंडं
गरहति सव्रे सत्तप्रषंडभतिय व किति अंतप्रषंडं
दिपयाम ति सा च पुन तथ करतं
सो च पुन तथ करतं व्रढ़तरं उपहंसि
अतप्रषंडं ।

अस्माभि बुद्धोपदेशेभ्यो ग्रहणीया अवलम्बनीया च प्रेरणा, अथ च यथाशक्ति यथामति च स्व-स्वविचारकर्मसु निधेया च ।

अत्र तर्क-समञ्जस-विचारे अन्तर्निहिता विद्यन्ते सर्वभूतकृते करुणा, प्रेम, मानवगौरवं प्रति श्रद्धा च । बुद्धानुसारं तु समा एव सर्वे मनुष्याः । पृथिव्यां सर्वे जनाः दुःखमनुभवन्ति, सर्वे चार्हन्ति मोक्षम् निर्वाणम् । वर्णव्यवस्थाविरुद्धाः सोऽवमन्यतेस्म आभिजात्यम् उच्चावचभावमयीं समाजसंरचनाम्, यया रचनात्मिका प्रगतिः अवरुद्धा, मानव एव मानवेन सह विरोधमानीतः । सुत्तनिपाते बुद्धोऽवदत् यत् सम्यगाचरणमेव जनस्य श्रेष्ठतां निर्धारयति, न जन्मना न वर्णेन प्रशस्यो भवति अपितु सत्कर्मणैव । स एव भावो व्यञ्जितो बुद्धेन धम्मपदस्य सुगाथाद्वये—

दूरे सन्तो पकासेन्ति हिमवन्तो व पब्बतो ।
असन्तेत्थ न दिस्सन्ति रत्तिं खित्ता यथा सरा ।। २१ (८) ३०४ ।।

न पुप्फगन्धो पतिवातमेति न चंदनं तगरमल्लिका वा ।
सतं च गन्धो पतिवातमेति सब्बा दिसा सप्पुरिसो पवायति ।।
।४ (९) ५४॥

सुपरिचिता एव वयं जातककथाभिः यानिधानं ज्ञानस्य प्रज्ञायाश्च । ताभ्य एव बौद्धकालीन जीवनपरिचयोऽपि प्राप्यते । ताभिः कथाभिः सुसूक्ष्मतया प्रकाश्यते यत् कथं सार्ववार्णिकः समुदायः बुद्धम् श्रयति स्म, धर्मं च शरणं गतः । लघ्वभिजातसमूहसमाद्रितां संस्कृतभाषां विहाय 'संकाय निरुत्तिया' शिक्षाकरणाय यदुपदेशो बुद्धेन दत्तः तत्रापि तस्य समतां भेदभावविहीनां दृष्टिं प्रति प्रतिबद्धता परिलक्ष्यते ।

वस्तुतः तेन सा भाषा प्रयोगाश्च स्वीकृता ये जनसामान्यतः प्रादुर्भूताः, तैरेव अव्यवहितरूपेण विचाराः पृथग्जनग्राह्याः कृताः

आसन् । जनसामान्यजीवनप्रयुज्यमाना: पुष्पगन्ध-पर्वतादीनाम् उपमा: लोकोक्तयश्च-यथा धम्मपदे उदाहरणरूपेण निर्दिष्टा:—तत्प्रचारितदर्शनं जनजीवननिकटम् आनयन्ति स्म । भगवान् बुद्ध: चक्रस्य अतिसाधारणं प्रतीकं गम्भीरान् सिद्धान्तान् सत्यं च व्याचिख्यासु: प्रायुञ्जत् । स उपदिदेश यत् चक्रस्य अरा: शुद्धचरणनियमसदृशा: । न्यायस्तु तेषां समरूपं दैर्घ्यम्, ज्ञानम् प्रावरकम्, मार्दवं विचारशीलत्वं च परिधिवृत्तं यत्र समायोजित: अविचला: सत्यस्य अक्षा: ।

सौविध्यविहीनान् जनान् प्रति सद्भाव:, प्रेम-करुणा च सर्वान् जीवान् प्रति तस्य दया-दानमयेषु चरितेषु सर्वत्र अवलोक्यन्ते । एतादृशैरेव कर्मभि: पुण्यम् अर्जनीयम् आसीत् । कोऽपि उपहारो न दानमात्रम् अपितु धर्मपर्याय: । तत्र सन्निहित: साहाय्यकर्त्तव्यभाव:, विशेषतस्तु दु:खितान् साधनहीनान् प्रति । सुविख्यातो बुद्धशासनानुगामी सम्राट् अशोक: स्वकीये साम्राज्ये बहूनि जनकार्याणि स्थापितवान्, यै: लोकस्य सुष्ठुजीवनं संवर्धितम् । तेनैव जलसिञ्चनपरियोजना: प्रचालिता: धर्मशाला: औषधालयाश्च निर्मापिता:, स्वकीयधर्माङ्गतया सेतव: राजपथाश्च कारिता: । एवं मानवतासेवा मुख्यधाराया: केद्रम् अभवत् ।

एषा परम्परा पुनर्नवीकरणीया, दाढर्यं चापादनीया, सर्शक्ति विज्ञापनीया च । अन्तत इदमेव समीधीयते यत् राष्ट्ररूपेण अस्माकं विकास: तदैव सम्भवति यदा विवेच्यतेऽस्माभि दीनतमानां दलिततमानां अध:पतितानां च जीवनम् । वर्तमाने भारते बौद्धधर्मेण तारस्वरेण निनादिता तन्त्री, अथ च बाबासाहेब-अम्बेडकरस्य नेतृत्वे समाजे मुक्त: अभ्युन्नतेश्च सशक्तं साधनमभवत् ।

बुद्धोपदिष्टै: शान्ति-अहिंसा-मानवेसम्मानभावनादिभि: अतिशयं प्रभाविता: अस्य शतकस्य उच्चनेतार: । बापू तु अहिंसादर्शनं नैतिकमूल्यरूपेण प्रावर्तयत येन अस्माभि: स्वातन्त्र्यमधिगतम् । फलस्वरूपेणैव पृथिव्या: विशालतमं साम्राज्यं भूमौ निपातितम् । पण्डितनेरूमहोदयोऽपि एतद्दर्शनं अन्ताराष्ट्रियक्षेत्रेषु प्रयुक्तवान् अथ च राष्ट्रं तन्नीतिं च प्रति लोके महतीं प्रतिष्ठाम् अर्जितवान् । स अस्माकीनां परराष्ट्रनीतिं पञ्चशीलाश्रितां कृतवान्, यत: शान्तिपूर्णसहास्तित्व-समता-

परस्पर सद्भाव-अनाक्रमण-आन्तरिकव्यवहारानाक्षेप-सिद्धान्तेषु राष्ट्रेषु परस्परव्यवहारनीतिः संस्थापिता । संयुक्तराष्ट्रसंघे च राष्ट्राणां सार्वभौमसमतायाः, विभिन्नसामाजिक-संरचना-आदर्श-संस्कृतिसत्त्वेऽपि परस्परसद्भावसहितप्रतिक्रियायाश्च सिद्धान्तो मान्यतां प्रापितः । समस्तसार्वभौमविषयान् प्रति तर्कस्य गुणस्य च मानदण्डः अस्माकम् अप्रतिबद्धतासिद्धान्तस्य मेरुदण्ड एव बभूव ।

सम्प्रति यदा वर्धमान एव परस्पराश्रयः, समस्तं विश्वं च भूमण्डलीयग्रामतां प्रापितः द्रुतसञ्चारमाध्यमैः, तदा अनिवार्यमिदं यद् वयम् स्वकीयोदात्तनीतिषु बद्धमूलाःस्याम, सुदृढाश्च भवेम स्वराष्ट्रस्य हितानां सुरक्षायाश्च संरक्षणसंवर्धनादिकृते । राष्ट्रीयाभ्युत्त्थानकरान् वर्तमानान् अन्यान् नवीन-वैज्ञानिक-आभियान्त्रिक-विकासान् प्रति ग्रहणशीलः सन् अस्मद्देशः दुर्बलकारितत्त्वान् प्रतिषेद्धुमपि सर्वथा समर्थः । सर्वस्मिन्नपि जगति अवश्यमेव रक्षणीयाः स्वकृत्यैः शान्ति-अहिंसा-निरस्त्रीकरण-प्रगतयः ।

भवादृशानां शिक्षणसंस्थानां विश्वविद्यालयानां च कृते एकं बुद्धानुशासनाङ्गम् अतीव महत्त्वपूर्णमस्ति तच्चास्ति श्रेष्ठातान्वेषणाय बलाधानम् । संघाख्यया संस्थया ऊर्जायाः गतिशीलतायाश्च तत्त्वं तत्कालीने मठीये विश्वविद्यालयीये च जीवने निक्षिप्तम् । अनेन अतिशयं प्रभावितम् पृथग्जनजीवनम् । न केवलम् आध्यात्मिके बौद्धिक वा क्षेत्रे अनया शिक्षापद्धत्या उच्चस्तरीयो मानदण्डो निर्धारितः, अपितु विविध कला-चित्र-स्थापत्य-साहित्य-चिकित्सा-अभियान्त्रिकी-निर्माण-स्थापत्येषु अपि । यथा उपदिष्टवान् भगवान् बुद्धः, धम्मपदे—

कयिरा चे कयिराथेनं
दल्हमेतं परक्कमे ।
सिथिलो हि परिब्बाजो
भिय्यो आकिरते रजं ।। धम्मपद २२ (५) ३१३ ।।

अजन्ताभित्तिचित्राणां गुहावास्तुकलायाश्च सौन्दर्यम्, अत्र सांचीस्थले च स्तूपानां भव्यता, ल्हासानगरे पोतालाराजप्रासादस्य दिव्यत्वं मनोज्ञत्वं च सर्वमिदं पूर्णतां प्रति प्रयासं द्योतयति ।

मठीयशिक्षापद्धत्या समुद्भाविता: विश्वविख्याता नालन्दा-वलभी-विक्रमशिलासमा: विश्वविद्यालया: । चीनदेशीय-विद्वद्भ्याम्-हुयेन सांग-फाहियानाख्याभ्यां विस्तरेण वर्णित एतेषां विश्वविद्यालयानां महाप्रभाव: । विक्रमशिलाविश्वविद्यालयस्य अध्यक्षेण-अतिशोपध-दीपङ्करश्रीज्ञानेन बहुकृतं भोटदेशे बौद्धधर्मप्रचाराय, समर्थितञ्च भाषान्तरकर्म भोटभाषायाम् । एतेषु बहवो मूलतो नष्टा ग्रन्था भोटभाषायाम् सुरक्षिता: विद्यन्ते ।

इदं अस्माकं सामूहिकं दायित्वं एतद्दिव्यरिक्थसंरक्षणस्य । स्वीकीयै: छात्रै:, विद्वद्भि: प्राध्यापकैश्च सह इदं संस्थानं अस्मिन् भद्रकर्मणि व्यापृत: । अहं तु एवं मन्ये यद् भवन्त: एकस्य महाराजनीतिविशारदस्य विदुष:, समाजवादिन: बौद्धदर्शनेन अतीव प्रभावितस्य आचार्यनरेन्द्रदेवस्य परम्परां निर्वहन्ति । तस्य अतिप्रशंसिते ग्रन्थे बौद्धधर्मदर्शनाख्ये हिन्दीभाषया अतिसरल-सामान्यशब्दै: प्रायश: सर्व एव बौद्धविचारबिन्दवो निरूपिता: सन्ति । लोकसामान्ये बौद्धसिद्धान्तप्रचाराय अत्युपकरोति तेन फ्रेंचभाषातो भाषान्तरितो वसुबन्धुकृतोऽभिधर्मकोश: ।

अनेन संस्थानेन अपि प्रज्ञा-ज्ञानाश्रयान् प्राचीनबौद्धग्रन्थान् अधिकृत्य महत्त्वपूर्णा: शोधा: क्रियन्ते, प्रशंसिता भवतां भोटभाषातोऽनूदिता ग्रन्था अस्माकं भाषया ।

प्रसन्नताया: विषयोऽयं मत्कृते यत् भोटसंस्कृते: बौद्धविचाराणां च संरक्षणाय अमूल्यं अवदानं निष्पाद्यते । भोटायुर्वेदज्यौतिषयो: पाठ्यक्रमारम्भेण भोट-कला-हस्तकला-संग्रहालयस्थापनेन च अस्या: प्राचीनपरम्पराया: दीर्घजीवित्वम् संभाव्यते ।

एकं विशिष्टं क्षेत्रं प्रति अहं भवताम् उत्साहवर्धनं कर्तुकामोऽस्मि यद् भवद्भि: बौद्धधर्मस्य सर्वसामान्यानां रहस्यविद्यानां च उभयेषामपि अवबोधप्रयाससंवर्धनाय यत्न: करणीय: । बुद्धदेशनाया: रहस्यात्मक: पक्षो भोटबौद्धधर्मस्य महत्त्वपूर्णमङ्गम् वर्तते, तदपेक्षते व्याख्यानं भाषान्तरणं च विविधभाषासु लोकहिताय सरलभाषयैव । बहुषु देशेषु

बाद्धसिद्धान्तानां विवेच्यवस्तु-प्रयोग-अधिमादिकृते बौद्धदर्शनग्रन्थानां व्याख्यारचनापि बहूपकरिष्यति ।

विरामात् पूर्वम् अहम् बलपूर्वकं बुद्धस्य तं सन्देशं प्रस्तोतुकामोऽस्मि यं बापू नवम्बरमासस्य चतुर्विंशतितमे दिने वामरलोचनाङ्कचन्द्रमिते खीष्टीये वर्षे 'यङ्ग इण्डिया' नाम्नि पत्रिकायां व्यलिखत्—

"बुद्धोपदेशः तद्हृदयमिव सर्वव्यापि सर्वग्राहि च. अतस्तच्छरीरम् अद्यापि वरीवर्तते सर्वं पृथिवीतलं च प्रभावयति ।"

अशोकसन्देशहरा गर्जन्तः सारनाथीया सिंहा इव बुद्धदूता भवन्तो निवेद्यन्ते मया भगवतो बुद्धस्य बहुजनहिताय बहुजनसुखाय इत्यस्य. शान्तेः सौमनस्यस्य. प्रतिजनं प्रतिराष्ट्रं च भ्रातृत्वस्य संदेशप्रचाराय ।

अतिविनीतभावेन स्वीक्रियते मया स समादरो योऽद्य भवद्भिर्मयि उपायनीकृतः ।

—:*:—

# संस्कृतस्य सार्वभौमत्वम्

डॉ0 मुरलीमनोहरजोशी

अद्य प्रभातस्य गौरवास्पदे वातावरणे भवद्भिः सह समुपस्थाय महान्तमानन्दमनुभवामि। मया स्वजीवनस्य विशिष्टः कालः गङ्गा-यमुना-सरस्वतीनां सङ्गमे त्रिवेणीति तटे संस्थिते प्रयागविश्वविद्यालये यापितः। संस्कृतभाषायां गङ्गा 'देवसरिद्' वा सुरसरिद् वा (अर्थात् देवानां नदी) इति प्रोच्यते। इयं कर्मणां विचाराणां च पावनत्वं ख्यापयति, इयं च अवनितले भगीरथेन महता तपसा समानीता। यमुना चान्या दिव्यसरित् वर्तते या सूर्यतनया यमभगिनी च प्रोच्यते। सरस्वती च अदृश्या दिव्यप्रवाहरूपा यस्याः समुल्लेखः वेदेषु प्राचीनग्रन्थेषु प्रायशः प्राप्यते। इदमेव कारणं यदहं विश्वविद्यालयस्य वातावरणे निवासमभिलषामि। यदा च मया सिल्पाकोनविश्वविद्यालयस्य अध्यक्षमहोदयस्य निमन्त्रणमासादितं तदा सहर्ष तत्स्वीकृतम्, तत्र कारणद्वयमस्ति। प्रथमम्, सम्मेलनस्य दक्षिणपूर्व-एशियादेशेषु संस्कृतम्--संस्कृतिसमन्वस्योपादानम्-- इति विषयो ममाभिरुचिपूर्णो वर्तमानसन्दर्भे प्रासङ्गिकश्च वर्तते। द्वितीयम्, समग्र- दक्षिणपूर्व-एशियादेशैः विशेषतः थाइलैण्डदेशस्य सिल्पाकोनविश्वविद्यालयेन प्रवर्तितं संस्कृतप्रचारप्रसारकार्यममहं सम्यग् अवगच्छामि। अहं विश्वसिमि यत् संस्कृतमेव अस्माकं समानसंस्कृतेर्मूलं पारम्परिको दायश्च विद्यते। इयं भाषा न केवलं ज्ञानं संवर्धयितुम् अपितु मानवीयचेतनामपि परिष्कर्तुं क्षमते।

विगतमास एव देहल्यामस्माभिः एकं विश्वसंस्कृतसम्मेलनं

समायोजितम्, यस्मिन् प्रभूतसंख्यया वैदेशिका अपि विद्वासः प्रतिभागिनः आसन्। जर्मनी- जापान- कनाडा- थाइलैण्ड- हङ्गरी- इण्डोनेशिया- पोलैण्ड- क्रोएशिया- फ्रांस- इटली- प्रभृतिदेशेभ्यः समागताः विद्वांसः स्व-स्व-शोधनिबन्धं पठितवन्तः। सम्मेलने सम्मिलितविषयाणां सुविस्तृतिः निश्चयेन आश्चर्यमाविर्भावयति। तया विश्वस्मिन् विश्वे संस्कृतं प्रति विद्यमानायाः रुचेः सम्प्रत्ययो भवति। यतो हि मयाऽवगतं यत् विश्वस्य महत्त्वशालिविश्वविद्यालयेषु संस्कृतशिक्षणविभागाः पीठानि वा सन्ति। सुहृद्भिश्च बोधितोऽहं यत् संस्कृतविकासाय थाईलैण्डदेशेन अन्येभ्यो देशेभ्योऽपेक्षया समधिकं कार्यं विहितमस्ति। सिल्पाकोनविश्वविद्यालये संस्कृतविभागस्य प्रारम्भः षट्चत्वारिंशवर्षेभ्यः प्राक् सञ्जातः। आशासे यत् देशस्य अन्येष्वपि विश्वविद्यालयेषु संस्कृतस्य पालेश्चाध्ययनं समनुष्ठीयते।

प्रश्नोऽयमुत्तिष्ठति यत् संस्कृतं अस्मभ्यं कथम् इयदमूल्यम्? प्रथमतः विलियमजोंसमहोदयेनाधिगतं यत्- "ग्रीकतः अधिकं शुद्धं लैटिनतः अधिकं समृद्धम्, उभाभ्याञ्च अधिकं परिष्कृतं संस्कृतम्" इति अथवा श्रीमतः अरविन्दस्य मन्तव्यानुसारेण "संस्कृतं विचाराभिव्यक्तेः अपूर्वं परिष्कृतं समर्थं च साधनं, अस्मिन् स्पष्टता, सुबोधता, चरमसम्भावना शुद्धता चास्ति। इदं सर्वदैव सुघटितपदविन्यासं सूक्तिनिर्माणक्षमं सौन्दर्यसमृद्धिसम्पन्नम्, अपरञ्च प्राचीनकालादेव ध्वनेः शैल्याश्च वैभवशालिपरम्पराणां वाहकं वरीवर्त्यते।" अथ सम्भवतस्ततोऽपि महत्त्वपूर्णः पक्षः अयमेवास्ति यद् इयमेव एका एवंविधा भाषाऽस्ति यस्यां निरन्तरं चैतन्यसम्बद्धं विषयमधिकृत्य लेखनं प्रवर्तते। अनादिकालात् ऋषिभिः यदा वेदानां साक्षात्कारः कृतः तदा प्रभृति चेतनासम्बद्धं अपरिमेयं चिन्तनम् अनुभूतीनां बहुविधाः प्रकाराश्च समुल्लिखिताः सन्ति। येषाम् अध्ययनम् अग्रे शोधार्थिभिर्विधेयम्। परिणामतः सर्वेषु अन्तःशास्त्रियाध्ययनेषु प्रवर्धकः परिणामो भविष्यति। असंशयं च तेन संस्कृतं पुनरपि विश्वस्य प्रमुखभाषा भविष्यति। दर्शन-साहित्य-क्षेत्रेषु एवंविधाः सङ्केताः पूर्वकालादेव प्राप्यन्ते, तत्र शॉपेनहावरमहोदयाः आल्डस-हक्सलेमहाशया इमर्सनमहोदयाश्च

उपनिषदां माहात्म्यं विदित्वा ततो यच्चेतनायाः सर्वोत्कृष्टं ज्ञानं विद्यते तत् ज्ञातवन्तः। शॉपेनहावरमहोदयेनोक्तं यत् "सम्पूर्णेऽपि संसारे उपनिषद्भिस्तुल्यं तत्समं लाभकरम् उत्कर्षविधायकं च चिन्तनं कुत्रापि नास्ति। इमाश्च मम जीवने शान्तेः समुन्नतेश्च विधायिकाः मम निर्वाणस्य चापि साधिका भविष्यन्ति" इति।

इमर्सनमहाशयः स्वोपनिबद्धे ब्रह्मनामके काव्ये औपनिषदं सारं समभिव्यञ्जयन् उक्तवान् "अशिवसन्देहास्ते माम् अत्यजन्। तेषामुड्डयने अहमेव पक्षः. अहमेव सन्देहकर्ता सन्देहश्च, अहमेव तद् गीतं यद् ब्राह्मणैः गीयते।" इति।

अत्र समुल्लेखोऽयम् अप्रासङ्गिको नास्ति यत् एकोनविंशतिशततमे विंशतिशततमे च ख्रिष्टाब्दे संस्कृतनिधेः परिप्रकाशनाय पाश्चात्त्यविद्वद्भिः विहितं योगदानं सुतरां प्रशंसनीयमिति। किन्तु पाश्चात्त्यानि भाषान्तराणि कञ्चिद् अवधिं यावत् संस्कृतग्रन्थानां अर्थं तात्पर्यं वा विरूपितवन्तः। अत इदं परमावश्यकं यद् ये खलु कलायाः विज्ञानस्य साहित्यस्य अध्यात्मस्य दर्शनस्य तलस्पर्शि ज्ञानमभिलषन्ति ते संस्कृतपरिज्ञाने मौलिकज्ञाने च यत्नं विदध्युः। संस्कृतं केवलं शास्त्रियभाषेति सर्वथा असङ्गतो विचारः। ऐतिहासिकभीषणाघातैर्घातिता दुर्योगैश्चाक्रान्ता सत्यपीयं भाषा समुत्कृष्टां मेधां वर्तमानकालेन संयुनक्ति। मानवस्य परिकल्पनां यावद् अस्यां भाषायाम् अध्ययनं लेखनं च प्रसक्तं वर्तते।

संस्कृतं न केवलं दक्षिण-पूर्व-एशिया-देशानां कृते अपितु चीन-जापान-प्रभृतीनां विस्तृत-एशिया-देशानां परिदृश्यपरिमण्डले संस्कृतेः धर्मस्य दर्शनस्य च सम्प्रतिपत्तये अपरिहार्यमेव। युगेभ्यः मानवचेतनायै मानवकल्याणाय च संस्कृतस्य महदवदानम् अस्ति। तत् प्रीतेः शान्तेः सङ्गतेश्च सङ्केतचिह्नम्, समवायोपयोज्यं सुमधुरं फलं व्यक्तिगतसमुपलब्धेः, संस्कृते विहितं पर्यावरणस्याभिनन्दनं शान्त्यै समभिवन्दनं च मानवतायाः कृते नैव केवलम् अपितु निखिलस्य ब्रह्माण्डस्य कृते विद्यते। अग्रे अहं संस्कृतं मानवतायै किं विदधातुं शक्नोतीति विषये स्वाभिमतं भवद्भिः विमर्ष्टुं प्रयतिष्ये। यतो हि मम

मतौ ज्ञानं दर्शनं च भौगोलिकसीमभिः नास्ति परिच्छिन्नं, यतो हि एतेषां प्रसारः व्यापको भवति तेषाञ्चोद्देश्यम् उच्चतरमूल्यानाम् सम्प्राप्तये मानवजातेश्च मुक्तये भवति इत्यहं प्रत्येमि।

संस्कृतं दक्षिण-एशिया-देशेषु संस्कृतीनां समन्वयने न केवलं उपादानत्वेन प्रतिष्ठितमस्ति अपितु अत्र अस्याः भाषायाः व्यापकः प्रसारोऽप्यस्ति। यूरोप-एशिया-देशेषु हङ्गरी- रूस- क्रोएशिया- लिथुआनिया- भारत- म्याँमार- थाईलैण्ड- कम्बोडिया- इण्डोनेशिया- प्रभृतिषु संस्कृतस्य प्रभावः परिलक्ष्यते। नातिचिरं लिथुआनियादेशस्य राष्ट्रपतिभिः सह मम मेलनं जातम्। तैरुक्तं यत् तेषां देशे संस्कृतस्य बहु महत्त्वं वर्तते। लिथुआनियादेशो भारतेन सह सम्भूय संस्कृतस्य समुन्नतये कार्यं कर्तुमभिलषति। सङ्गीतस्य लये, स्वरे, नृत्यभङ्गिमायां बैलेप्रभृतिकलासु संस्कृतस्य प्रभूतः प्रभावः परिलक्ष्यते। अनेकाभिः शताब्दीभिः वयं रामायणस्य महाभारतस्य च कथानां आस्वादनं कुर्मः, ताभ्यः प्रेरणामपि प्राप्नुमः। विश्वसिमि यत् आयतौ अपि अस्याः चारुपरम्परायाः संरक्षणं विधास्यामः।

संसारस्य विद्वांसः साम्प्रतं तथ्यमिदं स्वीकुर्वन्ति यत् संस्कृतभाषा वैज्ञानिकी भाषाऽस्ति। सार्धद्विसहस्रवर्षेभ्यः प्राक् महर्षिपाणिनिः अष्टाध्यायीं प्रणीय संस्कृतं सुव्यवस्थितं विहितवान्। अद्यापि ग्रन्थोऽयं सम्पूर्णेऽस्मिन् संसारे पठ्यते। संस्कृतं सङ्गणकयन्त्रस्य कृते सर्वोत्तमा उपयोगिनी भाषा मन्यते। अस्माकं देशे अस्यां दिशि अनल्पं कार्यं विधीयते। वयं सर्वे सम्भूय एतत् कार्यं अग्रे सारयितुं शक्नुमः।

नाहमत्र समुपस्थापयामि दक्षिण-एशियानिवासिभिः सह अस्माकं वाणिज्य-व्यापारगतं ततोऽप्यधिकं वा महत्त्वपूर्णं दार्शनिकम् आध्यात्मिकं च दीर्घमैतिहासिकं सम्बन्धं संवादञ्च पुरातनम्। सुवर्णभूमिदेशेभ्यः अथवा निखिलदक्षिणपूर्वदेशेभ्यः अस्माकं सम्बन्धो न्यूनातिन्यूनं चतुःपञ्चसहस्रेभ्यः वर्षेभ्यः पुरातनोऽस्ति। स्पष्टतः संवादोऽयं बौद्धभिक्षुकाणां सुदूरपूर्वस्यां दिशि यात्राप्रसङ्गेन सुतरां वर्धितः। ममाभिमतं यत् तदानीं बहवो धर्मतत्त्वजिज्ञासवः इतोऽपि अध्ययनार्थं

भारते सुप्रतिष्ठितं नालन्दाविश्वविद्यालयं विक्रमशिलाविश्वविद्यालयं चागच्छन्। मयाऽवगतं यत् वियतनामदेशस्य वो-कान-स्थले ख्रीष्टीयतृतीयशताब्द्याः शिलालेखः समधिगतः, येनावगम्यते यत् तस्मिन् काले राजकार्यसम्पादिका भाषा संस्कृतमेवासीद् इति। प्राचीनकम्बोडियादेशे ख्रीष्टीयषष्ठशतकस्य समधिगतेन शिलालेखेन अवगम्यते यत् रामायणं महाभारतं पुराणानि च एकस्मै देवालयाय प्रदत्तान्यासन् यत्र तेषां नित्यं पाठोऽप्यासीत् प्रवर्तितः।

इतिहासे वयं द्वारावत्याः समुल्लेखं लभामहे। एतदेव क्षेत्रम् आधुनिकथाईलैण्डरूपेणास्ति प्रतिष्ठितम्, अस्य क्षेत्रस्य महाभारतेन कृष्णेन च सम्बन्धः आसीत् इत्यपि अवगम्यते। दक्षिणभारतात् समागत्य अस्मद्देशीयाः केचन अत्रैव निवासं चक्रुरित्यपि मन्यते। ख्रीष्टीयपञ्चमशतकात् अष्टमशतकं यावत्काले अत्र मुख्यतः पालिरेव व्यवहारभाषा आसीत्। यतो हि आधारभूता बौद्धधर्मग्रन्था अस्यामेव भाषायाम् आसन्। द्वारावतीसमकालिकस्य श्रीविजयसाम्राज्यस्य विस्तारः इदानीं दक्षिणथाईलैण्डदेशस्य नगररूपेण संस्थितं चयानगरं यावदासीत्, तत्र च जनव्यवहारभाषा संस्कृतमेवासीत्। प्रतिवेशिनि कम्बोडियादेशे ख्रीष्टीयैकादशद्वादशशताब्द्योः संस्कृतमेव मुख्यभाषापदमध्यास्त। राजवंशस्य परिवर्तनेन अभिनवविचारा आविर्भूताः। सुखोदयसाम्राज्यस्य रामखामहेङ्ग इत्याख्यस्य तृतीयस्य राज्ञः शासनकाले थाईलैण्डदेशस्य दक्षिणक्षेत्रं श्रीलङ्कातः बौद्धधर्मः प्राविशत्। यत्र ततः प्रभृति धार्मिकक्रियाकलापस्य भाषा पालिर्वर्तते। सर्वोत्तमं तथ्यमिदमस्ति यदत्र संस्कृतस्य थाईकरणमभवत्, एतत् थाईभाषायाः अभिन्नाङ्गत्वेन प्रतिष्ठितं जातम्। संस्कृत-पालि-थाई- भाषा- त्रिवेणी मया प्राक् प्रतिपादितया प्रयागस्य त्रिवेण्या सह साम्यं भजते।

पालेरध्ययनस्य आवश्यकतायाः प्रयोजनमपि किञ्चिद् प्रकाशयितुम् अपेक्षितमस्ति यतो हि इयमेव भाषा विस्तृतबौद्धज्ञानविज्ञानस्य प्रवेशद्वारमास्ते। भगवतो बुद्धस्योपदेशानां प्रचारः सुविस्तृत- दक्षिण- पूर्व- एशिया- तिब्बत- चीन- जापान- मङ्गोलिया- इण्डोनेशिया- प्रभृतिषु देशेषु अभूत्। तेषामुपदेशानां प्रभावः

न केवलं प्राच्याम्, अपितु प्रतीच्यामपि दिशि सञ्जातः। भगवतो बुद्धस्य सर्वातिशायि योगदानं मज्झिमनिकाय-(मध्यममार्ग)-रूपेणास्ति इति प्रथितम्, यत्र सम्यग् विचारः, सम्यग् आकाङ्क्षा, सम्यग् वाणी, सम्यग् आचरणम्, सम्यग् जीवनयापनम्, सम्यक् चेतना, यम्यक् चिन्तनं च विलसन्ति। थाईलैण्डदेशे पालेः अध्ययनस्य समृद्धिशालिनी परम्परा विराजते इति प्रमोदस्थानम्।

षष्ठो राजा रामः सुप्रथितानाम् अभिज्ञानशाकुन्तल- सावित्री- प्रियदर्शिका- नलोपाख्यान- प्रभृतीनां ग्रन्थानां थाईभाषान्तराणि कारयित्वा अस्मिने देशे संस्कृतसाहित्यस्याध्ययने महत्त्वपूर्ण योगदानं विहितवान्। तथैव अयं थाईरामकियन् इत्यमुं प्रबन्धं रामकीर्तेरुद्भवं विष्णोः दशावतारञ्चाधृत्य प्रबन्धान् शोधनिबन्धांश्च लिखितवान्। अस्मिन् क्षेत्रे अयं हि खलु महान् संस्कृतदायः। अत्र समेत्य अत्रत्यायाः भाषायाः संस्कृतेन सह ध्वन्यात्मकं साम्यमवलोक्य जनाः आश्चर्यचकिताः भवन्ति। अल्पीयसा संस्कृतज्ञेनापि जना अत्र आत्मीयतामनुभवन्ति।

अस्माकं समक्षं सर्वाधिकं महत्त्वपूर्णः प्रश्नोऽयमायाति यद् अधुना संस्कृताध्ययनस्य किं प्रयोजनम्? वयं सर्वे जानीमो यत् संस्कृतं खलु अध्यात्मविद्यायाः (पराविद्यायाः) लोकविद्यायाः (अपराविद्यायाः) च भाण्डागारः। संस्कृतं नाम ज्ञानोद्दीपितमानवमस्तिष्कस्य आविष्करणम्। नेदं परिसीमितं न वा सम्बद्धं केषुचित् राजनैतिकधार्मिकक्षेत्रेषु। "सा विद्या या विमुक्तये" इति वैदिकोपदेशेन ज्ञानस्य आभिमुख्यं प्रथितं विद्यते। इयं हि जीवने समुत्कर्ष विदधातुं , अज्ञानान्धकारात् दूरीकर्तुम्, ज्ञानालोकं प्रति प्रवर्तयितुं च प्रभवति। इतोऽप्यधिकं महत्त्वपूर्णं यद् इयं धर्म इत्याख्यया विख्यातानां मूल्यानां व्यवस्थां विवृणोति। अत्र धर्मशब्दो नास्ति सङ्कुचितेऽर्थे मतान्धताशये, आङ्ग्लभाषाया 'रिलीजन' इत्यर्थे वा। अत्र धर्मशब्दः परमोत्कृष्टजीवनपद्धतिमेव प्रदर्शयति।

पुनः प्रकृतमनुसरामः। संस्कृतमस्माकं ज्ञानस्य मूलं स्रोत इति। भारतीयदार्शनिकसिद्धान्तानाम् अन्तर्वर्तिनी धारा ब्रह्मसूत्र- उपनिषद्- गीतेत्येषां त्रयाणां ग्रन्थानां सुविदितां प्रस्थानत्रयीमाश्रयते। ज्ञानस्यानुपमो निधिः श्रीमद्भगवद्गीता उपर्युक्तेष्वन्यतमा, विश्वसाहित्ये समुपलब्धेषु

ग्रन्थेषु अतिशयेन पठ्यते।

संसारे कोटि- कोटि- परिमिताः जना भगवद्गीताम् अनुशासकं ग्रन्थं मत्वा अनुशीलयन्ति। प्रायः शताब्दात् पूर्वं प्रतीचीं प्रति स्वकीये प्रथमे यात्राप्रसङ्गे श्रीविवेकानन्दस्वामिभिः शिकागोनगरे प्रवर्तितायां धर्मसंसदि वेदान्तस्य भगवद्गीतायाश्च उपदेशः पाश्चात्त्येषु प्रचारितः, सहस्राधिकाश्च जना अस्माद् ग्रन्थाद् शान्तिम् अध्यगच्छन्। महात्मगान्धिना स्वजीवनं भगवद्गीतायाः सदुपदेशान् आधृत्य यापितम्। उक्तं च तेन --"अहं श्रीमद्भगवद्गीतायां शान्तिमधिगच्छामि, तां च शान्तिं 'सरमन ऑन दि माउण्ट' इत्यनेनापि न लभे। यदाऽहं निराशान्धकूपे भवामि, प्रकाशरश्मिरपि नावलोक्यते, तदाऽहं भगवद्गीतायाः शरणं व्रजामि। कमपि एकं श्लोकम् अवलोकयामि। तदनन्तरमेव कष्टानां मध्येऽपि तिष्ठन् विहसामि। मम जीवनं बाह्यदुःखैः परिपूर्णमस्ति, तथापि यदि तेषाम् नास्ति कश्चन प्रत्यक्षः प्रभावः सङ्केतो वा तदहं भगवद्गीतायाः सदुपदेशानां प्रभावमेव मन्ये।"

वयं सर्वे स्व-स्व-स्थाने जीवनसङ्घर्षरूपिणं कुरुक्षेत्रमनुभवन्तः अर्जुना एव। वयं कुण्ठाग्रस्ताः निराशान्विताः कर्तव्यमूढाः सन्तः यदा कदा स्वकार्यं त्यक्तुमपि सन्नद्धा भवामः। ये खलु भगवद्गीतायाः अध्ययनशीलाः सन्ति ते सद्यः अध्यवस्यन्ति यत् कर्तव्यमार्गे दैन्यं पलायनं च नास्तः। भगवति श्रद्दधानः फलनिरपेक्षभावनया कर्मणि अभिरतो जनो भवेद् इति ते जानन्ति। जीवनप्रवाहे वयं सर्वे सदैव कर्मणि संस्थिता भवामः। एतदवधेयं यत् कर्मणः बन्धनगुणाः तत्सम्पादिकायां कामनायां प्रयोजने वा सन्निहितास्तिष्ठन्ति। अतः कर्मसम्पादनात् पूर्वं विद्यमाना मनोदशा विशिष्टा भवति। अत एव गीता निष्कामकर्ममार्गम् उपदिशति, न तु कर्मरहितं मार्गम्। कर्मणि एव अस्माकं अधिकारः न पुनः कर्मफले, यतो हि सिद्धिः असिद्धिर्वा नह्येकस्मिन् जने। साफल्यम्, असाफल्यं च समभावेन ग्राह्यम्। एतदपि महत्त्वपूर्णं यद् अस्माभिर्न कदापि अकर्मविषये चिन्ता कार्या। मनसः प्रकृतिरियं यत् साफल्ये सति मनः उत्फुल्लं भवति असाफल्ये च सति तद् उद्विग्नं भवति। किन्तु उभयथा अप्रभावितं मनः स्पष्टतां दृढतां च धारयति। परमहंसरामकृष्णस्य एका नीतिकथा अतीव

प्रसिद्धास्ति। तेनोक्तम्-

"अस्मिन् संसारे धनिकस्य परिचारिका इव भव। सा स्वामिनः सन्ततेः सम्पत्तेश्च विषये एवं व्यवहरति, येन प्रतीयते यत् एतत् सर्वं तस्या एव, किन्तु सा हृदयेन जानाति यत् न किमपि तस्याः। यथा सा परिचारिका स्वस्वामिनः सम्पत्तेः स्वकल्पिताधिकारं मुहूर्तेनैव त्यक्तुमर्हति तद्वत् सांसारिकवस्तूनां परित्यागाय सन्नद्धो भव।"

मूलगीतायाः अध्ययनाय संस्कृतं यैः अभ्यस्तं तादृशाः जनाः बहवः मिलन्ति। प्रत्येकं भाषा स्वकीयं किमपि वैलक्षण्यं धारयति यद् अन्यया भाषया पुनः प्रस्तोतुं न शक्यते। संस्कृते प्रेरणाया महती क्षमता विराजते, किन्तु तत्र विराजते काचित् सुनिश्चिता विचारसरणिः, या खलु पाश्चात्त्यचिन्तने तिरोहिता, तिरोहिता च पाश्चात्त्यभाषासु।

साम्प्रतं वयं महत्परिवर्तनेए प्रवर्तामहे। परिवर्तनस्यायं झञ्झावातः अतीव वेगवान् वर्तते येन पदसंस्थितौ काठिन्यमनुभूयते। अहम् आर्थिकभूमण्डलीकरणविषये व्याहरामि। विज्ञानप्रौद्योगिक्योः क्षेत्रे समधिगता समुपलब्धिः प्रत्येकं देशं परिवर्तनाय आह्वयति। वयं पूर्णतः समाकृष्टा नवीनेऽस्मिन् युगे यश्च युगः अस्मासु प्रत्येकं प्रभावयितुं तत्परोऽस्ति। जगति धनिक-निर्धनयोः विभाजनं सुस्पष्टमेव। विश्वबैङ्कनिदेशानुसारेण त्रिनवत्युत्तरैकोनविंशतिशततमे वर्षे निर्गतेन विश्वबैङ्कनिर्देशेन ज्ञायते विश्वस्मिन् विश्वे प्रायः त्रिशतं कोटिजनानां (३-बिलियन्-जनानां) प्रतिदिनम् आयः द्विडॉलरमुद्राभ्यामपि न्यून आसीत्। षड् शतं कोटि जनेषु (६ बिलियन्-जनेषु) सार्धैकशतं कोटिजनानां जीवनं घोरनिर्धनतायाम् एव भविष्यतीति पूर्वकथनं विद्यते। अष्टकोटिजनाः प्रतिदिनं क्षुधापीडिताः शेरते। विश्वस्तरे अधिकतमम् आयं निर्वहतां देशानां विश्वस्य विंशतिप्रतिशतं (२०%) जनाः समग्रविश्वस्य उपभोगव्ययस्य षडशीतिः प्रतिशतम् (८६%) उपभुञ्जते। निर्धनतमस्य जनस्य उपभोगे काऽपि वृद्धिर्न दृश्यते। इदं पाश्चात्त्यशोषणात्मकप्रविधेः

त्रुटिपूर्णचिन्तनस्य च फलम्। एतन्नितरामसम्भवं यद् विश्वमिदम् उपभोगस्य पाश्चात्त्यश्रेणीं प्राप्नुयात्। पाश्चात्त्योपभोगवादेन पर्यावरणं विनष्टं, नद्यः सागराश्च दूषिताः, वनसम्पदो विनष्टाः, निर्धनदेशाश्च शोषिताः, येन सामुद्रिकं जीवनम्, अन्तरिक्षम्, जलप्रपाताः, नद्यः, ध्रुवप्रदेशाश्च सर्वे स्वस्वास्तित्वे विपन्नाः। अतः चिन्तनशीला वयम् उपभोगप्रतिमानमिदमाकलय्य चिन्तिताः। साकल्येन विश्वस्य धनिकानां जीवनशैल्याः पुनः परीक्षणमपेक्षितम् अस्ति। अस्माभिः पारिस्थितिकीम् आश्रित्य उपभोगं प्रति उत्पादनं च प्रति सार्वभौमिक- क्षेत्रीय- राष्ट्रिय- स्थानीय- प्रतिबन्धानां स्पष्टीकरणम् पालनं च आवश्यकतया विधेयम्। प्रकृतेः स्वरूपस्य पर्यावरणसमस्यायाश्च सामाजिक- जनसाङ्ख्यिक- आर्थिक- सांस्कृतिक- पृष्ठभूमिमाश्रित्य स्वरूपपरिशीलनं नितान्तम् आवश्यकम्।

नाहमत्र शोषणात्मकयान्त्रिकप्रविधीनां सामाजिकपद्धतेः वैज्ञानिकपक्षान् कारणानि वा विमृशामि। अयं स्पष्टतः पाश्चात्त्यमनीषया परिगृहीतमार्गस्यैव दुष्परिणामः। अतोऽस्माभिः सर्वप्रथमम् अस्माकं प्राच्यमूल्यव्यवस्था अवगन्तव्या, अवगन्तव्यश्च संस्कृतसाहित्ये दर्शने च विद्यमानो दार्शनिक आधारः। अस्माकं परम्परायां पृथिवी प्रकृतिश्च उभे अपि पवित्रे स्तः। अहम् अथर्ववेदस्थभूमिसूक्तस्य आदिमं मन्त्रं श्रावयितुमभिलषामि। इमे चारुशब्दाः पृथिवीं प्रति पूज्यभावनां प्रेरयन्ति-

**सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति।**
**सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु।।**
**असम्बाधं बध्यतो मानवानां यस्या उद्वतः प्रवतः समं बहु।**
**नानावीर्या ओषधीर्या बिभर्ति पृथिवी नः प्रथतां राध्यतां नः।।**
**यस्यां समुद्र उत सिन्धुरापो यस्यामन्नं कृष्टयः सम्बभूवुः।**
**यस्यामिदं जिन्वति प्राणदेजत् सा नो भूमिः पूर्वपेये दधातु।।**

*(अथर्ववेदे, १२/१/१-४)*

प्राच्यपरम्परायाम् उपभोगः जीवनशैल्याः सरलतमदृष्ट्या निरुद्धोऽस्ति। धनिकाः देशाः जनाश्च सर्वदैव संसाधनानि स्वायत्तीकृत्य अनुक्षणम् अधिकमधिगन्तुम् कामयन्ते, फलतस्ते स्वशान्तिं प्रसन्नतां च

परित्यजन्ति। सम्पूर्णेऽपि पाश्चात्त्यजगति परिवारः विशृङ्खलितो भवति, बहवः मानसिक्या अशान्त्या पीडिताः जनाः शान्तिं न लभन्ते। अस्यां स्थितौ पुनः अस्माकं ज्ञानस्रोतः अवलम्बनीयम्, अवगन्तव्यं च यत् शान्तेः प्रसन्नतायाश्च अधिगमः कामनापूर्त्या नैव सम्भवः। त एव शान्तिमधिगच्छन्ति येषां कामनाः सागरे निमग्नायाः नद्यास्तरङ्गा इव उपशमिता भवन्ति। यदि वयं अनूचानानां वचनं शृणुमः तर्हि जानीमो यद् उपभोगेन शान्तिर्नैव लभ्यते। यतो हि यथा यथा कामनायाः पूर्तिर्विधीयते तथा तथा तासां तीव्रता तथैव वरीवर्धते यथा हविः प्रदाने अग्नेः तीव्रता जायते। प्रोक्तं च अस्ति-

**न जातु कामः कामानामपभोगेन शाम्यति।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।।**

नायं पौराणिकः सन्देशः अपितु तीर्थङ्करमहावीरेण भगवता बुद्धेन अन्यैरपि ऋषिभिः मुनिभिश्च एवमेव समुपदिष्टम्। अस्मिन् प्रसङ्गे एका कथा मया स्मर्यते-

एकदा कश्चित् पुरुषो जलाशये स्नानं कुर्वन्नासीत्। होरां यावत् बारं बारं जले निमज्य बहिरागतः। गृहं प्रति गन्तुकामेन तेन एको घटः जलेन पूरितः। तं घटम् असौ अधिस्कन्धं संस्थाप्य गृहं प्रति चलितुं प्रवृत्तः। तस्य गृहम् आसीत् दूरम्। मार्गे स क्लान्तो जातः। सोऽचिन्तयत् यत् यदाऽहं जले निमग्न आसम्, तदा प्रचुरं जलं मम शिरशः उपरि आसीत्, किन्तु मया तस्य भारो नानुभूतः। घटेऽस्मिन् स्वल्पं जलं वर्तते, न ततोऽधिकम्। तथापि तस्य भारः कियान् अधिकः। कथमेतत्?

एवमेव यदा सम्पत्तिः केषुचित् हस्तेषु नियमिता भवति, तदा मानसिकचिन्ताम् उत्पादयति, गुरुत्वं च अनुभावयति। यदा सा सम्पत्तिः वितरिता भवति तदानीं वातावरणं चिन्ताविमुक्तं भारहीनं गुरुत्वानुभवरहितं च जायते। अस्मादेव कारणात् भगवता महावीरेण उक्तं यत्-- सम्पदः स्वामित्वेन मानवः भारमनुभवति, तत्त्यागेन च लघुभारमात्मानं मनुते।

मानवः सुखं याचते, मानवस्य प्रकृतिरेषा, किन्तु बहुधा जनाः सुखस्य स्वरूपे भ्रान्ताः भवन्ति, व्यक्तौ चेतना जडता च सहैव निवसतः।

चेतना सदैव परमसत्तायां श्रद्दधते। या जडता, सा माया इत्यपि अभिधीयते। सा विदधाति सदैव संसारोन्मुखताम्। मानवो यदा मायाप्रभावेन प्रभावितो भवति तदा तस्य प्रवृत्तिः संसारे भवति। एतदवधेयं यत् सांसारिककामनायाः पूर्तिः सांसारिककर्मभिर्भवति, किन्तु परमसत्तायाः प्राप्तिः सांसारिककर्माधीना नास्ति। परमसत्तायाः प्राप्तिः तीव्रपिपासामेव अपेक्षते। प्रोक्तं च-

**द्वा सुपर्णा सयुजा सखाया**
**समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्य-**
**नश्नन्न्यो अभिचाकषीति।।**

एकस्मिन् वृक्षे द्वौ परमसुन्दरौ पक्षिणौ स्तः। तौ समानौ तथापि भिन्नौ स्तः, तयोरेकः वृक्षस्य फलं भुङ्क्ते, अन्यश्च साक्षी भवति फलं च न भुङ्क्ते। इमे वृक्षादयः संसारे विद्यमानानां जड-जीव-परमात्मनां प्रतीकभूताः सन्ति।

यदि वयं स्वकीयज्ञानस्य मूलं स्रोतः विमृशामः तदा वैश्वीकरणस्यास्य भारं झञ्झावातं च सोढुं सामर्थ्यशालिनो भवामः। अस्माभिः अस्मद्देशानुरूपम् अस्मज्जनानुरूपं च आर्थिकवैश्वीकरणमेतद् विधातुं प्रयतितम्। आत्मानं प्रकाशयितुं संस्कृतभाषाया विपुलं साहित्यं विद्यते। आत्मनः सत्त्वमभिवर्धितव्यं यच्च अस्माकं स्वभावानुरूपं परम्परानुरूपं भवेत्। अथर्ववेदस्यायं सन्देशः भावनीयः-

**समेत विश्वे वचसा पतिं दिवः**
**एको विभुरतिथिर्जनानाम्।**
**स पूर्व्यो नूतनमाविवासत्तं**
**वर्तनिरनु वावृत एकमित् पुरु।।**

*(अथर्ववेदे ७/२१/२)*

संसारस्य सर्वे मानवाः सम्भूय ईश्वरं प्रार्थयेरन्। परमात्मा एव संसारस्य सुहृद् वर्तते। स प्राचीनेषु प्राचीनः सन्नपि नूतनतायां निवसति। सर्वेषाम् धर्माणां मार्गाः अन्ततः तस्मिन् एव निमज्जन्ति।


संस्कृतभाषा अस्माकं समक्षम् एवंविधां जीवनपद्धतिम्

उपस्थापयति, यस्यां मूल्यानाम् उदात्त आधारो वर्तते। प्राचीनकालात् भारतीयसन्ततीः संस्कृतम् उच्चैः जीवनमूल्यं प्रति प्रेरयति स्म। संस्कृतस्य सन्देशोऽस्ति यत् – **वसुधैव कुटुम्बकम्--** सम्पूर्णः संसारः सम्पूर्णा मानवता च एकः परिवारः अस्तीति। आत्मवत्सर्वभूतेषु इति श्रुतिवचोऽनुसारेण जीवमात्रं प्रति समभावो भवेत्। अयमेव संस्कृतस्य दायः। एभिः सिद्धान्तैर्ज्ञायते यत् समाजस्य प्रतिष्ठापनं व्यक्तेरपेक्षया श्रेष्ठं विधातव्यम्, सर्वत्र आत्मनः प्रकाशः अवलोकनीयः। उपदेशोऽयं वेदादारभ्य इदानीं यावत् भूयो भूय आवर्तमानो दृश्यते। दशमः गुरुगोविन्दसिंहः प्रोक्तवान् यत्-- **मानुस की जात सबै एकै करि मानबो--** सर्वे मानवाः समानाः, तेषु भेदः सर्वथा वर्जनीय इत्याशयः। साम्प्रतमिदमावश्यकं यत् अयं सन्देशः सम्पूर्णे जगतीतले प्रसारणीयः, येन भेदभावनया शोषणेन हिंसया च रहितस्य समाजस्य परिकल्पनं संसिद्ध्येत्।

संस्कृतस्य अस्माकं बोधः वैदग्ध्यं गौरवं च प्रति अस्मान् नयेत् येन वयं सर्वेषां समक्षं जगतः सर्वासां समस्यानां नैसर्गिकसमाधानाय समग्रदृष्टियुतम् उदाहरणम् उपस्थापयितुं शक्नुयाम।

---ooo---

# संस्कृतं, विज्ञानं, वर्त्तमानविश्वं च

**डॉ0 मुरलीमनोहर जोशी**

महर्षिणा कविना विश्वामित्रेण साक्षात्कृतया ऋग्वेदस्य अनया प्रार्थनया स्वविषयं प्रारब्धुमिच्छामि--

**प्राञ्च यज्ञं चकृम वर्धतां गीः**
**समिद्भिरग्निं नमसा दुवस्यन्।**
**दिवः सशासुर्विदथा कवीनां**
**गृत्साय चित् तवसे गातुमीषुः।।**[1]

अस्यां प्रार्थनायां दिव्यवाण्याः ऋषेर्वाण्याः पावनोज्ज्वलायाः संस्कृतवाण्याश्च उत्सवो विद्यते, यदर्थं वयं अत्र समवेताः स्मः।

अस्माकं प्रधानमन्त्रिणः, ये च स्वयम् ऋषयः कवयश्च सन्ति तेषां व्याख्यानेन सभायज्ञे उद्दीप्ताया आकाङ्क्षायाः ज्योतिष्मत्या इच्छायाश्च वह्निः प्रज्ज्वलितः। विश्वामित्रस्य दिव्यमन्त्रात् प्रेरणाम् आसाद्य वयं स्वराष्ट्रे संसारे च संस्कृतस्य विकासदिशि अग्रेसर्तुं शक्नुमः।

संस्कृतम् अस्मभ्यः कथम् इयदमूल्यम्? प्रथमं तावद् विलियमजोंसमहाभागस्य इमे शब्दाः स्मर्यन्ते - "ग्रीकतः अधिकं शुद्धं

लैटिनतः अधिकं समृद्धम्, उभाभ्याञ्च अधिकं परिष्कृतं संस्कृतम्" इति। अथवा श्रीमतः अरविन्दस्य मन्तव्यानुसारेण "संस्कृतं विचाराभिव्यक्तेः अपूर्वं परिष्कृतं समर्थं च साधनं, अस्मिन् स्पष्टता, सुबोधता, चरमसम्भावना शुद्धता चास्ति। इदं सर्वदैव सुघटितपदविन्यासं सूक्तिनिर्माणक्षमं सौन्दर्यसमृद्धिसम्पन्नम्, अपरञ्च प्राचीनकालादेवध्वनेः शैल्याश्च वैभवशालिपरम्पराणां वाहकं वरीवर्त्यते।" अथ सम्भवतस्ततोऽपि महत्त्वपूर्णं तथ्यम् इदम् अस्ति यत् संस्कृतमस्मभ्यम् अद्यापि अमूल्यमस्ति, यतो हि तत्र ज्ञानराशिर्विद्यते, यश्च साम्प्रतिके सङ्कटग्रस्ते काले सर्वथा प्रासङ्गिको वर्तते। यदि वयं तं संसाराय वितरेम, तदैवं याथार्थ्येण स्वदायित्वं अपि निर्वहेम। वर्तमानकाले यदा प्राच्याः प्रतीच्याश्च जनाः परस्परं समीपम् आयान्ति, तदा संसारः भारतात् बहु किमपि आकाङ्क्षते। विल डूरेण्ट- महोदयस्तु भारतसम्बन्धिनः स्वचिन्तनस्य अवसाने इत्थं प्राकटयत् स्वाभिमतम्--"भारतम् अस्मभ्यं परिपक्वमस्तिष्कस्य, सहनशीलतायाः, सौम्यतायाः, अनाग्रहस्य, सन्तोषप्रवृत्तेः, जागरितस्य आत्मनः, शान्तेः जीवात्मसु परस्परम् एकतायाः प्रेम्णश्च दृष्टिं प्रयच्छति।" इति।[2]

## (२)

## संस्कृतग्रन्थेषु समुपलब्धं ज्ञानम्

संस्कृते तन्निबद्धग्रन्थेषु च प्राप्तं ज्ञानं सर्वतोमुखम्, जीवनस्य प्रत्येकं क्षेत्रैः सह सम्बद्धं व्यापकं विततं चास्ति। दार्शनिके आध्यात्मिके च क्षेत्रे ज्ञानपरिधिं परिच्छिद्य निस्सीम प्रति प्राप्नोति इदं चेतनायाः विभिन्नानि रूपाणि स्तरान् च समालोकयति।

संस्कृतसाहित्यस्य बृहत्तरो भागः मानवजीवनस्य कलायाश्च व्याख्यानं विदधाति। यद्यपि अत्र आध्यात्मिकचिन्तनस्य प्राधान्यमस्ति तथापि सहैव न केवलम् आचारशास्त्रस्य विधि- राजनीति- समाज- कलाकौशल- विज्ञानानाम् प्रत्युत कामकलायाः अपि विस्तृतं विश्लेषणं लभ्यते। संस्कृते अश्वानां गजानां च प्रजननस्य पालनस्य च व्यापकं वैज्ञानिकं विवेचनं विद्यते।

विज्ञानस्य क्षेत्रेऽपि इदं ज्ञानं आधुनिकयुगात् पूर्ववर्तिनः कस्यापि देशस्य ज्ञानपरम्परायाः तुलनायां अधिकं दूरगामि वर्तते। अत्र आयुर्विज्ञानस्य शल्यचिकित्सायाश्च पर्याप्तो विकास आसीत्। आयुर्वेदस्तु अद्यापि जीवति। तत्र च द्रुतगत्या अभिनवः शक्तिसञ्चारो भवति। गणित-ज्योतिष- रसायन- क्षेत्रेषु अनेन प्राच्य- प्रत्न- ज्ञानेन केषाञ्चित् विचाराणां गवेषणानां च पूर्वानुमानं कृतमासीत्, तानेव विचारान् गवेषणा वा यूरोपदेशीयाः परस्तात् विलम्बेन आविष्कृतवन्तः। "चला पृथिवी स्थिरा भाति-" इति समुद्गिरद्भिः भारतीयैः खगोलशास्त्रिभिः "पृथिवी गतिशीला विद्यते" - इति घोषणा गैलिलियो इति नामधेयस्य वैज्ञानिकस्य शताब्देभ्यः प्रागेव कृता। सायणेनापि भाष्ये प्रकाशस्य गतिविषये एकस्य सूत्रस्य चर्चा कृताऽस्ति सा चर्चा तदानीं लोकप्रिया आसीदिति प्रतीयते। तद्गतायाः मान्यतायाः याथार्थ्यम् आधुनिकं विज्ञानम् अपि स्वीकरोति। ततोऽपि प्राक् ऋग्वेदे भारद्वाजस्य एको मन्त्रो विद्यते, यस्मिन् भौतिकी गतिः प्रकाशेन कथं परिमातुं शक्यते इति प्रतिपादितम्। तथाहि-

**आ भानुना पार्थिवानि जयांसि**
**महस्तोदस्य धृषता ततन्थ।** [३]

प्राचीनभारतीयगणितेन बिन्दोरङ्कनपद्धतेः विकासः कृतः । सोऽयं विकासो विश्वस्मिन्नपि विश्वे वैज्ञानिकचेतनाया विकासाय नितरां महत्त्वपूर्ण आसीत्। यश्च ज्यामित्यां रेखागणिते वा 'पाइथागोरस-सिद्धान्त' इत्युच्यते, स वस्तुतः शुल्बसूत्रे निरूपितसिद्धान्तस्यैव विकासः अस्ति। आर्यभट्ट- ब्रह्मगुप्त- भास्करैः करणीचिह्नस्य, अनेकेषां बीजगणितीयप्रतीकानां, नकारात्मक-मात्रावधारणायाः, क्रमपरिवर्तनस्य, द्वित्वस्य, वर्गमूलप्राप्तेश्च नियमान् अन्विष्य वैज्ञानिकगणनासु अनितरसाधारणं योगदानं विहितम्। द्व्यंशपरिमाणं यावत् अनिश्चितसमीकरणानां गणना भारतीयवैज्ञानिकैः अष्टमशताब्द्यामेव कृता आसीत्, या च यूरौपीयैः सहस्रवर्षान्तरमपि अज्ञाता अतिष्ठत्। माधवेन न्यूटन-लेबनित्ज़-महोदयाभ्यां शताब्दत्रयात्प्रागेव 'कैलकुलस' इति पूर्वानुमितमासीत्। ज्ञानगवेषणा स्वयमेव गौरवं बिभर्ति, किन्तु ततोऽपि महत्त्वपूर्णो भवति तत्पद्धतेः

परिचयः, यस्य सहयोगेन संस्कृतविद्वांसः विभिन्नगवेषणानि आविष्कारान् च अधिगन्तुं सामर्थ्यं प्राप्तवन्तः।

अस्माभिः स्मरणीयं यत् संस्कृतं तत्सम्बद्धग्रन्थाश्च भीषणाक्रमणानां प्रहारं सोढवन्तः, सम्प्रति तेषां यः अंशोऽवशिष्यते, तस्यापि न पूर्णतः अस्माकं परिचयः यतो हि अधुनापि पाण्डुलिपीनां भूयसी संख्या अवशिष्यते यासां सम्पादनं अध्ययनं च अद्य यावत् नाभूत्। अस्मिन् सन्दर्भे राष्ट्रिय-अन्ताराष्ट्रियस्तरेषु शोधकार्यस्य रूपरेखा अवश्यं निर्मातव्या, एतदस्माकममुम् आग्रहं समर्थये यत् संस्कृताध्ययनस्य ज्ञानस्य च प्रसारः समस्तेऽपि संसारे भवेदिति।

(३)

## संस्कृते विज्ञानं चैतन्यं च

इदं सर्वथा महत्त्वपूर्णं यत् संसारे संस्कृते तत्सम्बद्धेषु ग्रन्थेषु निहितज्ञानस्य अन्वेषणाय परिचयाय च अपेक्षा सम्प्रति अतितराम् अनुभूयते। इदम् असन्दिग्धं यत् चिन्तनेन अधिगतानि सूक्ष्मातिसूक्ष्माणि रहस्यानि भारतीयदर्शनेषु स्वतः सिद्धानि। अद्यतनं भाषावैज्ञानिकं चिन्तनम् अपि पाणिनेः भर्तृहरेः सिद्धान्तस्य महत्त्वम् अङ्गीकरोति, अनुसन्धानस्य भागविशेषे एव वैज्ञानिकविचारः प्राचीनानां निष्कर्षाणां प्रतिनिधित्वं कुरुते। अभिनवैः मनोवैज्ञानिकानुसन्धानैः भारतीयमनोविज्ञानस्य पुष्टिर्भवति। यदि पाश्चात्त्या अस्यां दिशि अनुसन्धाने अग्रेसराः भवेयुः, तर्हि भारतीययोगस्य भारतीय-मनःशरीर-विज्ञानस्य च प्रतिपत्तीनां निष्कर्षाणां च समर्थनम् अवश्यमेव स्यादिति मे मतिः। ब्रह्माण्डविज्ञानक्षेत्रेऽपि भविष्यत्काले वैज्ञानिकाः स्वीकरिष्यन्ति पदार्थस्य ज्ञेयक्षेत्रातिरिक्तानां चेतनास्तराणाम् अस्तित्वम् इत्यहं मन्ये। यतो हि भारतीयचिन्तनपद्धतेः विद्यते कश्चनमूलाधारः। समकालिके अनुसन्धानक्षेत्रे तत्सम्पर्केण चेतनासम्बद्धस्य ज्ञानस्य माहात्म्यं वर्धिष्णु वर्तते।

देकार्तमहोदयस्य द्वैतवादः न्यूटनमहोदयस्य ब्रह्माण्डविषयकं यान्त्रिकं प्रारूपं च निरस्य साम्प्रतं भारतीयतत्त्वाबोधेन नेदीयसी जायते

आधुनिकी वैज्ञानिकचिन्तनपद्धतिः। अस्याः पद्धतेः साम्प्रतिकोऽयं विकासः चतुर्षु चरणेषु सम्पन्नः। तद्यथा-

**प्रथमः-** भारतीयः वैज्ञानिकः आचार्य-जगदीशचन्द्रबोसमहोदयः शतवर्षपूर्वमेव विज्ञान-संसारसमक्षं न केवलं जीवनचेतनयोः मध्ये अपितु जीवन-पदार्थयोः मध्येऽपि ऐक्यं प्रासाधयत्। एवं द्वैतवादो विखण्डितोऽभवत्।

**द्वितीयः-** डारविन्-महाशयः विकाससिद्धान्तस्य आधारभूमिं समस्थापयत्, यत्र जीवन-पदार्थयोः मस्तिष्कोत्पत्तिसम्बद्धाः प्रश्नाः समुद्भाविताः। यान्त्रिकव्याख्यामुखेन एतेषां समाधानं तावदशक्यम् आसीत्। बर्गसाँ-अलेक्ज़ेण्डर-व्हाइटहेड-टेलार्टडी-चार्डिनप्रमुखाः चिन्तकाः विकास -नियन्त्रक-शक्तिस्वरूपेण चेतनां स्वीकृतवन्तः।

**तृतीयः-** प्रमातृयान्त्रिकी (क्वाण्टम् मेकेनिक्स) इत्यस्याः पद्धतेः विकासः हाईज़नबर्गमहोदयस्य अनिश्चितत्तासिद्धान्तः बेलमहाशयस्य प्रमेयश्च उपपारमाणविक-पदार्थक्रियास्वपि एकताचैतन्ययोः माहात्म्यं व्यवस्थापयामासुः।

**चतुर्थश्च-** परासंवेदिबोधः मस्तिष्कस्य उच्चतर-स्तर-सम्बन्धितानि अनुसन्धानानि च वैश्विकचेतनामहत्त्वम् अङ्गीकुर्वन्तचि।

एतादृशाः नैके निष्कर्षाः संस्कृतस्य महत्त्वदिशि एव सङ्केतयन्ति। यदि एतादृशी काचिद् भाषाऽस्ति, यत्र निरन्तरं चेतनासम्बन्धि चिन्तनं विधीयते, तर्हि सा भाषा संस्कृतभाषा एवास्ति। अनादिकालात् ऋषिभिः येषां वेदानां साक्षात्कारः कृतः, तेषामुपरि साम्प्रतं अनुभवस्य असङ्ख्यानि रूपाणि चेतनायाश्च अनन्तानि स्तराणि समाधृत्य विचार-विमर्श-जातं प्रवर्तते, तेषाम् अध्ययनं तदधिकृत्य शोधकार्यं च अनुसन्धातृभिः विधयेम्। इयं प्रक्रिया अन्तर-शास्त्रियानुसन्धानमाध्यमेन नूनं अग्रसरिष्यति। अस्यां प्रक्रियायां संस्कृतं संसारस्य सर्वोत्कृष्टभाषारूपेण समुन्नतं स्थानमधिकरिष्यति।

दर्शनक्षेत्रे साहित्यक्षेत्रे च एवंविधाः सङ्केताः पूर्वकालादेव प्राप्यन्ते। शॉपेनहावरमहोदयाः ऑल्डसहक्सलेमहोदयाः इमर्सन-महाशयाश्च उपनिषदां माहात्म्यं ज्ञातवन्तः, यत्र चेतनासम्बद्धं उन्नतं

चिन्तनं विद्यते। शॉपेनहावरमहोदयेनोक्तं यत् "सम्पूर्णेऽपि संसारे उपनिषद्भ्यः उदात्तं लाभकरञ्च चिन्तनं कुत्रापि नास्ति। इमाः उपनिषदः मम जीवने शान्त्यै मम निर्वाणकाले च शान्त्यै अलं स्युः।" इति।

इमर्सनमहाशयः स्वोपनिबद्धे ब्रह्मनामके काव्ये औपनिषदं सारं समभिव्यञ्जयन् उक्तवान्-- "अहमेव सन्देहः, सन्देहकर्ता च, अहमेव तद्गीतं यच्च ब्राह्मणैः गीयते।" इति।

सम्प्रति भूमण्डलीकरणं प्रति सरति संसारः। संसारस्य एकपरिवारत्वे परिकल्पना परिवर्धते। तत्र उपनिषदां सन्देशः अस्मभ्यं समधिकं महत्त्वं भजते। वयं उपनिषदां चेतनायाः तस्याः अवस्थायाः ध्वनिं शृणुमः येन सर्वविधम् असामञ्जस्यं दुःखं च समाप्यते।

**यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति।**
**सर्वभूतेषुचात्मानं ततो न विजुगुप्सते।।**
**यस्मिन् सर्वाणि भूतनि आत्मैवाभूद् विजानतः।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः।।**

## (४)

## संस्कृतम् एका जीविता भाषा

इदं निर्भ्रान्तं वक्तुं शक्यते यत् संस्कृतस्य ऊर्ध्वोन्मुखो विकासः अवश्यम्भावी। अपेक्ष्यते केवलम् एकस्याः पद्धतेः कार्यक्रमस्य रूपरेखायाः निर्माणम्, येन वयं पुनरपि शीघ्रं सुनियोजितरूपेण प्राप्नुयाम स्वलक्ष्यम्। अस्माभिः प्रथमम् इदं ध्यातव्यम् यत् संस्कृतम् अनादिकालादेव भारतस्य अखिलभारतीयभाषापदम् अध्यास्ते। अस्य च विद्यते सार्वभौमः प्रभावः। एतत् कथनं सर्वथा अनुचितं भ्रामकं च यत् संस्कृतं मृतभाषा, इदं केवलं शास्त्रिया भाषा वेति। संस्कृतं निरन्तरं समेधते, विविधान् आघातान् सोढ्वाऽपि इदम् अस्माकं सुदीर्घम् अतीतं वर्तमानेन योजयति।

इदमपि ध्येयं यत् एकोनविंशतितमायाः शताब्द्याः ह्रासकालेऽपि महर्षिदयानन्दसरस्वती स्वान्दोलनं प्रारभमाणः जनसामान्यं संस्कृतेन समबोधयत्। यदि संस्कृतं जीवितभाषारूपेण प्रचलितं नाभविष्यत् तदा

एवं न स्यात्।

इदमपि उल्लेखनीयं यत् आधुनिकयुगस्य आरम्भिकवर्षेषु संस्कृते अप्पाशास्त्रि- वेलूकोण्डारामराय- राधामण्डलम्- नारायणशास्त्रि- महामहोपाध्यायलक्ष्मणसूरि- पण्डितमधुसूदनओझा-सदृशा लेखका अभूवन् येषु एकैकेन षष्टिसंख्यातः चत्वारिंशदधिकशतसंख्याकाः ग्रन्था विरचिताः।

आधुनिकयुगे अचिरेषु अपि वर्षेषु संस्कृते महत्त्वपूर्णं लेखनं सञ्जातम्। कृष्णमाचार्य- श्रीधरभास्करवर्णेकर- पण्डितबलदेवोपाध्याय- रामज्युपाध्याय- वाचस्पतिगैरोला- प्रभृतिभिः निबद्धाः संस्कृतसाहित्ये-तिहासग्रन्था अस्मिन् विषये प्रामाणभूताः तिष्ठन्ति।

डॉ० वेङ्कटरमणराघवन् इत्याख्यस्य विद्वत्कवेः लेखनम्, श्रीश्रीधरभास्करवर्णेकरमहोदयस्य संस्कृतवाङ्मयकोशः अन्यानि चाधुनिकसंस्कृतकाव्यानि संस्कृतस्य जीवनीं शक्तिं संस्कृतसाहित्यस्य नैरन्तर्यं च बोधयन्ति।

इदमपि ध्यातव्यं यत्साम्प्रतिकाः संस्कृतकवयः अधुनातनं विषयमालक्ष्य महाकाव्यानि व्यरीरचन्। संस्कृतनाटकेषु समकालिकेषु अधुनातनाभिरुचेः अभिव्यक्तिः समुपलभ्यते। इदमपि उल्लेख्यं यत् कैश्चित् प्रगीतकारैः महत्त्वपूर्णानि गीतानि रचितानि, तद्यथा- अप्पाशास्त्रिणः "पञ्जरबद्धः शुकः" उल्लेखमर्हति, यत्र इदानीन्तनसमस्या अभिव्यञ्जिताः। एतदतिरिक्तं वर्णेकरस्य "तीर्थभारतम्", "श्रीरामसङ्गीतिका", "श्रीकृष्णसङ्गीतिका"- इत्यादीनि काव्यानि अपि स्मरणीयानि। एतादृशकाव्येषु गीतगोविन्दस्य परम्परा नूतनसौन्दर्येण संवलिता विलसति विकसति च। पण्डितप्रवरस्य अम्बिकादत्तव्यासस्य शिवराजविजयः उपन्यासः एवंविधा अन्ये चोपन्यासाः आधुनिकसंस्कृतसाहित्यस्य नवीनां विकासदिशं निर्दिशन्ति।

इदमपि प्रशस्यं यत् अचिरगतेषु वर्षेषु संस्कृतकथासाहित्यस्य प्रभूतविकासोऽभूत्, तत्र साम्प्रतिकयुगस्य चेतना शैली च परिलक्ष्यते, एतदन्तराले आलोचनात्मक-निबन्धानामपि उन्नतं स्वरूपम् आयातम्।

साम्प्रतिके काले परःशतं संस्कृतपत्रिका- प्रकाश्यन्ते,

आकाशवाण्या दूरदर्शनेन च क्रियमाणेषु प्रसारणेषु संस्कृतं समृद्धं भवति। अहम् इदमपि वक्तुम् ईहे यत् संस्कृतविश्वविद्यालयानां स्थापनया राष्ट्रियसंस्कृतविद्यापीठैश्च संस्कृतविकासः प्रोत्साहितः, विभिन्न-विश्वविद्यालयानां संस्कृतविभागानां, भण्डारकर-प्राच्यविद्या-प्रतिष्ठानस्य डेक्कनमहाविद्यालयस्य च माध्यमेन संस्कृतविकासस्य अभिनवा गतिः दृश्यते। यदा प्रभृति संस्कृतं सङ्गणकयन्त्राय आदर्शभूतम् उपयुक्तं स्वीकृतं तदा प्रभृति विभिन्नस्थानेषु सङ्गणकमाध्यमेन अनुसन्धानसामग्रीणां सुरक्षणं ग्रहणं प्रयत्नेन समारब्धम्।

किन्तु नेदं पर्याप्तम्, इदं तु उपक्रमचिह्नम्। संस्कृतमहत्त्वं विभाव्य शिक्षायाः प्रतिस्तरं प्रतिरूपं संस्कृतशिक्षणप्रबन्धो भवेत्, संस्कृताय तृतीयवैकल्पिकभाषात्वे वरीयस्त्वं दीयेत, अतिरिक्तविषयरूपेणविद्यार्थिभ्यः, संस्कृताध्ययनसौविध्यं दीयेत। रुचिं ददानेभ्यः तथा पाठ्यक्रमो वैकल्पिकभाषारूपेण पञ्चवर्षात्मकः निर्मीयेत, येन छात्राणां संस्कृतभाषादाक्ष्यं सिद्ध्येत।

पुनश्च भारतीयसंस्कृतिसम्बद्धशिक्षापाठ्यक्रमेषु संस्कृतस्य अनिवार्यता स्यात्। येषां विषयाणां भारतीयसंस्कृत्या सह सम्बन्धोऽस्ति अथवा यत्र च भारतीयसंस्कृतेः अध्ययनस्य आवश्यकता अस्ति तत्र संस्कृतस्य शिक्षा अनिवार्यरूपेण भवेत्। संस्कृते निहितस्य ज्ञानस्य परिचयार्थम् अनया भाषया सह वैज्ञानिकान् दार्शनिकान् अनुसन्धाकर्तॄन् अन्यांश्च परिचाययितुम् आवश्यककार्यक्रमनिर्माणम् अपेक्ष्यते। ईदृशोऽप्येकः कार्यक्रमो विकासनीयः यत्र भारते प्राचीनकाले विकसितज्ञानस्य अधुनातनज्ञानेन समन्वयः स्यात्, येन अस्माकं आत्मविश्वासेन साहसेन च भविष्यत्प्रति अग्रेसृतिः स्यात्।

एकः अन्योऽप्येवं कार्यक्रमः विकसितः स्यात्, येन प्राच्यपाश्चात्त्ययोः विज्ञानाध्यात्मयोः समन्वयः सम्भवेत्, येन चेतनायोगौ प्रति समधिकं ध्यानं दीयेत।

सम्प्रति संस्कृताध्येतृभ्य इदम् अपेक्ष्यते यत् ते स्वचिन्तने लेखने च विचारशैल्योः स्तरेण उदारतायाः आधुनिकतायाः दीप्तेश्च समन्वयं कुर्युः। इयमपेक्षा तदैव पूर्येत यदा अस्माभिः स्वदेशे बौद्धिकेन नैतिकेन

सौन्दर्याभिव्यक्त्या इन्द्रियाग्राह्यानुभवैश्च संयोगः स्यात्। एतदर्थम् अस्माभिः वैदिकेभ्यः औपनिषदेभ्यः ऋषिभ्यः प्रेरणा ग्राह्या। वाल्मीकि-व्यास-कालिदासाः स्मरणीयाः। इलायाः सरस्वत्याश्च शक्तिरुद्बोध्या। तेभ्यः सर्वेभ्यः सृष्टिशीलतायाः चैतन्यं अर्जयित्वा भाविनं कालं प्रति चरणन्यासो विधेयः।

सङ्क्षेपतः अस्माकं विचारकैः दृश्ये दृष्टिः, श्रवणीये श्रुतिः विचारे बुद्धिः कथने वाणी, जीवने च स्फूर्तिः विधेया स्यात्, यथोक्तं केनोपनिषदि-

**श्रोत्रस्य श्रोत्रं मनसो मनः वाचो ह वाचं,**
**प्राणस्य प्राणः चक्षुषः चक्षुः।**

इति।

अहं सम्मेलनमिमं वैदिकमहर्षेः वामदेवस्य तां महतीं प्रार्थनां प्रति समर्पयामि यत्र एतादृश्या वाण्या आकाङ्क्षा अभिव्यज्यते या उद्दीप्तेच्छायाः अभिव्यक्तिं तेजस्विविवेकिपुरुषाणां प्रसन्नताञ्च संसाधयेत्।

**एभिर्भव सुमना अग्ने अर्कैरिमान्**
**स्पृश मन्मभिः शूर वाप्नान्।**
**उत ब्रह्माण्यङ्गिरो जुषस्व सं**
**ते शस्तिर्देववाता जरेत।।**[५]

---ooo---

---

सन्दर्भाः-

१- ऋग्वेदे ३।१।२

२- द्रष्टव्यम्-- Will Durant-- Our Oriental Heritage, पृ० ६३३

३- ऋग्वेदे ६।६।६

४- ईशावास्योपनिषदि ६,७

५- ऋग्वेदे ४।३।१५

# संस्कृतपरिषत्प्रकाशनानि

*(सम्पर्कः- संस्कृतपरिषद्, संस्कृतविभागे, डा० हरीसिंहगौर-विश्वविद्यालयः, सागरम्- ४७० ००३ (म०प्र०)*

१-संस्कृत कवियो के व्यक्तित्व का विकास (पुरस्कृतम्)- डॉ० राधावल्लभ त्रिपाठी-१९७६, मू० २५ रु०

२-वाल्मीकिविमर्शः- (पुरस्कृतम्) ,ले०-स एव ,१९७९, (अप्राप्यम्)

३-आदिकवि वाल्मीकि- ले० स एव ,१९८०, मू० २५ रु०

४-नाट्यमण्डपम्- ले० स एव, १९८०, (अप्राप्यम्)

५-भारतीयरङ्गसमुन्मेषः- ले०- स एव, १९८१, मू० १५रु०

६-कुन्दमाला- महाकविदिङ्नागस्य कृतेः हिन्दीभाषानुवादः, अनु०-स एव, १९८२, मू०- १० रु०

७-प्रबुद्धरौहिणेय- मुनिरामभद्रस्य कृतेः हिन्दीभाषानुवादः, अनु०-स एव, मू० ५रु०

८-मुकुन्दविलासम्- महाकविनीलकण्ठदीक्षितप्रणीतमहाकाव्यम्। -सं०-स एव। १९८०, (अप्राप्यम्)

९-न्यायसत्रम्- न्यायदर्शनमाश्रित्य परिसंवादः,-सं०-स एव। १९८४,मू० ६०रु०

१०-संस्कृत साहित्य को इस्लाम परम्परा का योगदान-- सं०--सं०-स एव।, १९८६,मू० ७० रु० (अप्राप्यम)

११-संस्कृत कविता की लोकधर्मी परम्परा-ले०- -सं०-स एव। १९८६, मू० ३०रु०

१२-सिद्धान्तसम्राट्- ज्योतिषग्रन्थ, सं०- मुरलीमनोहर चतुर्वेदी (पुरस्कृतम्)- १९८२, मू०१५रु०

१३- आधुनिकसंस्कृतमहाकाव्यानुशीलनम्- डॉ० रहसविहारी द्विवेदी, (अप्राप्यम्)

१४-रसार्णवसुधाकरः - सं० डॉ० रेवाप्रसाद द्विवेदी ( अप्राप्यम्)

१५- आधुनिकसंस्कृतसाहित्यानुशीलनम्-सं०- डॉ० रामजीउपाध्यायः, १९६५, मू० ३० रु०

१६- सुसंहतभारतम्- संस्कृतनाटकम्, ले० पु० रामचन्द्रुडुः। मू० ३०रु०।

१७-श्रीहर्ष के रूपक - डॉ० गोकुलप्रसादत्रिपाठी, १९८१, मू० ४० रु०

१८-सिन्धुलिपिरहस्योद्घाटनम्- डॉ० फतहसिंहः। मू० १५रु०

१९-कर्णभार- भास, हिन्दीभाषानु० डॉ० इन्द्रमोहनसिंहः। मू० १०रु०



२०-अप्राप्य नाट्यशास्त्रीय ग्रन्थ- सं० डॉ० राधावल्लभ त्रिपाठी, मू० २०रु०

२१-भरटकद्वात्रिंशिका- प्राचीनकथासंग्रहः। हिन्दीभाषानुवादसहितः।, अनु०- -सं०-स एव। मू०-१५रु०

२२-महाकवि भवभूति और उनका नाट्यलोक- सं० राधावल्लभः त्रिपाठी, भास्कराचार्यः त्रिपाठी च।मू० ५० रु०

२३-सन्धानम्- मौलिकसंस्कृतकाव्यसंग्रहः। प्रणेता- राधावल्लभः। १९८६, मू० ३०रु०।

२४-लहरीदशकम्- संस्कृतकाव्यसंग्रह- प्रणेता- -सं०-स एव।।१९९२ , मू० ३० रु०

२५-प्रख्या- संस्कृतकाव्यशृङ्खला।- सं० -सं०-स एव।, भागः-१, मू० ३०

२६-कालिदासपरिशीलन- सं०-सं०-स एव। , १९८७, मू० २०रु०

२७- कालिदास की समीक्षा परम्परा- ले० वही, १९८७, मू० ३०रु०

२८-भारतीय नाट्य स्वरूप और परम्परा- ले०-स एव। १९८७, मू०२५रु०

२९-शब्दादर्शः सं० डॉ० बाल शास्त्री, मू०१५रु०

३०-वेददीपिका- सं० डा० बाल शास्त्री,डॉ०रमाकान्तपांडेयश्च।मूल्य-३०रु०

३१-वाक्त्रयी- पालि-प्राकृतापभ्रंशभाषात्रयपाठसङ्कलनम्, हिन्दीव्याख्याटिप्पमादिसहितम्।सं०- डॉ० अच्युतानन्ददाशः, मू०२५रु०

३२-गीतधीवरम्- मौलिक गीतिकाव्य- प्रणेता- राधावल्लभ । १९९५। मू-३०रु०

## नाट्यपरिषत्प्रकाशनानि

१- दमयन्ती- मौलिकहिन्दीनाटकम्।- मू० ४० रु०

२-भुवनदीप- मौलिकहिन्दीनाटकम्। मू० ४०रु०

३-नाट्यशास्त्र के बीज शब्द- भागः-१,२ मू० १५ रु० प्रत्येकम्

४-नाट्यशास्त्रसन्दर्भसूची- मू० १०रु०

## पत्रिका

**नाट्यम्-** हिन्दीत्रैमासिकम्, ४६-अङ्काः प्रकाशिताः। आजीवनसदस्यता- ५००रु०,वार्षिकशुल्कम्-३० रु०।

# किं तात्पर्यज्ञानं शाब्दबोधे कारणम्?

सच्चिदानन्दमिश्रः

शब्दाज्जायमानो बोधः शाब्दबोधपदवाच्यो भवति। शाब्दबोधे च तात्पर्यज्ञानमपि कारणं भवतीति श्रूयते। अस्मिंल्लेखे विचार्यते यदस्मिन् प्रवादे कियान् युक्तिः विद्यते न वा विद्यते?

## शाब्दबोधे तात्पर्यज्ञानस्यभूमिका

न्यायदर्शनसम्प्रदाये शाब्दबोधः कारणसामग्रीजन्यो भवति। कारणसामग्र्यां पदज्ञानं शक्तिज्ञानं पदजन्या पदार्थोपस्थितिः आसक्तिज्ञानं आकाङ्क्षाज्ञानं योग्यता ज्ञानञ्चान्तर्भवन्ति। अस्यामेव कारणसामग्र्यां तात्पर्यज्ञानमप्यन्तर्भवतीति राद्धान्तः। अस्यां कारणसामग्र्यां पदज्ञानं करणं भवति पदार्थोपस्थितिः व्यापारो भवति, अस्यामेव पदार्थोपस्थितौ शक्तिज्ञानस्यापि भवत्युपयोगः। शक्तिज्ञानासत्तिज्ञानाकाङ्क्षाज्ञान–योग्यताज्ञानतात्पर्यज्ञानानि शाब्दबोधे सहकारीणि भवन्ति।

## तात्पर्यस्य स्वरूपम्

अत्र प्रश्नोऽयं समुदेति यत्तात्पर्यज्ञानस्य स्वरूपं कीदृशम्? किं नाम तात्पर्यं यस्य ज्ञानं शाब्दबोधे उपयुज्यते? अत्र समाधीयते विश्वनाथपञ्चाननभट्टाचार्येण कारिकावल्यां 'वक्तुरिच्छा तु तात्पर्यम्[1]' इति। तत्त्वचिन्तामणौ शब्दखण्डे महामहो–पाध्यायेन गङ्गेशोपाध्यायेन 'तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यम्' इति तात्पर्यस्वरूपं प्रतिपाद्यते।

किन्तु नहीदृशं तात्पर्यस्वरूपं वैयाकरणेन स्वींकर्तुं शक्यते न वा वेदापौरुषेयत्ववादिभिः मीमांसकैः वेदान्तिभिश्च। वैयाकरणानामेषा समस्या विद्यते यत् यदि वक्तुरिच्छा तात्पर्यमिति स्वीक्रियते तर्हि घटशब्दात् पटस्यापि प्रत्ययो भवेत् वक्तुः तात्पर्ये सति। यतोहि 'सर्वे सर्वार्थवाचकाः' इति हि तेषां नयः। अर्थपदयोः वाच्यवाचकभाव एव अर्थे पदस्य शक्तिःर्नास्ति। अतो वैयाकरणाः 'ईश्वरेच्छा तात्पर्यम्' इति सिद्धान्तं स्वीकुर्वन्ति। इदञ्च नैयायिकस्वीकृतं शक्तिस्थानीयम्। नैयायिकनय

ईश्वरेच्छैव शक्तिरिति नाविदितं विद्वद्भिः। नानार्थकपदस्थले तु तात्पर्यं प्रयोक्तुरिच्छारूपम्[२]।

मीमांसकैः वेदान्तिभिश्चापि 'वक्तुरिच्छा तात्पर्यम्' इति स्वीकर्तुं नैव शक्यते यतोहि मीमांसकाः वेदान्तिनश्च वेदापौरुषेयत्ववादिनः। मीमांसकानां 'न कदाचिदनीदृशं जगत्' इति सिद्धान्तानुसारं नास्ति वेदानां कश्चित् कर्ता सम्प्रदायप्रवर्तको वा। अनादिकालतः प्रवृत्ताः वेदाः तर्हि कस्य तात्पर्यं स्यात्? वक्ता च स्वतन्त्र एव स्यात्। वेदान्तिभिर्यद्यपिसर्गप्रलयौ स्वीक्रियेते किन्तु नहीश्वरस्य वेदकर्तृत्वं तैः स्वीक्रियते। वेदान्तिनां मते वेदाः सर्गादौ परमेश्वरेण प्रोच्यन्ते किन्तु, क्रमविशेषविशिष्टा एव वर्णाः प्रोच्यन्ते। यादृशः क्रमः पूर्वस्मिन् सर्गे आसीत् तादृश एव क्रमोऽस्मिन्नपि सर्गे भवति। अत उच्चारयितुः परमेश्वरस्य स्वातन्त्र्याभावेन नियतैकप्रकारकत्व– नियतानुपूर्वीविशिष्टत्वादिरूपमयौरुषेयत्वं वेदानां भवति। यश्च स्वतन्त्रेच्छो वक्ता भवति तस्यैव तात्पर्यं स्वीकर्तुं युज्यते यथा परतन्त्रदूतादिप्रोक्तवाक्येषु नहि दूतादेः तात्पर्यमवसीयते किन्तु दूतप्रेषयितुरेव तात्पर्यं स्वीक्रियते। अतो नहि वेदेषु वक्तुरिच्छा परमेश्वरीयापि सम्भवति। किन्तु तात्पर्यनिर्णय आवश्यक इत्यत्र मीमांसकानां वेदान्तिनाञ्च विद्यत ऐकमत्यम्। यतो हि प्रसिद्धोऽयं श्लोकः –

'उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।

अनेन श्लोकेन उपक्रमादीनां षण्णां तात्पर्यनिर्णये लिङ्गत्वं प्रतिपादितम्। एतदर्थञ्च मीमांसकाः भिन्नां सरणिमाश्रयन्ते। कुमारिलभट्टपादाः तन्त्रवार्तिके प्रतिपादयन्ति यत् वेदमन्त्रेषु परमात्मानः (जीवा एव इमेऽवगन्तव्याः) प्रतिष्ठिताः। तेषामेव तात्पर्यमत्रावगन्तव्यम्। एष च सिद्धान्तः तन्त्रवार्तिके 'तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रितः। इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः।।' इत्यारभ्य प्रतिपादितः।

वेदान्तिनस्तावत् तत्प्रतीतिजननयोग्यत्वं तात्पर्यम्[३], इति स्वीकुर्वन्ति। एतादृशं तात्पर्यं यदि निरुक्तं भवति तदाऽऽयात्येषाऽऽपत्तिर्यत् लवणानयन प्रतीतीच्छया प्रयुक्तमपि 'सैन्धवमानय' इत वाक्यं विद्यत एवाश्वानयनप्रतीतिजननयोग्यमिति तात्पर्यसत्त्वात् यदा लवणानयनप्रतीतीच्छया वाक्यमिदं प्रयुज्यते तदापि स्यादश्वानयनप्रतीतिः। अतः तत्प्रतीतिजननयोग्यत्वे सति तदितरप्रतीतीच्छयानुच्चरित्त्वं तात्पर्यम्[४] इति तात्पर्यस्वरूपं विवक्षणीयम्। इदन्तात्पर्यं वेदानामपौरुषेयत्वानुरोधेन

स्वीक्रियते। अन्यथा नैयायिकाभिमतमेव तात्पर्यस्वरूपं स्वीकर्तुं युक्तम्।

व्यासतीर्थेन तर्कपाण्डवे 'तत्प्रमितिशेषत्वं तात्पर्यम्'[५] इत्येवं तात्पर्यलक्षणं प्रोक्तम्। तत्प्रमितिशेषत्वञ्च तत्प्रमित्येकोद्देश्यकत्वरूपम्। इदमपि तात्पर्यलक्षणं वेदापौरुषेयत्वानुरोधेनैव प्रवृत्तम्। यतोहि नैयायिकाः वेदानां पौरुषेयत्वं साधयितुं युक्तिं प्रस्तुन्वन्ति यत् श्रुतिकुमार्यास्तात्पर्यरूपा गर्भ एव पुयोगे मानमिति वेदाना पौरुषेयत्वसिद्धिः। एवं स्पष्टीभवति यत् साधारणतः तत्प्रतीतीच्छयोच्चरितत्वरूपमेव तात्पर्यं निर्वक्तुं शक्यते। तत्प्रतीतिजननयोग्यत्वादिरूपं तात्पर्यन्तु वेदापौरुषेयत्वानुरोधादेव स्वीकरणीयम्। अत एवालङ्कारिका अपि तत्प्रतीतीच्छयोच्चरितत्वरूपमेव तात्पर्यं स्वीकुर्वन्ति[६]।

## तात्पर्यज्ञानस्यावश्यकता

विश्वनाथपञ्चाननेन कारिकावल्यां 'आसक्तिर्योग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते' (कारिका८२) इत्येवं रीत्या तात्पर्यज्ञानमपि शाब्दबोधार्थमपेक्षितं भवतीति प्रतिपाद्यते। तर्कसंग्रहकृताऽन्नम्भट्टेन तर्कसङ्ग्रहे यद्यपि शाब्दबोधकारणेषु तात्पर्यज्ञानस्य परिगणनं नैव कृतम्, किन्तु तर्कसंग्रहदीपिकायां लक्षणाविवेचनावसरे तात्पर्यज्ञानस्यापि शाब्दबोधहेतुता स्वीकृता। जगदीशेन तर्कामृते 'आकाङ्क्षायोग्यतासत्तितात्पर्यज्ञानानि सहकारीणि' इति कृत्वा शाब्दबोधे तात्पर्यज्ञानस्य सहकारिकारणता प्रतिपादिता[७] किन्तु शब्दशक्तिप्रकाशिकायां तात्पर्यज्ञानस्य कारणत्वं खण्डितम्[८]। अत एव सन्देहस्य विवादस्य चावसरः। न्यायलीलावत्यां वल्लभाचार्येण तात्पर्यज्ञानस्य शाब्दबोधोपयोगिताप्रतिपादनाय 'तात्पर्यज्ञानं शाब्दबोधोपयोगि ज्ञायमानकरणे ज्ञानोपयोगिव्यभिचारिवैलण्यत्वात् व्याप्तिवत्'[९] इत्यनु प्रदर्शितम्। तात्पर्यज्ञानस्य शाब्दबोधोपयोगितां व्यवस्थापयतीदमनुमानमिति तेषां सम्मतिः।

मीमांसकवर्याः भाट्टपादाः अभिधाद्यतिरिक्तां तात्पर्यवृत्तिं स्वीकुर्वन्ति। अभिधादिभिः पदैः पदार्थोपस्थितिः सञ्जायते पदार्थोपस्थितिसमनन्तरं वाक्यार्थबोधः सञ्जायते। वाक्यार्थबोधश्च तात्पर्यवृत्त्या भासते। इदमभिहितान्वयवादिनां मतमित्युच्यते।

नैयायिकास्तु 'अनुपस्थितस्य संसर्गस्य बोधः संसर्गमर्यादया भवति' इति स्वीकुर्वन्ति। संसर्गस्य मर्यादा आकाङ्क्षैव। आकाङ्क्षा च तत्तत्पदाव्यवहितोत्तर–

तत्पदत्वाद्यानुपूर्वीरूपा[10]। अतः सामान्यतया तात्पर्यज्ञानस्य संसर्गावबोधे कश्चिदुपयोगो विद्यते नैतत् प्रतिभाति किन्तु यत्र आकाङ्क्षा विविधसंसर्गावबोधप्रयोजिका तत्रापि कश्चिदेक एव संसर्गः भासते, कुत एष नियमः? अत्र समाधीयते यत् तात्पर्यज्ञानमपि शाब्दबोधे कारणं भवति। यत्संसर्गविषयकं तात्पर्यज्ञानं भवति तस्यैव संसर्गस्य शाब्दबोधेऽवबोधो भवति नान्यस्य[11]। इतिरीत्या तात्पर्यज्ञानस्य शाब्दबोधोपयोगित्वं विद्यते।

एवमेव 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यादिस्थलेषु राजपदस्य कदाचित् पुत्रेण सहान्वयबोधः कदाचिच्च पुरुषेण सहान्वयबोधो भवति। अत्र च तात्पर्यस्यैव नियामकत्वं स्वीकर्तुं शक्यते।[12] एवमेव 'सैन्धवमानय' इत्यादौ कदाचिश्वानयनं बोध्यते कदाचिच्च लवणानयनं बोध्यते। तात्पर्यज्ञानस्य कारणताया अनङ्गीकारे इति न स्यात्।[13]

अत्राशङ्का जायते यत् –वक्तुरिच्छायाः तात्पर्यरूपत्वे यदा आधुनिकसङ्केतः शक्तिरिति नवीनमतं स्वीक्रियते तदा 'गङ्गायां घोषः' इत्यादौ गङ्गापदस्य तीर एव वक्तृसङ्केतसत्त्वात् तस्यैव शक्तित्वस्वीकारात् शक्त्यैव गङ्गापदात्तीरावबोधसम्भवात् लक्षणास्वीकारवैयर्थ्यम्? आशङ्का चेयं समाधीयते गदाधरेण शक्तिवादे यत् पदार्थोपस्थितिद्वारा शाब्दबोधकारणीभूतः सङ्केत एव शक्तिः तात्पर्यज्ञानञ्च साक्षादेव शाब्दबाधोपयोगि भवति यतोहि वृत्त्या समुपस्थित एवार्थे प्रकरणादिना भवति तात्पर्यावधारणम्। यदि लक्षणाया वृत्तित्वं नाङ्गीक्रियते तदा गङ्गादिपदातीरादेरनुपस्थितत्वात् यत्र गङ्गादि पदव्यक्तेस्तात्पर्यग्रहोऽसम्भव एव[14]। संसर्गस्थले तु उद्बोधकान्तरोपस्थितेऽपि संसर्गे तात्पर्यग्रहः सम्भवतीति तत्र वृत्तिग्रहोऽनपेक्षित एवास्ति[15]।

अत्रायमपि केषाञ्चिन्नैयायिकानां पक्षोऽस्ति यत् नानार्थस्थल एव तात्पर्यज्ञानं कारणं भवति शाब्दबोधे नान्यत्र। किन्त्वेष पक्षो निराक्रियते प्रदर्श्यते च युक्तिः -- नानार्थस्थलीयशाब्दबोधं प्रत्येव तात्पर्यज्ञानस्य कारणता यदि स्वीक्रियते तदा गृहीतनानार्थवृत्तिकपदजन्यानुभवत्वस्य तात्पर्यज्ञानजन्यतावच्छेकत्वं स्वीकरणीयमेतच्च गुरुभूतम्। तदपेक्षया शाब्दबोधमात्रे तात्पर्यज्ञानस्य कारणता यदि स्वीक्रियते तदा पदजन्यानुभवत्वस्यैव तात्पर्यज्ञानजन्यतावच्छेदकत्वं स्वीकरणीयमिति लाघवम्[16]। अतः शाब्दबोधमात्रं प्रति तात्पर्यज्ञानं कारणमित्येव पक्ष आदरणीयः।

## तात्पर्यज्ञानकारणातायुक्तीनां समीक्षणम्

तात्पर्यज्ञानकारणताप्रतिपादिका उपर्युक्ताः युक्तीः तात्पर्यज्ञानस्य शाब्द-बोधकारणतां व्यवस्थायितुं समर्थाः न वेति विचारणीयम्। प्रामाण्यवादे तत्त्वचिन्तामणि-कृता 'यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतुः' इति नियमोऽयं स्वीकृतः। यदि तावत् तात्पर्यसन्देहे सति किं वा तात्पर्यव्यतिरेकनिश्चये सति शाब्द-बोधो नैव जायते तर्हि तात्पर्यज्ञानस्य (तात्पर्यनिश्चयस्य) शाब्दबोधकारणत्वं स्वीकर्तुं शक्यम् नान्यथा।

अत्र समाधीयते नैयायिकैः यत् तात्पर्यसन्देहे सति तात्पर्यव्यतिरेकनिश्चये वा सति शब्दबोधो नैव जायते, अतः शाब्दबोधे तात्पर्यज्ञानं कारणमिति निश्चीयते।[१८] किन्तु नैष पक्षः समुचित आभाति – आलङ्कारिकाः नानार्थस्थलेऽप्रकारणिकस्या-प्यर्थस्य व्यञ्जनाधीनं शाब्दबोधं स्वीकुर्वन्ति। तथाहि तन्मते व्यञ्जनाधीनो बोधो नावश्यं तात्पर्यज्ञानमपेक्षते।[१९] नैयायिका यद्यपि व्यञ्जनां नैवाङ्गीकुर्वन्ति, अतो नैव तात्पर्य-ज्ञानस्य शाब्दबोधेऽनपेक्षा पादयितुं शक्या। किन्तु नानार्थस्थले प्राकरणिका-प्राकरणिकयोरर्थयोरुभयोरपि भवत्येवोपस्थितिः। इदञ्चानुभवसिद्धम्। अत एव रमणीयं पयः इत्यादि वाक्यमाकर्णितवद्भिः प्रकरणज्ञैः अज्ञातप्रकरणाः जनास्तात्पर्यं बोध्यन्ते। यद्वक्तुस्तात्पर्यं जले नास्ति किन्तु दुग्धे विद्यते।[२०] नानार्थविषयकोपस्थिति-समनन्तरं कुतस्तावत् प्राकरणिकार्थविषयक एव बोधः सञ्जायते। प्रश्नोऽयं समाधेयः। तात्पर्यज्ञानस्यापि शाब्दबोधे कारणत्वोत् तदुपपद्यत इति नैयायिकाः वदन्ति। किन्तु वक्तुरिच्छारूपं तात्पर्यं नहि प्रत्यक्षतो ज्ञातुं शक्यते परकीयात्मविशेष-गुणानां प्रत्यक्षानर्हत्वात्। स्पष्टतो ज्ञायते यत् प्रकरणज्ञानादिनैव हेतुना तात्पर्यमनुमीयते। अनुमानात्मकमेव तात्पर्यज्ञानं शाब्दबोधे कारणमित्येव पक्ष इति समुपपन्नम्। किन्त्वत्र प्रष्टुं शक्यते यत् अस्तु तर्हि शाब्दबोधे प्रकरणादिज्ञानमेव कारणम्। अत्र पक्षेऽननुगमो दोष इति विश्वनाथपञ्चाननभट्टाचार्याः।[२१] किन्तु जगदीशतर्कालङ्कारास्त्विममेवपक्षं न्यायसम्प्रदायसम्मतमङ्गीकुर्वन्ति। वदन्ति च शब्दशक्तिप्रकाशिकायां – 'अत एव सैन्धवमानय इत्यादावपि लवणपरत्वधीर्न लवणाद्यन्वयबुद्धौ हेतुः, किन्तु तदर्जकत्वेनाभिमतं भोजनादिप्रकरणस्य प्रति-सन्धानमिति न्यायसिद्धान्तः[२२]।

तात्पर्यज्ञानस्य शाब्दबोधहेतुतास्वीकारेऽपरापि समस्या गले पतति।

तात्पर्यावच्छेदकतयैव सर्वत्र वाक्यार्थसिद्धिसम्भवात् शाब्दबोधस्यागृहीतग्राहित्वं न स्यादनुवादकत्वञ्च शब्दमात्रस्य प्रसज्येत।'[23] अतस्तात्पर्यज्ञानं नास्ति शाब्दबोधे कारणम् कविवाक्यानां भिन्नार्थपरत्वस्य निश्चयेऽपि सामाजिकादेस्तस्मात् शाब्द-बोधस्यानुभवसिद्धत्वात्, शुकादिवाक्यानाञ्च स्वार्थपरत्वाभावनिश्चयेऽपि ततः शाब्दबोधस्यानुभवसिद्धत्वात्। तात्पर्यज्ञानस्य शाब्दबोधे कारणतास्वीकारे च स्फुट एवानयोः स्थलयोः व्यभिचारो भवति। [24]'अत एव च व्यञ्जनानिराकरणावसरे स्पष्टमेव जगदीशेन प्रोच्यते – 'तात्पर्यधियो हेतुत्वस्य पूर्वं परास्तत्वात्, अत एव प्रकरणादीना-मननुगतानां क्वचिदसत्त्वेऽपिक्षत्यभावात्' (शब्दशक्तिप्रकाशिका पृ.१५१)

किन्त्वत्र प्रश्नोऽयं समुदेति यत् नानार्थस्थले कुतस्तावदेकस्यैवार्थस्य शाब्दबोधविषयीभावो भवति नापरस्य ? अत्र समाधीयते जगदीशेन यत् तत्तदर्थक-शाब्दसामान्यं प्रत्येव तत्तदर्थनिरस्तात्पर्यकत्वधियः प्रतिबन्धकत्वात्' (पृ.१५२–१५३ शब्द शक्तिप्रकाशिका)

पण्डितराजजगन्नाथा अपि तात्पर्यज्ञानस्य कारणतां स्पष्टं निराकुर्वन्ति। नानार्थस्थलेऽप्राकरणिकोऽर्थो व्यञ्जनया बोध्यते मतमिदं निराकुर्वन्तस्ते प्रतिपादयन्ति यत् नहि नानार्थस्थले सर्वत्र व्यञ्जनोल्लासः सम्भवति सर्वत्र व्यञ्जनोल्लासे सति शक्त्यैव प्राकरणिकाप्राकरणिकार्थद्वयबोधस्वीकारेऽपि क्षतिविरहात्। कुत्रचिदेव व्यञ्जनोल्लासस्वीकारे हेतुः कश्चिदवक्तव्यः, स च ऋते श्रोतुः शक्तिविशेषं नान्यः सम्भवति। अतः श्लेषवद् नानार्थस्थले शक्त्यैव प्राकरणिकः अप्राकरणिकश्चार्थो शाब्दबोधविषयी भवति। तात्पर्यज्ञानस्य तु शाब्दबोधकारणतैव नास्तीति युगपदर्थद्वय-बोधानुपपत्तिर्नास्त्येव, तात्पर्यज्ञानस्य हेतुतायां सिद्धायामेव युगपदर्थद्वयबोधानुपपत्तिः स्यात्। सा च स्वयमेवा सिद्धा।'[25] किन्त्वेवं सति तात्पर्यज्ञानस्य शाब्दबोधे कश्चिद-प्युपयोगो न स्यात् ? तत्र च जगन्नाथाः वदन्त्युपयोगम् यत् अस्मिन्नर्थेऽयं शब्दः प्रमाणमयमर्थः प्रमाणवेद्य इति निर्णये तात्पर्यज्ञानमुपयुज्यते। अपरञ्च निर्णयः प्रवृत्त्या-द्युपयोगीत्यत्र नास्ति संशीतिलेशः।'[26] किन्तु नैयायिकाः शाब्दबोधमात्रं प्रमात्मकमिति स्वीकुर्वन्ति। आप्तोपदेशश्च शब्दः प्रमाणम्। आप्तोपदेशादपि शाब्दाद्यदि प्राकरणिकाप्राकरणिकार्थद्वयविषयकशाब्दबोधश्चेदनुभवसिद्धो भवेत् तर्हि आप्तोपदेशमात्रस्य शब्दस्य प्रमाणता व्याहता भवेत्। फलतः प्राकरणिकार्थविषयक

एव शाब्दबोधः स्वीक्रियते तैः। अप्राकरणिकार्थोपस्थितिसत्त्वेऽपि मनसैव यथाकथ-ञ्चिदुपनयवशादेवाप्राकरणिकार्थबोधो भवति न त्वसौ शाब्दबोधः।[२७] तात्पर्यद्वारा नियमनमपि सम्भवति प्रकरणादिनापि। प्रकरणादिनैव नियमनमुचितमिति प्रतिभाति।

वैदान्तिनोऽपि तात्पर्यज्ञानं शाब्दबोधहेतुरिति नाङ्गीकुर्वन्ति। किन्तु प्रतिबन्धनिरासार्थमेव तात्पर्यज्ञानमुपयुज्यते।[२८] पञ्चपादिकाविवरणे श्रीप्रकाशात्म-मुनिभिः तात्पर्यं ज्ञातं वा अविज्ञातं वाऽर्थप्रमितिहेतुरिति विकल्प्योभावपि पक्षौ खण्डितौ।[२९]

निष्कर्षः

विवेचनेनानेन स्पष्टं भवति यत् नानार्थस्थले प्रकरणादिनापि प्राकरणिकार्थ-मात्रविषयकबोधसम्पादनं सुकरमिति नहि नानार्थस्थलानुरोधेन तात्पर्यज्ञानस्य शाब्दबोधकारणता स्वीकर्तुं युक्ता। 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यादावपि प्रकरणानुरोधेनैव राजपदार्थस्य कदाचित् पुत्रेण सह कदाचिच्च पुरुषेण सहान्वय-बोधो भवति। न ह्येदर्थमपि तात्पर्यज्ञानस्य शाब्दबोधकारणता स्वीकर्तुं युक्ता। तात्पर्यानुपपत्त्या लक्षणा भवति, तात्पर्यानुपपत्तिश्च लक्षणाबीजमिति प्रायशः स्वीकृतः सिद्धान्तः। किन्तु सामान्यतोऽन्वयानुपपत्तिरेव लक्षणाबीजमिति स्वीक्रियते, प्रकरणा-दितोऽपि लक्ष्यार्थपरत्वग्रहः सम्भवत्येव।[३०] अतो नहि लक्षणानुरोधेनापि तात्पर्यज्ञानस्य शाब्दबोधकारणता स्वीकर्तुं शक्या। 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इत्यादावपि प्रकरणो-ऽस्थितलक्ष्यार्थबोधः सम्भवत्येव। इदानीमवशिष्यते संसर्गभानार्थं तात्पर्यवृत्तिरुप-युज्यत इति कुमारिलभट्टपादानां पक्षः। अत्रोच्यते यत् तात्पर्यं नाम यदि वाक्यार्थ बोधसिद्धिसम्भवात्।[३१] शब्दात् पदार्थोपस्थितिसमनन्तरं तात्पर्यवृत्त्याऽनुपस्थित-संसर्गविषयको वाक्यार्थबोधो भवतीति भाट्टमतेऽपरो दोषः शब्दमात्रस्यानुवादकत्व-प्रसङ्गेऽपि आपतति। यश्चोपरि समुपदर्शितः। अतः संसर्गो संसर्गमर्यादया भासत इति नव्यनैयायिकानां मतमेव चारु। अतः सामान्यतो नह्यत्रापि योग्याः तत्र तात्पर्यज्ञानेनैव कस्यचित् सम्बन्धविशेषस्यान्वयबोधो नियम्यते इति गदाधर-भट्टाचार्याणां मतमुपदर्शितञ्चेदुपरिष्टात्। तर्हि किं तात्पर्यज्ञानमनया रीत्या शाब्द-बोधे कारणमिति स्वीकार्यम्। अत्रायं मामकीनः पक्षो विद्यते यत् प्रकरणादिना समुपस्थिते सम्बन्धे यथा तात्पर्यावधारणं तात्पर्यज्ञानकारणतावादिना स्वीक्रियते, तथैव प्रकरणादिना समुपस्थितस्यैव संसर्गस्य शाब्दबोधे संसर्गमर्यादया भानं भवतीति शक्यं स्वीकर्तुमिति व्यर्थ एव तात्पर्यज्ञानस्य शाब्दबोधकारणतास्वीकारः।

## सन्दर्भाः


१. का ८४ कारिकावली, विश्वनाथ पञ्चाननभट्टाचार्य।

२. एतद्वाक्य पद वा एतदर्थबोधायोच्चारणीयमितीश्वरेच्छा तात्पर्यम्। ... नानार्थस्थले लोके तात्पर्गन्त प्रयोक्तुरिच्छारूपम। पृ ८० परमलघुमञ्जूषा (तत्त्वप्रकाशिका सहित) चौ.सं.सी. वाराणसी १९७८।

३. आगमपरिच्छेदः, वेदान्तपरिभाषा, धर्मराजाध्वरीन्द्रविरचिता

४. तदेव

५. पृ. २७७-२७८ तर्कताण्डव, व्यासतीर्थ, मैसूर, १९३२।

६. आलङ्कारिकास्तु तत्प्रतीतीच्छया उच्चारितत्वं तात्पर्यम्। पृ. ११३, प्रस्थानरत्नाकर, पुरुषोत्तम, कोल्हापुर वि. संवत्, २०५६

७. तर्कामृतम्, जगदीशतर्कालङ्कारविरचितम्, तर्कसंग्रहदीपिका सहितम्।

८. पृ. २६-२९ पृ १५१ शब्दशक्तिप्रकाशिका, जगदीशतर्कालङ्कार (कृष्णकान्ती-सुबोधिनीसहिता) चौ.सं.सी वाराणसी, १९७३।

९. पृ. ५३०, न्यायलीलावती, वल्लभाचार्य (कंण्ठाभरण, प्रकाश, प्रकाशता विवृतिसहिता) सम्पा. दुण्ढिराजशास्त्री १९३४ चौ.सं. सी. वाराणसी।

१०. आनुपूर्वीविशेषरूपाया आकाङ्क्षाया अपि प्रयोजकतवात्। पृ. १११, व्युत्पत्तिवाद (जयालङ्कृत) गदाधरभट्टाचार्य, इलाहाबाद, १९८०

११ कयोश्चित् पदयोः केनचित् सम्बन्धेन स्वार्थान्वयबोधसाकाङ्क्षतयाऽऽकाङ्क्षज्ञानस्यैव पदार्थसंसर्ग भाननियामकत्वाद ययोः पदयोर्नानासम्बन्धेन स्वार्थान्वयबोध आकाङ्क्षा तज्जन्यशाब्दबोधे संसर्गविशेषतात्पर्य ज्ञान रूपकारणबलादेव सम्बन्धभान नियमोपपत्तेः।

पृ. ३९ शक्तिवाद (विवृतिसहित) गदाधरभट्टाचार्य, चौ सं.सी., १९८६.

१२ अयमेति पुत्रो राज्ञः पुरुषोऽयसार्यतामित्यादौ तु पुत्रेण सह राजपदस्य तात्पर्यग्रह सत्त्वात्तेनैवान्यबोधः। पुरुषेण सह तात्पर्यग्रहे तु तेन सहान्वयबोधः स्यादेव। पृ ४२५। न्यायसिद्धान्तमुक्तावली (दिनकरी, रामरुद्री सहित) विश्वनाथ पञ्चानन चौ.सं.सी.आ. वाराणसी. १९८२

१३. यदि तात्पर्यज्ञानं कारणं न स्यात्तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोध इति न स्यात्। पृ. ४२७, तदेव

१४ पृ. १३--१४, शक्तिवाद, गदाधर भट्टाचार्य

१५ उद्बोधकान्तरोपस्थितेऽपि संसर्गे तात्पर्य ग्रहसम्भवात् तत्र वृत्तिग्रहस्यानपेक्षितत्वात्। पृ. ४०, तदेव

१६. गृहीतनानार्थवृत्तिकपदजन्यनुभवत्वापेक्षया लाघवेन पदजन्यानुभवत्वस्यैव तात्पर्यज्ञान–जन्यतावच्छेदकत्वमुचितम्। दिनकरी, पृ. ४३०.

१७. प्रामाण्यवाद, तत्त्वचिन्तामणि, गङ्गेशोपाध्याय

१८. तात्पर्यसंशये व्यतिरेकनिश्चये वा शाब्दबोधानुदयाच्छाब्दबोधे तात्पर्यज्ञानं कारणम्। दिनकरी, पृ. [illegible]।

१९. व्यक्त्यधीनबोधस्तु नावश्यं तात्पर्यज्ञानमपेक्षते। पृ. १२रसगङ्गाधर (द्वितीय आनन) चन्द्रिका संस्कत हिन्दी व्याख्या सहित, पंडितराज जगन्नाथ चौ. विद्याभवन, वाराणसी, १९८७।

२०. पृ. १८ तदेव

२१. तेषामननुगमात्। पृ. ४२७ न्यायसिद्धान्तमुक्तावली

२२. पृ.२७, शब्दशक्तिप्रकाशिका, जगदीशतर्कालङ्कार

२३. तथा च तात्पर्यावच्छेकतयैव सर्वत्र वाक्यार्थसिद्धेः प्रत्यक्षानुमितिभ्यां भिन्नमनुभवं भावयन्नपि शब्दो गृहीतग्राहित्वेनानुवादकः। पृ. २८–२९, तदेव

२४. कविवाक्यानामन्यार्थमात्रपरत्वस्य शुकादिवाक्यानाञ्च स्वार्थपरत्वाभावस्य निश्चयेऽपि ततः सामाजिकादेरन्वयानुभवोत्पत्त्या व्यभिचारात्। पृ. २९, तदेव

२५. पृ. १९–२७ रसगङ्गाधर।

२६. तर्हि तात्पर्यज्ञानस्य कुत्रोपयोग इति चेत्? अस्मिन्नर्थेऽयं शब्दः प्रमाणमयमर्थः प्रमाण–वेद्यइत्यादिनिर्णये प्रवृत्त्याद्युपयोगिनीति गृहाण। पृ. २३ तदेव।

२७. तत्तदर्थाना यथाकथञ्चिदुपनयवशेन मनसेव विशिष्टधीसम्भवात्। पृ.१५३ शब्दशक्ति–प्रकाशिका।

२८. पृ. ५९१–५९४ विवरणप्रमेयसंग्रह, विद्यारण्यमुनि, ललिताप्रसादकृत हिन्दी अनुवाद सहित, अमर पब्लिकेशन वाराणसी, १९९९.

२९. पृ.४७०–४७१ पञ्चवादिका, पद्मपादाचार्य श्रीप्रकाशात्ममुनिविरचित विवरणव्याख्यान, तत्त्वदीपन, ऋजुविवरणसहिता, सम्पादक – एस. सुब्रह्मण्य शास्त्री, महेश अनुसन्धान संस्थान, वाराणसी, १९९२.

३०. प्रकरणादितोऽपि लक्ष्यार्थपरत्वग्रहात्। पृ. १४७ शब्दशक्तिप्रकाशिका।

३१. यदि च तात्पर्यं वाक्यार्थप्रमितिहेतुः स्यात् तदा वाक्यार्थोऽशाब्दः पृ. ५९३ विवरणप्रमेयसङ्ग्रह।



# महाभारतोपदिष्टोऽतिथिसत्कारः शरणागतरक्षणञ्च

राजेश्वरमिश्रः

पुराकालादेवास्माकं संस्कृतिः सर्वास्वपि विश्वसंस्कृतिष्वनुत्तमेति विदितचरमेव। भारतीयसमाजस्याधारतत्त्वरूपेणास्याः संस्कृतेरनेकानि वैशिष्ट्यानि सन्ति येषां सांस्कृतिकजीवने महत्त्वपूर्णं योगदानमस्ति। अतिथिसत्कारः शरणागतरक्षणञ्चास्याः संस्कृतेराधारस्तम्भेष्वन्यतमे स्तः। प्रत्येकंगृहस्थेनानुदिनमावश्यकरूपेण सम्पाद्यमानेषु पञ्चमहायज्ञेष्वतिथिसत्कारः 'नृयज्ञरूपेण' प्रसिद्धः। प्राचीनकालादेवातिथियज्ञः गृहस्थानां प्रधानधर्मः। अस्मादेव कारणादस्माकं धर्मग्रन्थेष्वतिथिः देवत्वेन कल्पितः।[1] पञ्चमहायज्ञेष्वतिथिसेवादरपूर्वकमुल्लिखिता।[2] मनुस्मृत्यनुसारेणातिथिपूजनाज्जनाः धनमायुष्यं, यशः स्वर्गञ्चाप्नुवन्ति।[3] समागतेषु बहुष्वतिथिषूत्तममध्यमादिश्रेण्यनुसारेणैव तेषां सत्कारोऽपि विहितः।[4]

प्राचीनभारतीयसभ्यतानुमतस्य पुरुषार्थचतुष्टयस्याचाराणाञ्च नीतीनाञ्च प्रमाणग्रन्थरूपेण प्रतिष्ठिते महाभारतेऽपि स्थलेस्थलेऽतिथिसत्कारस्य शरणागतरक्षणस्य च महत्त्वं तत्सम्बद्धानि विविधानि तथ्यानि चोद्घाटितान्युपदिष्टानि च। कोऽतिथिरित्यस्य प्रश्नस्य समाधानमप्यत्रातिथिशब्दस्य निर्वचनेन कृतम्। तदनुसारेण यस्य तिथिः न भवति, यः कस्मिंश्चिदपि काले गृहस्थस्य गृहमागत्य तिष्ठति सोऽतिथिरिति कथ्यते।[5] अन्यस्मिन् प्रसङ्गेऽत्र वैश्वदेवान्ते हितकरः प्रियो वा द्वेष्यो वा मूर्खः पण्डितो वा यः कोऽपि प्राप्तः सोऽतिथित्वेन स्वीक्रियते।[6] महाभारतेऽतिथिसत्कारत्वेन पञ्चयज्ञेषु मनुष्ययज्ञः श्रेष्ठत्वेनाङ्गीकृतः। शान्तिपर्वणि नित्यमातिथ्यं दुर्गतितरणकारणत्वेनोररीकृतम्।[7] पुनश्चानुशासनपर्वण्यग्निपुत्रस्य सुदर्शनो–

पाख्यानप्रसङ्गेऽतिथिपूजनं 'परो धर्म' इति निगदितम्[८]। अत्रैतदपि प्रतिपादितं यदतिथिमृते गृहाश्रमस्थस्य न किमपि विद्यतेऽन्यद्दैवतम्।[९] अतः मनसातिथिपूजनं क्रतुशतानामप्यधिकं मतम्।[१०] यतोहि शीलाढ्यमतिथिमासाद्य यो न पूजयेत्तस्य पुण्यं विनश्यति दुष्कृतञ्च समापतति। अस्मिन्नेव पर्वण्यन्यत्रापि धर्मरहस्यवर्णनप्रसङ्गे नित्यमातिथ्यं कर्त्तव्यमित्युपदिष्टम्।[१२]

महाभारतकारस्य मते योऽतिथिसेवां न करोति सः पापभाग् भवति। अनुशासनपर्वणि विष्णु–बलदेव–देवगणधर्मादिभिर्धर्मस्य गूढरहस्यप्रतिपादनप्रसङ्ग इदमुपदिष्टं यद्यस्य गृहेऽतिथेर्यथायोग्यं सम्मानो न भवति स स्त्रीवधस्य गोहत्यायाश्च पापं भजति।[१३] अपि च यस्य गृहात् भग्नाशोऽतिथिर्निवर्तते तं गृहस्थं पितरः देवाश्चाग्नयश्च परित्यजन्ति,[१४] तस्य पुण्यमपि नश्यति।[१५] परं कृतभोजनेषु भृत्यातिथिषु यो भोजनं भुङ्क्ते सः केवलममृतश्नाति।[१६] अतिथिसत्कार आडम्बरस्य निषेधोऽपि कृतः। अतः रसवत्यां यत्किञ्चदपि भोक्तुं व्यञ्जनं पच्यते तेनैवातिथिसत्कारः करणीयः। अतिथिमुद्दिश्य कानिचित् विशिष्टव्यञ्जनानि न पक्तव्यानीति। वस्तुतः आपो–मूल–फलैश्चाप्यतिथिसेवा कर्तुं शक्यते, यथाश्रमवासिकपर्वणि वैशम्पायनेनो–क्तम् –

आपो मूलं फलञ्चैव ममेदं प्रतिगृह्यताम्।
यदर्थो हि नरो राजंस्तदर्थोऽस्यातिथिः स्मृतः।।

(आश्र. २६.३६)

अनेन प्रतीयते यदधिकव्ययभयादतिथिसत्कारस्य कदाचित् ह्रासो न भवेत्तस्मादतिथिसत्कारार्थमनावश्यकाडम्बरस्य निषेधः कृतः।

महाभारतेऽतिथिपूजायाः पद्धतिरपि निर्दिष्टा। तदनुसारेण कस्मिंश्चिदतिथौ समागते सति गृहपतिरुत्थाय तस्य स्वागतं करोति स्म। तदनन्तरमासनायासनं प्रयच्छति स्म।[१७] अपगतायां पथक्लान्त्यामतिथिं पाद्यार्घ्यमधुपर्कादिभिर्यथा–विधि अर्चयति स्म।[१८] एवमेते नियमाः सर्वैर्गृहस्थैस्तदा सामान्यतया परिपालनीयाः। अनेन प्रकारेण समाजस्याभ्यागतविशेषस्यागमनमुद्दिश्याभिजात्याः जनाः धनिकाश्च गृहस्य सम्मार्जनमपि कारयन्ति स्म, पन्थानञ्च चन्दनरससिक्तं, सुगन्धितद्रव्यसुवासितं

पुष्पप्रकरशोभितञ्च कुर्वन्ति स्म।[19] अथ च नगरस्य प्रमुखपुरुषाः मुख्यमार्गे सम्भूयाभ्यागतस्य स्वागतं कुर्वन्ति स्म। सर्वे स्त्रीपुरुषाश्च तस्याभ्यर्थनामपि कुर्वन्ति स्म।[20] अपि च धनिकाः सम्मान्यमतिथिमुपहारस्वरूपेण नानाविधैः बहुमूल्यवस्त्राभूषणादिभिः सभाजयन्ति स्म।[21] एवञ्च राजनगर्यां कस्यचिदृषेर्मुनेर्वागमने राजा समन्त्रिपुरोहितस्तस्य स्वागतं करोति स्म पुरोहितश्च पुरो भूत्वा तस्मै अर्घ्यादिकं प्रयच्छति स्म।[22] महाभारतशान्तिपर्वणि राज्ञा जनकेन कृतं शुकस्य पूजनमस्य निदर्शनम्।[23] अतिथिरूपेण गृहमागतस्य शत्रोरपि समुचितमातिथ्यमवश्यकर्त्तव्यमित्यपि निर्दिष्टम्[24] यतोहि शरणागतस्यातिथ्यं प्रयत्नतः करणीयं गृहस्थैः।[25] महाभारते गृहमागतस्य व्याधस्य कपोतकर्तृकमातिथ्यमस्मिन् प्रसङ्गे ध्यातव्यम्।[26] श्रीमद्भागवतपुराणे, ''गौतमधर्मसूत्रेऽपि च शत्रोरातिथ्यमुपदिष्टम्।[27] परं महाभारत एकत्र शत्रुत्वात् शत्र्वतिथिभिरातिथ्यं पाद्यादिकं न स्वीकृतमित्यस्य सङ्केतोऽप्युपलभ्यते।[28] अन्नकाङ्क्षयागतः चाण्डालोऽप्यतिथिरूपेण सर्वदा गृहस्थेन पूजनीयः।[29] अतः भारतस्यमते सुमुखः सुप्रसन्नात्मा धीमानागतमतिथिं स्वागतेनासनेनाद्भिरन्नादिभिश्च पूजयेत्।[30]

पुराकालादेव भारतीयसमाजेऽतिथिसत्कार उच्चादर्शरूपेण प्रतिष्ठितः। गृहस्थस्य गृहधर्माः न केवलमात्मीयजनानामपित्वनात्मीयजनानामागन्तुकानाञ्च कृते भवन्ति। सत्कारोऽयं गृहस्थानुदारमनस्कान् करोति। गृहमागतानामतिथीनां प्रस्थानकालेऽपि गृहस्थैः किञ्चिद्दूरं यावत्तेऽनुगन्तव्या इत्यस्याप्युपपदेशः वनपर्वणि पाण्डवानां प्रव्रजने कृतः महाभारते।[31] पुनश्च सभापर्वणि राजसूययज्ञे समाप्ते सति समेषां ब्राह्मणानां नृपाणां श्रीकृष्णस्य च स्वदेशप्रस्थानकालेऽप्यस्यादर्शस्यानुपालनं द्रष्टव्यम्।[32]

अतिथिभोजनादवशिष्टान्नस्य पवित्रत्वमपि महाभारते प्रतिपादितम्। वनपर्वणि बकशक्रसंवादेऽस्योल्लेखः प्राप्यते। तत्रोपदिष्टं वर्तते यदितिथिभ्यः भूतेभ्यश्च दत्त्वावशिष्टादन्नात् नित्यशः भुज्यमानान्नान्यत् पूतं सुखतरं वा किञ्चिदस्ति।[33] महाभारतेऽनेकत्र प्रसङ्गतः जनैः कृतस्यातिथिसत्कारस्योल्लेखः तन्महत्त्वञ्चोपलभ्येते। वनपर्वणि चातुर्वर्ण्यस्य सर्वस्य प्रतिग्रहे वर्तमानाः केन विशेषेण विप्राः जनान्

तारयन्ति स्वयञ्च तरन्तीति युधिष्ठिरस्य प्रश्नस्य प्रत्युत्तरे ऋषिणा मार्कण्डेयेन-नातिथिसत्कारमप्येकं कारणं स्वीकुर्वतास्य महत्त्वं वर्णितम्। अनेनात्र प्रतिपादितं यत् हविषा होमैःपुष्पानुलेपनैरग्नयस्तथा न तुष्यन्ति यथाऽतिथिभोजनेन। अतोऽतिथि-भोजने यत्नो विधेयः।[३४] एवमेव शान्तिपर्वणि पराशरगीतायामतिथिसत्कारस्य महत्त्वं प्रतिपादयता पराशरेणोक्तं यत् मर्त्यः देवतातिथिभृत्येभ्यः पितृभ्यश्च ऋणवाञ्जायते अतः नृणामभ्यर्चनेनातिथिसत्कारेण चासावनृणतां व्रजेत्।[३५] पुनश्चाश्व-मेधिकपर्वण्यतिथिसत्कारस्य माहात्म्यमुद्घाटयता वैशम्पायनेनोक्तं यदभ्यागते सन्तुष्टे सर्वे देवाः तुष्टाः भवन्ति तथा चातिथिपूजनादग्नयस्तथा तुष्यन्ति यथा हविषा होमैः पुष्पैरनुलेपनैर्न तुष्यन्ति।[३६] पुनश्च तेनोक्तं यद्यस्य गृहादतिथिर्भग्नाशः प्रतिनिर्वतते तस्य पितरः पञ्च दशवर्षाणि नाश्नन्ति। यश्चातिथिन्न पूजयेदसौ सदा मोघमन्न-मश्नाति। तस्य द्विजस्य च द्विजत्वमपि वृथा भवति यः साङ्गोपाङ्गान् वेदान् प्रतिदिनं पठति परमतिथिं न पूजयति। एवञ्च पाकयज्ञमहायज्ञैः सोमसंस्थाभिश्च ये यजन्ति परं गृहेष्वागतमतिथिं नार्चन्ति तेषां यशोऽभिकामानां दत्तमिष्टञ्च सर्वं वृथा भवति।[३७] अतः देशं, कालं पात्रं, स्वशक्तिञ्च निरीक्ष्याल्पं समं महद् वातिथेरातिथ्यं कुर्यात्।[३८] एतद्व्यतिरिक्तं महाभारते उद्योगपर्वणि शल्यस्यातिथिसत्कारस्य (उद्यो.अ.८) शल्यपर्वणि हस्तिनापुरे बलदेवस्य स्वागतसत्कारस्य (शल्य.अ.३४) शान्तिपर्वणि युधिष्ठिरेण कृतस्य ब्राह्मणानामाश्रितानाञ्च सत्कारस्य (शान्ति.अ.४५), अस्मिन्नेव पर्वणि पक्षिणा कृतस्य गौतमस्य सत्कारस्य (तत्रैव, अ. १७०), मिथिलायां शुकस्य सत्कारस्य (तत्रैव, अ. ३२५), आश्वमेधिकपर्वणि श्रीकृष्णेन कृतस्य पाण्डवानां सत्कारस्य (आश्वमे. अ. ७१) आदिपर्वणि च सर्पसत्रे व्यासस्य (आदि. अ. ६०) वारणावते च पाण्डवानामतिथिसत्कारस्यो- (आदि. अ. १४५) रुल्लेखोऽपि प्राप्यते।

महाभारतेऽनेकत्र शरणागतस्य सर्वथा रक्षणञ्चाप्युपदिष्टम्। आदिपर्वणि बकवधप्रसङ्गे ब्राह्मणस्य तत्पुत्रस्य च स्थाने बलिमादाय भीमं प्रेषितुमुद्यतां कुन्तीं प्रत्युक्तेन ब्राह्मणस्य वचनेन शरणार्थिनः सर्वथा रक्षणीया इत्युपदिष्टम्।[३९] एवमेव वनपर्वणि श्येनाय स्वशरीरमांसं दत्त्वा राज्ञा शिबिना कृता शरणागतस्य कपोतस्य प्राणरक्षा जगत्प्रसिद्धा। तत्र राजोक्तं वचनं भारतीयसंस्कृतौ धर्मत्वेन स्वीकृत्य

शरणागतस्य रक्षायाः महत्त्वं प्रतिपादयति–

यो हि कश्चिद् द्विजान् हन्याद् गां वा लोकस्य मातरम्।
शरणागतं च त्यजते तुल्यं तेषां हि पातकम्।। (वन. १३१.६)
शरणैषिपरित्यागं कथं साध्विति मन्यसे। (तत्रैव, १३१.१६)

अतः द्विजानां, गवां, मातुर्वा वधाज्जातेन पातकेन तुल्यं पातकं शरणागतस्य त्यागाज्जायते। पुनश्चानुशासनपर्वणि" शरणागतं सर्वविधं भूतग्रामं ये रक्षन्ति तस्य किं फलं भवतीति" युधिष्ठिरेण पृष्टो भीष्मः शिबिकृतं शरणागतकपोतरक्षणमुदाहरति तत्पुण्यप्रभावादस्य फलञ्चाक्षयलोकस्योपलब्धिञ्चोपदिशति। अत्र राज्ञा शिबिना धृतं शरणागतकपोतरक्षणव्रतमप्यस्माभिः ध्यातव्यमिति।[१] महाभारतेऽन्यत्राप्य-स्योपाख्यानस्योल्लेखः प्राप्यते।[२]

एतद्व्यतिरिक्तं शान्तिपर्वणि कपोत–लुब्धक–संवाद उल्लिखितं शत्रुरूपशरणागतरक्षणस्य वृत्तान्तोऽपि शरणागतरक्षणंमुपदिशति। अत्र शरणागत-व्याधस्य संरक्षणाय कपोत्याः स्वकपोतं प्रति कृता –"शरणागतसंत्राता भव कान्त विशेषतः" (शान्ति. १४५.७) इति प्रार्थना तया कृतं शरणागतस्य वधाज्जातस्य पातकस्य स्मारणम्[३] अस्य कृते गृहस्थधर्मस्य शिक्षणम्[४], एवञ्च कपोतेन कृतं व्याधस्यातिथ्यम्[५], तदर्थं तेन स्वशरीरस्याग्नौ विसर्जनमित्यादयः प्रसङ्गाःशरणागतरक्षणं प्राणपणेनापि कर्त्तव्यमित्युपदिशन्ति।

अनेनैव प्रकारेण वनपर्वणि पराजितानां शरणागतानां देवानां कृते स्कन्दस्या-भयदानस्य वर्णनमपि शरणागतरक्षणं निर्दिशति।[६] एवमेव महाप्रस्थानपर्वणि युधिष्ठिरस्य स्वर्गारोहणप्रसङ्गे धर्मरूपं श्वानं त्यक्तुमुद्युक्तौ युधिष्ठिर आह–

"भक्तत्यागं प्राहुरत्यन्तपापं। तुल्यं लोके ब्रह्मवध्याकृतेन। (३.११)

एवं 'भीतिप्रदानं शरणागतस्य स्त्रिया वधो ब्राह्मणस्वापहारः।
मित्रद्रोहस्तानि चत्वारि शक्र भक्तत्यागश्चैव समो मतो मे।।
(३.१६)

इति स प्राणान्परित्यज्यापि शरणागतरक्षणमुपदिशति। एवञ्चोद्योगपर्वणि धृतराष्ट्रविदुरसंवादे 'शरणागता विषमेऽपिरक्षितव्या' इति विदुरोऽप्युपदिशति।[७]

एवमेवैकचक्रानगर्यामेकस्य ब्राह्मणस्य गृहे निवसन्ती कुन्ती तस्य ब्राह्मणस्य विषादं दूरीकर्तुं बकासुरवधाय स्वपुत्रं भीमं प्रत्यर्प्य परेषां रक्षणस्यानुपमनिदर्शनं प्रस्तौति।[८१] यद्यपि ब्राह्मणकुलं कुन्त्याः शरणागतं नासीत्तथापि तस्य करुणदशां वीक्ष्य द्रवितहृदय–तया कुन्त्या कृतं ब्राह्मणकुलस्य परिरक्षणं जनान् शरणागतरक्षणाय प्रेरयति।

एवं महाभारतेऽतिथिसत्कारः शरणागतरक्षणञ्च परमधर्मत्वेन स्वीक्रियेते। इदानीन्तनेऽपि यत्र तत्रास्माकं भारतीयसमाजेऽनयोरनुपमनिदर्शनं द्रष्टुं शक्यते। परमाधुनिके भौतिकयुगे प्रायः जना आत्मकेन्द्रिताः जाताः। तेऽतिथीनां शरणागतानाञ्च न तथा सम्मानं कुर्वन्ति यथा प्राचीने भारतीयसमाज आसीत्। अतः महाभारतोपदिष्टै–रुपर्युक्तैरतिथिसत्कार– शरणागतरक्षणविषयकैर्निदर्शनैरुत्प्रेरितैर्जनैः त आदर्शाः पुनः स्थापयितव्याः।

संदर्भाः

१. तै.सं.२.११.२.२ : अतिथिदेवो भव।

२. महा. अनु., ७.१२ : पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयम्।

३. मनुस्मृ., ३.१०६ : धन्यं यशस्यमायुष्यं स्वर्ग्यं वाऽतिथिपूजनम्।

४. तत्रैव, ३.१०७ : आसनावसथौ शय्यामनुव्रज्यामुपासनाम्।
उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम्।।

५. महा. अनु., ९७.९२ : अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते।

६. महा., आश्व., ९२, वैष्णवधर्मपर्व : हितं प्रियो वा द्वेष्यो वा मूर्खः पण्डित एव वा।
प्राप्तो यो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः।।

७. तत्रैव, शान्ति. ११०.५ : वासयन्त्यतिथीन् नित्यं नित्यं ये चानसूयकाः।
नित्यं स्वाध्यायशीलाश्च दुर्गाण्यतितरन्ति ते।।

८. तत्रैव, अनुशा., २.६९–७० : गृहस्थस्य हि धर्मोऽग्र्यः सम्प्राप्तातिथिपूजनम्।
अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति।
नान्यस्तस्मात् परो धर्म इति प्राहुर्मनीषिणः।

९. तत्रैव, २.९१ : तस्माद् गृहाश्रमस्थस्य नान्यद्दैवतमस्ति वै।
ऋतेऽतिथिं नरव्याघ्र मनसैतद्विचारय।।

१०. तत्रैव, २.९२ : अतिथिः पूजितो यद्धि ध्यायते मनसा शुभम्।
न तत् क्रतुशतेनापि तुल्यमाहुर्मनीषिणः।।

११. तत्रैव, २.९३ : पात्रं त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत्।
स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति।।

१२. तत्रैव, १२७.९ : आतिथ्यं सततं कुर्याद्दीपं दद्यात् प्रतिश्रये।

१३. तत्रैव, १२६.२८ : स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः।
तुल्यदोषो भवत्येभिर्यस्यातिथिरनर्चितः।।

१४. महा., अनु. १२६.२६–२७ : पिण्डदास्तस्य हीयन्ते न प्रीणाति वै पितॄन्।
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते।।
पितरस्तस्य देवाश्चाग्नयश्च तथैव हि।
निराशाः प्रतिगच्छन्त्यतिथेरप्रतिग्रहात्।।

१५. तत्रैव, शान्ति. १९१.१२ : अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते।
स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति।।

१६. तत्रैव, २२१.१३ एवं १५ : भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु सदा सदा।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर।।

१७. द्रष्टव्य : तत्रैव, उद्योग, ९४.३६–३८, तत्रैव, ८९.१३–१४ सभा. ५.१३–१४।

१८. तत्रैव, सभा., ५.१५ : गां चैव मधुपर्कञ्च सम्प्रदायार्घ्यमेव च।
अर्चयामास रत्नैश्च सर्वकामैश्च धर्मवित्।।

वन. १८३.४८ : तमभ्यैथ महात्मानं सर्वे ते पुरुषर्षभाः।
पाद्यार्घ्याभ्यां यथान्यायमुपतस्थुर्मनीषिणः।।

आदि. १९२.२१ : समीपतो भीममिदं शशास, प्रदीयतां पाद्यमर्घ्यं तथास्मै।
मान्यः पुरोधा द्रुपदस्य राज्ञः तस्मै प्रयोज्याभ्यधिका हि पूजा।।

अनु., ५२.१३–१८

१९. महा., आदि. २२०.३६–३७ : सम्मृष्टसिक्तपन्थानं पुष्पप्रकरशोभितम्।
चन्दनस्य रसैः शीतैः पुण्यगन्धैर्निषेवितम्।।

दह्यतागुरुणा चैव देशे देशे सुगन्धिना।
हृष्टपुष्टजनाकीर्णं वणिग्भिरुपशोभितम्।।

तत्रैव, उद्योग, ४७.४ : सुधावदातां विस्तीर्णां कनकाजिरभूषिताम्।
चन्द्रप्रभां सुरुचिरां सिक्तां चन्दनवारिणा।।

२०. द्रष्टव्य:, उद्योग, ८७.१९, २५–२९।

२१. द्रष्टव्य: तत्रैव, ८६ अध्याय:।

२२. महा., शान्ति. ३२६.१ : ततः स राजा जनको मन्त्रिभिः सह भारत।
पुरः पुरोहितं कृत्वा सर्वाण्यन्तःपुराणि च।।

तत्रैव, आदि. १०७.२९ : तस्मै पूजां ततोऽकार्षीत् पुरोधाः परमर्षये।
स च तां प्रतिजग्राह विधिवन्मन्त्रापूर्वकम्।।

२३. द्रष्टव्य: तत्रैव, शान्ति. ३२६.१–५

२४. तत्रैव, १४६.५ : अरावप्युचितं कार्यमातिथ्यं गृहभागते।

२५. तत्रैव, १४६.६ : शरणागतस्य कर्त्तव्यमातिथ्यं हि प्रयत्नतः।
पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः।

२६. द्रष्टव्य : तत्रैव, १४६ अध्याय।

२७. श्रीम.भाग.पु., ११.१७.२१, गौ. धर्म.सू. ८.२०–२१।

२८. महा., सभा., २१.५४ : कार्यवन्तो गृहानेत्य शत्रुतो नार्हणा वयम्।
प्रतिगृह्णीम तद् विद्धि एतन्नः शाश्वतं व्रतम्।।

२९. **आश्वमेधि., ९२, वैष्णवधर्मपर्वणि : चाण्डालोऽप्यतिथिः प्राप्तो देशकालेऽन्नकांक्षया।**
अभ्युद्गम्यो गृहस्थेन पूजनीयश्च सर्वदा।।

३०. आश्व., ९२ वैष्णवधर्मपर्वणि : सुमुखः सुप्रसन्नात्मा धीमानतिथिमागतम्।
स्वागतेनासनेनाद्भिरन्नाद्येन च पूजयेत्।।

३१. महा. वन. २.५६ : प्रत्युत्थायाभिगमनं कुर्यान्न्यायेन चार्चनम्।

३२. तत्रैव, सभा., ४५.४५–४६ : प्रस्थिताः स्वानि राष्ट्राणि मामापृच्छ्य परंतपाः।
अनुव्रजत भद्रं वो विषयान्तं नृपोत्तमान्।।
भ्रातुर्वचनमाज्ञाय पाण्डवा धर्मचारिणः।
यथार्हं नृपतीन् सर्वानेकैकं समनुव्रजन्।।

३३. तत्रैव, वन. १९३, ३२–३३ : यो दत्त्वातिथिभूतेभ्यः पितृभ्यश्च द्विजोत्तम।
शिष्टान्यन्नानि यो भुङ्क्ते किं वै सुखतरं ततः।।
अतो मृष्टतरं नान्यत् पूर्वं किञ्चिच्छतक्रतो

३४. तत्रैव, २००.२२–२३,२४ : न तथा हविषा होमैर्न पुष्पैर्नानुलेपनैः।
अग्नयः पार्थ तुष्यन्ति यथा ह्यतिथिभोजने।।
तस्मात्त्वं सर्वयत्नेन यतस्वातिथिभोजने।

३५. महा., शान्ति., २९२.९–१० : देवतातिथिभृत्येभ्यः पितृभ्यश्चात्मनस्तथा।
ऋणवान् जायते मर्त्यस्तस्मादनृणतां व्रजेत्।।
स्वाध्यायेन महर्षिभ्यो देवेभ्यो यज्ञकर्मणा।
पितृभ्यः श्राद्धदानेन नृणामभ्यर्चनेन च।।

३६. तत्रैव, आश्व., ९२ (वैष्णवधर्म.) : तस्मिंस्तुष्टे नरश्रेष्ठे तुष्टाः स्युः सर्वदेवताः।
न तथा हविषा होमैर्न पुष्पैर्नानुलेपनैः।
अग्नयः पार्थ तुष्यन्ति तथा ह्यतिथिपूजनात्।।

३७. तत्रैव, आश्व., ९२ (वैष्णवधर्म.) अतिथि सत्कारस्य महत्त्वम् :
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते।
पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च।।
मोघं ध्रुवं प्रोर्णयति मोघमस्य तु पच्यते।
मोघमन्नं सदाश्नाति योऽतिथिं न च पूजयेत्।।
साङ्गोपाङ्गांस्तु यो वेदान् पठतीह दिने दिने।
न चातिथिं पूजयति वृथा भवति सः द्विजः।।

| | | |
|---|---|---|
| | | पाकयज्ञमहायज्ञैः सोमसंस्थाभिरेव च।<br>ये यजन्ति न चार्चन्ति गृहेष्वतिथिमागतम्।।<br>तेषां यशोऽभिकामानां दत्तमिष्टं च यद् भवेत्।<br>वृथा भवति तत् सर्वमाशया हि तया हतम्।। |
| ३८, | तत्रैव, आश्व. ९२ (वैष्णवधर्म.) | **देशं कालञ्च पात्रञ्च स्वशक्तिञ्च निरीक्ष्य च।**<br>अल्पं समं महद् वापि कुर्यादातिथ्यमाप्तवान्।। |
| ३९. | महा., आदि., १६०.१० : | आगतस्य गृहं त्यागस्तथैव शरणार्थिनः।<br>याचमानस्य च वधो नृशंसो गर्हितो बुधैः।। |
| ४०. | द्रष्टव्यः, अनुशा., ३२ अध्यायः। | |
| ४१. | महा., तत्रैव, ३२.१९ : | शरणागतं न त्यजेयमिति मे व्रतमाहितम्। |
| ४२. | महा., वन. १९४, १९६ अध्यायः | अनुशा. ३२, शान्ति., १४३.३। |
| ४३. | तत्रैव, शान्ति., १४५.८–९ : | शीतार्तश्च क्षुधार्तश्च पूजामस्मै समाचार।<br>यो हि कश्चिद् द्विजं हन्याद्गां च लोकस्य मातरम्।।<br>शरणागतं च यो हन्यात् तुल्यं तेषां च पातकम्।<br>अस्माकं विहिता वृत्तिः कापोती जातिधर्मतः।। |
| ४४. | तत्रैव, १४५.१० : | सा न्याय्याऽऽत्मवता नित्यं त्वद्विधेनानुवर्तितुम्।<br>यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते।। |
| | एवं तत्रैव, १४५. ११–१४। | |
| ४५. | तत्रैव, १४५.२–४ : | स पक्षी पूजयामास यत्नात् तं पक्षिजीवनम्।<br>उवाच स्वागतं तेऽद्य ब्रूहि किं करवाणि ते।<br>सन्तापश्च न कर्त्तव्यः स्वगृहे वर्तते भवान्।।<br>तद् ब्रवीतु भवान् क्षिप्रं किं करोमि किमिच्छसि।।<br>प्रणयेन ब्रवीमि त्वां त्वं हि नः शरणागतः।। |
| ४६. | तत्रैव, १४६.१९–२३ | उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ....।<br>इत्युक्त्वा शुष्कपर्णैस्तु समुज्ज्वाल्य हुताशनम्।<br>ततः कृतप्रतिज्ञो वै स पक्षी प्रहसन्निव।<br>तमग्निं त्रिः परिक्रम्य प्रविवेद महामतिः।। |
| ४७. | महा., वन., २२७.१८. | भयादिन्द्रस्तुतं स्कन्दं प्राञ्जलिः शरणं गतः।<br>तस्याभयं ददौ स्कन्दः सह सैन्यस्य सत्तमः।। |
| ४८. | तत्रैव, उद्योग, ३३.६८ | भक्तञ्च भजमानञ्च तवास्मीति च वादिनम्।<br>त्रीनेतांश्छरणं प्राप्तान् विषमेऽपि न संत्यजेत्।। |
| ४९. | द्रष्टव्य : आदि. १६१–१६३ अध्यायाः। | |



# मल्लिनाथस्य कवित्वविवेकः टीकोपोद्घातश्लोकदृष्ट्या

सीतानाथ आचार्यः शास्त्री

स्निग्धं पित्रोः प्रसन्नं चरणसरसिजं दायकं सर्वसिद्धे –
राचार्य्याणाञ्च वन्द्यं सुमहितयशसां ज्ञानमूर्त्त्या स्थितानाम्।
नत्वा नत्वातिभक्त्यां सविनयमनसा मल्लिनाथस्य कामं
स्मृत्वा स्मृत्वा कवित्वं सहृदयसुभगं रच्यतेऽयं प्रबन्धः।।
टीकासु तासु रचितासु विचित्रितासु
सञ्जीवनीप्रभृतिकासु महत्तमासु।
काव्यार्थभावनपरा प्रतिभाविभूतिः
श्रीमल्लिनाथविदुषो विदुषो मतास्ति।।
टीकाविनिर्मितिविधेः प्रथमं कृतेषु
श्लोकेषु काव्यसुषमाञ्चितसम्भवेषु।
आभाति तस्य सुधियो निरवद्यरूपा
काव्यार्थसर्जनपरा प्रतिभापरापि।।
तेषामेव हि श्लोकानां साहित्यगुणयोगिताम्।
समीक्षितुं प्रबन्धेऽस्मिन् यत्नं कुर्मो यथामति।।
कृत्वा क्षुद्रं ह्युडुपमधमा सागरं तर्त्तुकामाः
खर्वाकारा वयमतितरां शीतगुं धर्त्तुकामाः।
निःस्वास्तुल्यं खलु सुरपतेः सद्म वा कर्त्तुकामाः।
प्रायः शक्तेः परिगणनविधौ मानवा बुद्धिमूढाः।

साहित्यमार्गे कारयित्री भावयित्री चेति प्रतिभाद्वितयं साहित्यमीमांसकैरभ्युपगतम् तत्र कवेरुपकुर्वाणा या प्रतिभा सा कारयित्री, अनया च प्रतिभया जागतिकपदार्थसार्थमनितरसाधारणदृष्ट्या विलोकयति कविः प्रकाशयति च तस्य स्वस्पन्दसुन्दरमभिनवं स्वरूपम्

"सा हि चक्षुर्भगवतस्तृतीयमिति गीयते।
येन साक्षात्करोत्येष भावांस्त्रैलोक्यवर्तिनः।।
(व्यक्तिविवेकः २/११८)

सहृदयस्योपकुर्वाणा प्रतिभा तावद् भावयित्रीत्युच्यते। तस्या एव प्रतिभायाः सद्भावात् सहृदयः कविचेतसः समधर्मितामनुप्रपन्नस्तदीयां वाङ्निर्मितिमनुभवितुं विचारयितुञ्च शक्नोति। एते द्वे प्रतिभे नितान्तं प्रभिन्ने उपकार्य्योपकारकभावसम्बन्धेन सम्बद्धे वेतिविषये विप्रतिपत्तिरस्ति। तत्र केषाञ्चिन्मते एतयोर्विद्यते महान् भेदः।' यतः कारचित्र्याः प्रतिभायाः आश्रयः कविः भावचित्र्यास्तु भावकः। किञ्च प्रथमायाः फलं काव्यसृष्टिः, द्वितीयायाः फलं रसास्वादः। अन्ये पुनर्मतमिदं न युक्ततया मन्यन्ते। तेषां मते एकस्यां प्रतिभायामपरस्याः प्रतिभाया विद्यते सुमहदुपकारकत्वम्।' तथाहि यत्र कारयित्री प्रतिभा प्राधान्येन विलसति तस्मिन् कविजनेऽपि भावयित्री प्रतिभा समुत्कर्षावहा। एवं काव्योपनिषद्वेदिनि सहृदये यद्यपि सर्वातिशायितया परिस्फुरति भावयित्री प्रतिभा तथापि तत्र तस्याः सम्पूर्तयेऽपेक्ष्यते कारयित्री प्रतिभा। एतदेवाभिप्रेत्य राजशेखरेणोक्तम् –

प्रतिभातारतम्येन प्रतिष्ठा भुवि भूरिधा।
भावकस्तु कविः प्रायो न भजत्यधमां गतिम्।।
(काव्यमीमांसा, पृष्ठा २९९)

वस्तुस्थितिरपि सिद्धान्तमिमं द्रढयति। तथा च दृश्यते कालिदास–भारवि–माघ–प्रमुखानां कवित्वप्रतिभाविभावितदिशां काव्येषु प्रसङ्गविशेषे काव्यस्वरूपावगाही चिन्ताविशेषः। पक्षान्तरे आनन्दवर्धनाभिनवगुप्तविश्वनाथजगन्नाथप्रभृतीनां काव्यमीमांसकानां सहृदयानां परिप्राप्यन्ते विविधानि काव्यानि। प्रतिभाद्वितयस्यास्य परस्परोपकार्य्यभिन्नत्वं पाश्चात्यविदुषामपि सम्प्रतिपन्नम्। विषयेऽस्मिन् क्रोचेमहोदयेन यदुक्तं तस्य भाव एवम्– "काव्यस्य सौन्दर्य्यं समीक्षितुं समर्थः काव्यविमर्षणव्यापारः काव्यस्योत्पादनव्यापारादभिन्नः। भेदस्त्वनयोः केवलमवस्थाकृत एव, यत

एकत्र रसस्य सृष्टिरपरत्र तस्यानुसृष्टिः (भावनारूपेण)। काव्यविचारणा काव्योत्पादिका प्रतिभा तत्त्वतश्चाभिन्ने।[1]

तत्रभवान् कोलाचलसूरिर्मल्लिनाथो यद्यपि भावयित्र्या प्रतिभया भ्राजमानो बहूनां ग्रन्थानां विशेषतः काव्यग्रन्थानां टीका रचयन् ख्यातिमतितरामलभत तथापि तदीया कवित्वप्रतिभापि सुतरामेव प्रशंसनीया। रघुवीरचरितनामके महाकाव्ये तस्य कवित्प्रतिभा यद्यपि प्रकर्षसीमानमारूढा तथापि टीकानामुपोद्घातरूपेण तेन ये श्लोका विनिर्मितास्तेषामपि काव्यमूल्यं महार्घं निरवद्यञ्च। कालिदासकृतानि रघुवंश–कुमारसम्भव–मेघदूतान्यधिकृत्य मल्लिनाथेन विरचिता टीका सञ्जीवनीत्यभिधया प्रथते। तत्र रघुवंशसञ्जीवन्या उपोद्घातरूपेणनव श्लोका विरचितास्तेन। किञ्च रघुवंशे पुनर्द्वितीयादिसु सर्गेषु टीकाप्रारम्भे एकैकं श्लोकं निवेशयता तेन समुदाये अष्टादश श्लोका रचिताः। शिशुपालवधस्य सर्वङ्कषाभिधानायाष्टीकायाः प्रारम्भे श्लोकषट्कं नूतनतया संयोजितं श्लोकद्वयन्तु रघुवंशसञ्जीवनीगतमेव किरातार्जुनीयस्य घण्टापथाख्यायाष्टीकायाः समारम्भेऽपि नवीनाः सप्त श्लोका विनिर्मिताः विद्याधरकृतैकावलीनामकालंकारग्रन्थस्य तरलाटीकायाः प्रारम्भश्लोकेषु पञ्च नवीना एकस्तु रघुवंशीयसञ्जीवनीगतः तार्किकरक्षाप्रशस्तपादभाष्यनामकयोदर्शन–ग्रन्थयोर्निष्कण्टिकाख्ये टीकाविशेषे रघुवंशसञ्जीवन्यामुपलभ्यमानं श्लोकमेकं विहाय श्लोकद्वितयं तेन नवीनं प्रकल्पितम्, एवं विविधासु टीकासु प्राप्यमाणाः श्लोकाः साकल्येन पञ्चाशत्।

एतेषु श्लोकेषु काव्यसुषमाया नास्ति स्वल्पता। आलंकारिकदृष्ट्या एते श्लोका मुक्तकजातीयरचनास्वरूपाः। यद्यपि निबन्धजातीयकविकर्ममाध्यमेनैव कवीनां कवित्वख्यातिः परां प्रतिष्ठां लभते तथापि मुक्तकरचनायाः कृतित्वमपि सुतरामभ्युपगन्तव्यम्। अमरुकवेरमरुशतकं मुक्तकरचनाया गौरवास्पदमुदाहरणम्, काव्यमीमांसासरणिव्यवस्थापकेन तत्रभवतानन्दवर्धनेनापि मुक्तकरचनाया गौरवमङ्गीकुर्वतोक्तम् मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। (ध्वन्यालोकः ३/७ वृत्तिः) मुक्तकरचनं सर्वदैव रसघनं भवेदिति न नियमः। परन्तु कदाचिन् नीरसमपि तदलंकारभावाभिव्यक्तिचित्रोपस्थापनादिसम्पत्त्या मनोज्ञतां व्रजतीति परिज्ञातमेव, स्वल्पावयवेऽस्मिन् निबन्धे तेषु श्लोकेषु विद्यमानं साहित्यसौन्दर्य्यं सारतो विचार्य्यते।

रघुवंशस्य द्वितीयसर्गे सरस्वतीवन्दनात्मकः टीकोपोद्घातः श्लोक एवं परिप्राप्यते –

आशासु राशीभवदङ्गावल्ली–
भासैव दासीकृतदुग्धसिन्धुम्।
मन्दस्मितैर्निन्दितशारदेन्दुं
वन्देरविन्दासनसुन्दरि त्वाम्।

अत्रोपमानभूतदुग्धसिन्धुशारदचन्द्रापेक्षया उपमेयभूतायाः सरस्वत्या आधिक्यप्रतिपादनाद् व्यतिरेकालंकारः, तेन च वाग्देव्याः शुभ्रतातिशय्यं समभिव्यज्यते। अत्रत्यं कवितासौन्दर्य्यं श्रीहर्षविरचितं नलगुणवर्णनपरं काव्यसौन्दर्यं स्मारयित। तच्चैवम्–

'तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्वणशर्वरीश्वरः।' (नैषधचरितम् १/१०) स्वकेलिलेशस्मित निन्दितेन्दुनः (तत्रैव १/२३), तृतीयसर्गस्य टीकायाः प्रारम्भे परमेश्वरस्य महिमानं प्रख्यापयता मल्लिनाथेनोक्तम्–

उपाधिगम्योऽप्यनुपाधिगम्यः
समावलोक्योऽप्यसमावलोक्यः
भवोऽपि योऽभूदभवः शिवोऽयं
जगत्यपायादपि नः स पायात्।।

श्लोकेऽस्मिन् योऽनुपाधिगम्यः स कथमुपाधिगम्य इत्येको विरोधः, योऽसमावलोक्यः स कथं समावलोक्य इत्यपरो विरोधश्च। तत्र भगवती निर्गुणस्वरूपमवलम्ब्य तस्यानुपाधिगम्यत्वमसमावलोक्यत्वञ्च सगुणस्वरूपमाश्रित्योपाधिगम्यत्वं समावलोक्यत्वञ्चेति तत्समाधानम्। किञ्च योऽभवो जन्मरहितः स कथं भवतीति भवो जन्मयुक्त इति विरोधः। योऽभवः स्वयम्भूः सन् भवो मङ्गलकर इति तस्य समाधानम्। एवमापाततो विरोधस्य प्रतीयमानत्वात् पश्चाच्च तत्समाधानसम्भवात् विरोधाभासोऽलंकारः। प्रथमं विरुद्धबुद्धिः पश्चाच्च तत्समाधानमिति बोधक्रमे समुत्पद्यमानो विस्मय एव विरोधमूलकानामलंकाराणां विच्छितेरुत्सभूतः। एतेन विरोधाभासेन भगवती महिमवैचित्र्यं समभिद्योतते विरोधाभासहारा भगवतो महिमातिरेकप्रतिपादनरीतिः कालिदासादीनां काव्येषु सुलभैव। तद्यथा –

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव।।

(रघुवंशम् १०/२४)

अत्र कविकुलललामभूतेन कालिदासेन विरोधाभासमवलम्ब्य भगवतो विष्णोर्महत्त्वं प्रतिपादितम्।

सत्यवृत्तमपि मायिनं जगद्
वृद्धमप्युचितनिद्रमर्भकम्।
जन्म बिभ्रतमज नव बुधा
यं पुराणपुरुषं प्रचक्षते।। (शिशुपालवधम् १८/१०)

अत्रापि माघकविना विरोधाभासाश्रयेणैव श्रीकृष्णस्य गौरवं वर्णनीयतां नीतम्।

शब्दालंकाराणां सुप्रयोगेऽपि मल्लिनाथस्य कृतित्वं विशेषतः समुल्लेखनीयम् वाग्देवताया नियतसान्निध्यं प्रार्थयता तेन रघुवंशकाव्यस्य चतुर्थसर्गप्रारम्भे समुदीरितम् –

शारदा शारदाम्भोजवदना वदनाम्बुजे।
सर्वदा सर्वदास्माकं सन्निधिं सन्निधिं क्रियात्।।

अत्र शारदा शारदेति स्वरव्यञ्जनसंघातयोः प्रथमस्य सार्थक्यं द्वितीयस्य निरर्थकत्वम्। वदना वदनेति द्वयोरपि निरर्थकत्वम् सर्वदा सर्वदेति द्वयोस्तथा सन्निधिं सन्निधिमिति द्वयोः सार्थकत्वम्। एषु च क्रमिकावृत्तिसाम्यमविशिष्टमेव। तेन यमकं नाम शब्दालंकारः सुप्रयुक्तो विद्योतयति निरवद्यां काव्यप्रतिभाम्। तरलटीकायाः प्रारम्भिकश्लोकेषु तृतीये अस्या एव वाग्देवतायाः सान्निध्यमेवं प्रार्थितम् –

स्वीयैर्नित्यं गुणपरिमलैर्मोदयन्ती दिगन्ता–
नत्युद्दण्डैरमृतकिरणैरैन्दवी लेखिकेव।
सालंकारा सुललितपदा साधुवृत्ता सभावा
माता नित्यं मम भगवती भारती सन्निधत्ताम्।।

अत्रापि ऐन्दवी लेखिकेवेत्युपमा हृद्यतयैव प्रयुक्ता एते वाग्देवता–सान्निध्ययाचनपराः श्लोका भावध्वनेरुत्तमोदाहरणभूताः।

रघुवंशकाव्यस्य पञ्चमसर्गटीका प्रारम्भे टीकाकृता श्रीकृष्णस्य वन्दनमेव–माचरितम् –

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम्।
बन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम्।।

अत्रेन्दीवरदलश्यामेत्युमुपमा, इन्दिरानन्दकन्दलमिति वन्दारुजनमन्दारमिति च निरङ्गं मालारूपकं सुप्रयुक्तं भगवतो यदुनन्दनस्य रूपं गुणञ्च यथार्थतः प्रकाशयति। रसभावादीनामभिद्योतनेऽपि परं प्रगल्भायते मल्लिनाथस्य प्रतिभा। तथाहि रघुवंश- महाकाव्यस्य सप्तमसर्गीयटीकोपोद्घातश्लोके वात्सल्यभावस्य निरवद्यं स्वाभाविकं चित्रमुपस्थापयता तेनैवमुक्तम् –

भजेमहि निपीयैकं मुहुरन्यं पयोधरम्।
मार्गन्तं बालमालोक्याश्वसन्तावादिदम्पती।।

शिशुपालवधमहाकाव्यस्य टीकोपोद्घातश्लोकेष्वेकतमो यथा –

दन्ताञ्चलेन धरणीतलमुन्नमय्य
पातालकेलिषु धृतादिवराहलीलम्।
उल्लोचनोत्फणफणाधरगीयमान–
क्रीडावदानमिभराजमुखं नमामः।।

श्लोकेऽस्मिन् गणेशाभिन्नतया कल्पितस्य भगवतो वराहावतारस्य लीला वर्णिता। अत्र विस्मयस्थायिभावस्याद्भूतरसस्याभिद्योतना विद्योतते। यद्यपि विष्णुरेव वराहावतारं स्वीकृतवान् तथापि विष्णुपुराणे गणपतिरपि विष्णोरवतारत्वेन निगदितः। किञ्च गाणपत्यानां मते गणपतिरेव विष्णुप्रभृतिदेवतारूपेण विराजते। स एव च सृष्ट्यादीनां कर्ता। भावोऽयं रघुवंशसञ्जीवन्यामपि प्राप्यते। तद् यथा –

हेरम्बमबलम्बेऽहं यस्मिन् पातालकेलिषु।
दन्तेनोदस्यति क्षोणीं विश्राम्यन्ति फणीश्वराः।। (सर्गः –८)

अस्यैव गणेशस्य बा चापल्यं वर्णयता टीकाकृता तरलाटीकोपोद्घातश्लोकानां द्वितीये समीरितम् –

अध्यारूढः कपर्दं पितुरमरधुनीं हेलया गाहमानः
कर्षन् हर्षातिरेकात् कनककमलिनीषण्डमुद्दण्डवृत्त्या।
अन्तर्मग्नं कराग्रं फणिपतिशिरसि स्वैरमाधाय तोयं
मुञ्चन् सिञ्चन्नधःस्तात् प्रथमपति शिशुर्भाति बालो गणेशः।।

श्लोकोऽयं स्वभावोक्तिमहिम्ना सहृदयहृदयहारिणीं काव्यशोभां वितनोति।

रघुवंशमहाकाव्यस्य दशमसर्गादारभ्योनविंशसर्गं यावत् प्रतिसर्गं टीका– प्रारम्भे एकैकेन श्लोकेन रामचन्द्रस्य महिमा प्रख्यापितः। ते च श्लोका यथा –

आशासे नित्यमानन्द रामनामकथामृतम्।
सद्भिः स्वश्रवणैर्नित्यं पेयं पापं प्रणोदितुम्।।
रामचन्द्रचरणारविन्दयोरन्तरङ्गचरभृङ्गलीलया।
तत्र सन्ति हि रसाश्चतुर्विधास्तान् यथारुचि सदैव निर्विश।।
वन्दामहे महोद्दण्डदोर्दण्डौ रघुनन्दनौ।
तेजानिर्जितमार्तण्डमण्डलौ लोकनन्दनौ।।
त्रैलोक्यशल्योद्धरणाय सिन्धोश्चकार बन्धं मरणं रिपूणाम्।
पुण्यप्रणामं भवनाभिरामं रामं विरामं विपदामुपासे।
सञ्जीवनं मैथिलकन्यकायाः सौन्दर्य्यसर्वस्वमहानिधानम्।
शशाङ्कपङ्केरुहयोः समानं रामस्य वन्दे रमणीयमास्यम्।।

---

वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दविन्दुः।
तवारविन्दाक्ष पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत्।।
तमो रामपदाम्भोजरेणवे यत्र सन्ततम्।
कुर्वन्ति कुमुदप्रीतिमरण्यगृहमेधिनः।
यत्पादपांसुसम्पर्कादहल्यासीदपांसुला।
कारुण्यसिन्धवे तस्मै नमो वैदेहिबन्धवे।।
मनसो मम संसारबन्धमुच्छेत्तुमिच्छतः।
रामचन्द्रपदाम्भोजयुगलं निगडायताम्।।

एते च श्लोका अतीव हृद्यया ललितया च रीत्या विनिवेशिता अलंकारादि-सद्भाववशात् तथा भक्तिरसस्याभिव्यञ्जनात् सुतरामेव सहृदयहृदयहृद्यतां प्रतिपद्यन्ते। एतेषु सर्वेषु श्लोकेषु सामान्येन समभिव्यज्यते भक्तिभावः अलंकारास्तु श्लोकभेदेन भिद्यन्ते। तथाहि 'आशासे' इत्यादिश्लोके रामनामकथायाममृतत्वारोपाद निरङ्गं केवलं रूपकम्। 'रामचन्द्रे'त्यादिश्लोकेऽपि रामचन्द्र- चरणेऽरविन्दत्वारोपात् तथैव रूपकम्। किञ्च तत्र रसाश्चतुर्विधाः सन्ति इत्यंशे चतुर्विधपुरुषार्थरूपस्य उपमेयस्य निगरणेन तथा रसरूपेण उपमानेन सहाभेदप्रतिपत्तेश्चातिशयोक्तिः। 'वन्दामहे' इत्यादिश्लोके उपमानभूतात् सूर्य्यमण्डलादुपमेयभूतयो रामलक्ष्मणयोस्तेज-साधिक्यप्रतिपादनाद् व्यतिरेकालंकारः 'त्रैलोक्ये' त्यादिश्लोके रावणरूपोपमेयस्य निगरणादुपमानेन त्रैलोक्यशल्येनाभेदविवक्षायाश्च भेदेऽभेदरूपातिशयोक्तिः। तत्रैव

'राम राम' मिति यमकम्। 'सञ्जीवनमित्यादिश्लोके रामस्य वदने उपमेयभूते सञ्जीवनस्य तथा सौन्दर्य्यनिधेरुपमानस्य आरोपात् निरङ्गं रूपकद्वयम्। तृतीयपादे तूपमा। 'वृन्दारका' इत्यादिश्लोके वृन्दारकेषु भृङ्गचरस्य मन्दाकिन्यां मकरन्दविन्दोः रामचरणे चतुर्वर्गचतुष्पदत्वस्य चारोपात् रूपकत्रयम्, 'अरविन्दाक्षे' त्यत्रोपमा। 'नमो रामे' त्यादिश्लोके रामपदांम्भोजेत्यत्रोपमा। कुमुदे कुमुदप्रीतिकरणं सम्भवति। रामपदाम्भोजरेणौ मनुष्याणां कुमुदप्रीतिकरणमसम्भवीति कर्मक्रियासम्बन्धोऽसम्भवः। ततश्च कुमुदप्रीतिसदृशीं प्रीतिं करोतीति साद्दश्याक्षेपादसम्भवद्वस्तुसम्बन्धरूपा निदर्शना। 'यत्पादे' त्यादिश्लोके अहल्या पांसुसम्पर्कात् धूलिसम्पर्कात् अपांसुला धूलिविरहिताभवदिति विरोधस्तस्य च यस्य पादरजः—संस्पर्शेन अहल्या अपांसुला पवित्राभवदिति समाधानम्। तेन विरोधाभासः रामचन्द्रे कारुण्यसिन्धुत्वस्यारोपाद्रूपकम्। अन्तिमे श्लोके विरोधाभासः। तथाहि यो बन्धमुच्छेत्तुमिच्छति स कस्यापि वस्तुनो निगडत्वं नेच्छति, अत्र तु तथेष्यत इति विरोधः। मल्लिनाथेन तु संसारबन्धनं छेत्तुमिष्यते। अतो रामचरणयुगलस्य निगडत्व (नियामकत्व) प्रार्थनं युज्यत एवेति समाधानम्। तस्माद् विरोधाभासः। एवमेते भगवतो रामचन्द्रस्य महिमाकीर्तनपराः श्लोकाः सालंकारा भक्तिभावाभिव्यञ्जनक्षमाश्च गीतिकाव्यधर्मितां विगाहन्ते।

तरलाटीकाप्रारम्भावसरे भगवतोः पार्वतीपरमेश्वरयोः सम्भागेशृङ्गार–वर्णनपरः श्लोक एवम् –

अग्रे कृत्वा प्रियसहचरीमन्तिकं सम्प्रयान्तीं
व्रीडाभारादवनतमुखीमम्बिकामादरेण।
लोलापाङ्गां प्रणयमधुरं लोचनान्तेन पश्य–
न्नन्तस्तुष्यन्नवतु भगवानम्बिकावल्लभो नः।।

सम्भोगशृङ्गारे नायकगतो नायिकागतश्च रतिभावो वर्णयितव्यः। तत्र कविना कदाचिदुभयनिष्ठयोः रतिभावयोः समप्राधान्येन कदाचिद्वा नायिकानिष्ठस्य रतिभावस्य प्राधान्येन वर्णनं क्रियते। अत्र परमेश्वराश्रयस्य रतिभावस्यास्ति प्रधानत्वं पार्वत्या रतिभावस्य तु गौणत्वं विवक्षितम्।

पारस्परिकरतिभावं प्रति परस्परं तावालम्बनविभावभूतौ। पारस्परिकचेष्टितानि चोद्दीपनरूपाणि। पार्वत्या लोलापाङ्गत्वादयोऽनुभावाः महादेवस्य च सस्पृह–विलोकनादयः। पार्वतीगता व्रीडादयो व्यभिचारिणः। औत्सुक्यशङ्कादयो व्यभि–चारिणस्तावदाक्षेपलभ्याः। एवं कविप्रतिभासमुत्थितेन विभावादीनां वर्णनावैचित्र्येण। व्यञ्जनाव्यापारमहिम्ना समभिव्यजते सम्भोगशृङ्गारो रसिकानां मानसेषु।

समानानेवपदार्थान् समादाय सन्निवेशवैचित्र्येण एकस्मिन्नेव श्लोके भिन्नवैशिष्ट्यभाजो देवयोः निरवद्ये वाङ्मूर्ती निर्माय तत्र भवता मल्लिनाथेन काव्यचमत्कारित्वमतितरामुपायनीकृतम्। तथाहि रघुवंशस्य षष्ठसर्गटीकारम्भे शम्भोर्विष्णोश्चैकत्र श्लोके संस्तुतिर्विहिता। तद् यथा –

**जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ।**
कामारिः कामतातं वा कञ्चिदेकं भजामहे।।

तार्किकरक्षाग्रन्थस्य टीकायाः प्रारम्भभूते श्लोकेऽपि समानैव कविप्रतिभाचातुरी परिदृश्यते। तद् यथा –

परस्परोपासकभावभाजौ कौचिद्दयालू कलये पुमांसौ।

अत्र श्रीराममहादेवयोश्चरितं वर्णितम्। श्लेषालंकारस्य विशेषचमत्कृतिः नयनपदवीमवगाहते तरलटीकायाः प्रारम्भिकश्लोकेषु षष्ठतमे श्लोके। तद् यथा –

एकावली गुणवतीयमलं क्रियापि
यद्वैशसादजनि कोशगृहेषु गुप्ता।
तनोद्वलेन तरलेन समेत्य धन्यैः
कण्ठेषु चाद्य हृदयेषु च धार्य्यतां सा।।

अत्रैकावलीतरलालङ्क्रियादिपदेष्वर्थद्वयसद्भावाच्छ्लेषः। तेन च श्लेषेण तरलाख्यव्याख्यया युक्तैकावलीनाम्न्यलंकृतिः (अलंकारग्रन्थः) मध्यमणिना शोभितो हारविशेष इव सहृदयानां समादरपात्रतां यायादिति ध्वन्यते।

टीकारम्भकश्लोकेषु छन्दोवैचित्र्यमपि सुतरामेव लक्षणीयम्। तत्रानुष्टु–प्च्छन्दसा द्वात्रिंशच्छ्लोकाः, इन्द्रवज्रयैकः, उपेन्वज्रयैकः, उपजात्या त्रयः रथोद्धतया त्रयः मालभारिण्यैकः, वसन्ततिलकेन पञ्च, मालिन्यैकः, मन्द्राक्रान्तया द्वौ, शार्दूल–विक्रीडितेन त्रयः, स्रग्धरया चैकः श्लोको विरचितः।

एवं मल्लिनाथेन विरचितेष्वेतेषु श्लोकेषु क्वचिच्छृङ्गारादिरसानां क्वचिद् भक्त्यादिभावानामवस्थितिः काव्यसुषमामतितरां वितनोति। कुत्रापि रूपकोपमा–दीनामर्थालंकाराणां कुत्रचिद्वा यमकादीनां शब्दालंकाराणां विद्यमानता कविकर्मणः शोभां पुष्णाति नितराम् कस्मिन्नपि श्लोके स्वभावोक्तिः विसृजति सहृदय–हृदयानुभववेद्यां काव्यच्छायाम्। एतेषां सर्वेषां श्लोकानां समवायेन स्वल्पायतनं काव्यमेकं विनिर्मितमभविष्यदिति निश्चप्रचं वक्तुं शक्यते। आत्मनः कारयितृप्रतिभा–विषये मल्लिनाथः स्वयमपि समवहित आसीत्। तथा चोक्तं तेन –

'मल्लिनाथः कविः सोऽयम् .......।'[3]

मल्लिनाथस्य कवित्वविवेक: / ३२

संदर्भाः –

(१) पृथगेव हि कवित्वाद् भावकत्वम्, भावकत्वाच्च कवित्वम् स्वरूपभेदाद् विषयभेदाच्च। यदाहु: –

केचिद् वाचं रययितुमलं श्रोतुममेवापरस्ताम्

———————————————

एक: सूते कनकमुपलस्तत्परीक्षाक्षमोऽन्य:।

काव्यमीमांसा पृष्ठा:१९९, विश्वभारतीगवेषणा ग्रन्थमाला

(2) ----- The activity of judgemnt which criticizes and recognizes the beautiful is identical with what produces it. The only difference lies in the diversity of circumstances since in the one case it is a question of aesthetic production, in the other of reproduction. The activity which judges is called taste; the productive activity is called genius; genius and taste are, therefore, substancially identical. Quoted on page 85 of the Kāvyamīmāṃsā of B.P. Bhattacharya.

(३) रघुवंशसञ्जीवन्या: तथा तरलटीकाया: प्रारम्भिकश्लोकेषु पञ्चम:।



# संस्कृते स्तोत्रसाहित्यम्

मुरलीमनोहरः पाठकः

स्तोत्रकाव्यं महत्पुण्यं परमानन्ददायकम्।
देवगीरर्चिता येन विवृणोमि यथामति।

'स्तोत्रं कस्य न तुष्टय' आभाणकमिदं जानन्त्येव समे सुधियो विचक्षणाः। काव्यभेदेषु वर्तते महन्महत्त्वं स्तोत्रस्य। इदं खलु स्तोतुर्भक्तिभावनायाः शाब्दिकं प्रकाशनम्, यस्मिन् सः स्वकीयमाराध्यं साक्षात्कुरुते। अथ च स्तोत्रमाराधकारा-ध्ययोरेकीकरणस्य प्रक्रिया। अतस्तत्त्वतो नास्त्यत्रवकाश एतयोर्व्यतिरिक्तस्य कस्यापि जनस्य तथापि सुरसरिद्वदेतस्मिन्नवगाहनशीलस्य भावुकस्य रसोत्पत्ति-र्जायत एव। संस्कृतसाहित्यान्तर्गतानां विविधस्तोत्राणां तत्त्वालोचनेन न केवलं चेतः प्रसीदति भक्तिश्चोत्पद्यत अपितु तत्र दर्शन–साहित्य–तन्त्र–आगम– ज्यौतिषादि-विद्यानां प्रतिपादनपुरस्सरं तात्कालिक–सामाजिक–राजनैतिकादिस्वरूपस्यापि परिज्ञानं भवति। शङ्कराचार्यस्य सौन्दर्यलहरी, जगद्धरस्य स्तुतिकुसुमाञ्जलिः यामुनाचार्यस्यालबन्दारस्तोत्रं, बौद्धानां जैनानाञ्च विविधस्तोत्राणि स्वस्वसम्प्रदाय-गतान् सिद्धान्तान् स्फुटीकुर्वन्ति। ऋग्वेदादारभ्याद्यावधि प्रणीतानां प्रमुखस्तोत्राणां निदर्शनात्पूर्वं स्तोत्रशब्दस्य निष्पत्तिरर्थविस्तारः स्तोतुर्मनोभूमिः स्तोत्ररचनाया आधारभूततत्त्वानाञ्च परिशीलनमपेक्ष्यते।

## स्तोत्रशब्दस्य निर्वचनमर्थविस्तारश्च

'ष्टुञ् स्तुताविति धातोः' दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे' (पा.सू. –३.२.१८२ ) इति सूत्रेण करणार्थे ष्ट्रन् प्रत्ययप्रयोगेन निष्पन्नस्यास्य स्तोत्रशब्दस्य व्युत्पत्तिजन्योऽर्थो येन स्तूयते तत्स्तोत्रमिति। कोशे स्तवः स्तुतिर्नुतिश्चेति

शब्दत्रयं स्तोत्रस्य पर्यायत्वेन पठितम्।[1] स्तुतिशब्दस्तु 'ष्टुञ् धातोरेव 'वितन्' प्रत्यययोगेन निष्पद्यते स्तोत्रस्य प्राणत्वेन च विराजते। शब्दोऽयं गुणनिरूपणार्थकः। यथा 'वायुर्वै क्षेपिष्ठा देवतेत्यस्मिन् वाक्ये[2] वायुदेवतायाः स्तुतिर्विहिता। शङ्करस्वामिनाप्यत्र स्तुतिपरक एवार्थो गृहीतः[3]। अन्यत्रापि स्तुतिशब्दो गुणकथनात्मक एव स्वीकृतः। गुणकथनं च कदाचित्सामान्यवाक्येन कदाचिच्च पद्यात्मकवाक्येन भवति। तत्रापि स्तोतुरन्तर्हितभावबोधाय पदार्थापेक्षया वाक्यार्थोऽपेक्ष्यते। सन्दर्भेऽस्मिन् भर्तृहरिर्जगाद –

''स्तुतिनिन्दाप्रधानेषु वाक्येष्वर्थो न तादृशः।
पदानां प्रविभागेन यादृशः परिकल्प्यते।।[4]

विवेचनेनानेन फलितं यत्स्तोत्रे स्तुतिः प्रधानत्वं भजते सा चापि स्तुत्यस्य गुणख्यापनमेव। मत्स्यपुराणे स्तोत्रं चतुर्धा विभक्तं तद्यथा –

'द्रव्यस्तोत्रं कर्मस्तोत्रं विधिस्तोत्रं तथैव च।
तथैवाभिजनस्तोत्रं स्तोत्रमेतच्चतुर्विधम्।[5]

अत्र द्रव्यं कर्म विधिरभिजनश्च स्तोत्रस्य विषयत्वेन निरूपिताः। स्तोता कदाचिद्द्रव्यं कदाचित्कर्म कुत्रचिद् विधिं कदाचिच्चाभिजनं स्वकीये स्तोत्रे स्तौति। श्लोकेऽस्मिन् स्तोत्रशब्दस्य प्रयोगो द्रव्याद्युपाधिकप्रशंसात्मकवाक्यसंरचनायै एव। स्तुतिप्रतिपादकपद्यनिर्देशायापि शब्दोऽयं प्रयुज्यते यथा –

'सकलगणवरिष्ठः पुष्पदन्ताभिधानो
रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार।।[6]

काव्यप्रणयनदृष्ट्या विचारेण स्तोत्रं भावातिशयमाटीकते। अन्यप्रकारकानां काव्यानां प्रणयने तादृशो भावो नैवापेक्षितो यादृशः स्तोत्ररचनायाम्। वस्तुतः स्तोत्ररचना श्रद्धासंवलितभावातिरेकेणैव जायते। स्तोत्रे स्तोता स्वकीयान् हृद्गतभावान् स्वच्छन्दतया निर्व्याजं व्यनक्ति। तत्र शब्दो भावनायाः परिधानत्वेन समायाति स्तोतु-र्दृष्टिस्त्वाराधकगुणाब्धावेव निमग्ना भवति। ईदृक्स्तोत्रविधानेन मङ्गलमेव सञ्जायते सर्वत्रामङ्गलस्य च क्वचिदप्यवकाशो नैव दृश्यते। इत्थं मम्मटप्रतिपादितेषु काव्यप्रयोजननेष्वन्यतमं[7] शिवेतरक्षतिसञ्ज्ञकं प्रयोजनं चरितार्थयंस्तोत्रं नितरां काव्यलक्षणसङ्गतिं भजते।

आत्मनिष्ठं वस्तुनिष्ठञ्चेति काव्यं द्विधा। तत्रात्मनिष्ठे काव्ये कविः केवल-मात्मगतभावानेव स्फुटीकुरुते वस्तुनिष्ठे च वस्तुगताननेकान् विषयानाविष्करोति,

यद्यपि तत्राप्यात्माभिव्यक्तिर्गरीयस्येव। स्तोत्रं शुद्धमात्मनिष्ठमिति निश्चप्रचम्। आत्मनिष्ठे सत्यप्येतस्मिन् जनसामान्यकृतेऽपि लाभो जायेत चेद्वैशिष्ट्यमेवैतस्य। अधुनाऽपि लोके दृश्यते यद् विविधकालेषु विविधकविप्रणीतस्तोत्राणि बहुशो व्यह्रियन्ते यथायथं लाभप्रदान्यपि। भावुकाः सहृदया अन्यप्रणीतस्तोत्रमप्यात्मवत्स्वीकृत्य तस्मिन् हार्दां निष्ठां विदधति। एवमेवान्यदृशापि स्तोत्रस्य श्रेष्ठत्वं प्रतिपादयितुं शक्यते।

## स्तोत्रघटकतत्त्वानि

कानि स्तोत्रघटकतत्त्वानीति जिज्ञासायामुच्यते। मूलतः स्तोता तस्य हृद्गतभावः (विषयः) स्तुत्यश्च स्तोत्रनिर्माणघटकत्त्वानि। स्तोतुर्यादृशं वैयक्तिकं स्वरूपं भवति सः तादृशानेव भावान् स्तोत्रमाध्यमेनाराध्यं प्रत्यभिव्यनक्ति। स्तोतृनिष्ठानुभूतिर्यदा स्वभावत : स्वकीयानि सुखानि दुःखानि च प्रकटयितुमिच्छति स्तुत्येन साहाय्यं चापेक्षते तदा स्तोत्रं प्रादुर्भवति। अत्र विषयविषयिणोः प्रेरणा कारणम्।

हृदयावर्जकस्तोत्ररचनायै विषमावस्थायामपि स्तोतुराराध्यंप्रति दृढा निष्ठाऽपेक्षिता। विना दृढनिष्ठां स्तोत्रं कथमपि नैव प्रसरेत्, प्रसरेच्चेद् वास्तविकं नैव स्यात्।

स्तोत्रे तत्त्वभूतं भावप्रवणत्वमुपलभ्यते। स्तोता रागात्मकानुभूत्या कल्पनयाचाराध्यमपि भावसंवलितं विदधाति। अतः स्तोत्रे भाव एव प्रामुख्यं भजति विषयो वस्तु वाऽनुभूतिः साधनमात्रम्। अनेनैव कारणेन एकमेवाराध्यं प्रति स्तोतृभेदेन विभिन्ना भावा जायन्ते।

स्तुतेर्विषयोऽल्पीयान् भवति अत एक एव मौलिको भावः सम्पूर्णं स्तोत्रं व्याप्नोति तस्यैव भावस्य विविधरूपेण प्रकाशनं च क्रियते। यद्यपि स्तोत्रेऽनेकेषां रसानां सन्निवेशः कर्त्तुं शक्यते भवत्यपि तथापि प्रामुख्येन स्वात्मानुरागापरपर्यायो भक्तिसञ्ज्ञक एव रसस्तत्रविशेषेण समुज्जृम्भते।

कृत्रिमता स्वात्मातिरिक्तं प्रत्येव सङ्गच्छते, नह्यत्मानं कोऽपि शब्दाडम्बरेण स्तौति। यतः स्तोत्रे स्तोतव्यः स्वात्मरूपेणैव गृह्यते अतस्तत्राभिव्यक्तिर्नैसर्गिकी भवति। स्वाभाविकभावावेगेन शब्दगतमर्थगतं वा काठिन्यं नैव प्रविशति। स्तोतुर्दृष्टिरपि शब्दचमत्कृतिमर्थगाम्भीर्यं च जहात्येव। अल्पैरेव पदैः कृतयाऽभिव्यक्त्या पूर्णो रसोद्रेको जायते।

काव्यभेदेषु स्तोत्रं गीतिकाव्यान्तर्गतमेव। गेयत्वं खलु गीतिकाव्यस्यानिवार्य–

तत्त्वम्। आराध्यस्य गुणगणवर्णनभावापन्नः स्तोता यदा तमाराधयितुमारभते तदा गीतिमत्त्वं स्वयमेव तत्र पदं निदधाति। सः स्वकीयान् भावान् प्रकटयितुं तादृशमेव छन्दश्चिनोति यस्मिन् गेयत्वं स्यात्। अत एव स्तोत्रेषु प्रायः शिखरिणी, मन्दाक्रान्ता-वसन्ततिलकोउपजाति–वंशस्थ–स्रग्विण्यादीनि छन्दांस्येवोपलभ्यन्ते। दण्डकशैल्या विरचितान्यपि स्तोत्राणि गेयत्वमावहन्त्येव। वस्तुतः स्तुतिरचनायां स्तोता भावविह्वल सन्नेवावतिष्ठते। तस्य प्रतिरोम भावसंवलितं लयात्मकत्वं विराजते येन स्तोत्रे गीतिमत्त्वं जायते।

सम्बन्धदृष्ट्या विचारेण स्तोतृस्तुत्ययोराराधकाराध्ययोर्वा मध्ये द्विविधः सम्बन्धो दृश्यते–अन्तःसम्बन्धो बाह्यसम्बन्धश्चेति। बाह्यसम्बन्धोऽपि द्विप्रकारक एव। तत्र प्रथमतः सकामस्तुतिषु स्तोतृस्तुत्यस्तुतीनां त्रिपुटी, पश्चात्तु निष्कामस्तुतिषु स्तुत्य स्तुतिश्चैकाऽऽकारत्वं भजतः, फलतः स्तोतुरस्तित्वं पृथगेव परिलक्ष्यते। अत्रापि सम्बन्धो बाह्य एव। यदा पुनः स्तोता स्तुतिप्रसङ्ग उत्पन्ने सति आत्मानमपि स्तुत्यस्य पार्षदत्वेनानुभवति तदा अन्तःसम्बन्धो जायते। इयमेव स्तोत्रस्य चरमा वास्तविकी च स्थितिः। अत्रांशांशिभावस्य परमोत्कर्षो लक्ष्यते। अद्वैतप्रस्थानस्याप्रतिमो व्याख्याता शङ्कराचार्योऽपि भूमावेतस्यामात्मानं ब्रह्मणोंऽशरूपेणैव स्वीकुरुते–

सत्यपि भेदापगमे नाथ ! तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः।।[१]

स्तोत्रस्य स्वरूपाख्यानानन्तरमिदानीं संस्कृतस्तोत्रसाहित्यस्य संक्षिप्त-परिचयो दीयते। तत्र वैदिकलौकिकभेदेन संस्कृतं द्विविधम्।

## १. वैदिकसंस्कृते स्तोत्रसाहित्यम्

भारतीयपरम्परा कस्याश्चिदपि प्रवृत्तेः स्रोतो वेदेष्वेवान्विषति पाश्चात्त्य-मनीषाऽपि एवमेवाचरति। अन्यप्रवृत्तिसन्दर्भे यादृश्यपि स्थितिर्भवेत् स्तोत्रमूलं किंवा स्तोत्रसाहित्यं तु वेदस्य प्राणतत्त्वमेव। वेदस्य संहिताभागे प्रायः सर्वाणि सूक्तानि स्तुतिसंवलितान्येव। किं बहुना, ऋग्वेदस्य प्रथमो मन्त्रः प्रथमं च सूक्तं स्तुतिरेव।[२] स्तोत्राणां स्तोता, ऋषिः स्तुत्यश्च देवतानाम्नाभिधीयते। ऋग्वेदे, अग्नि–इन्द्र–विष्णु–वरुण–मित्र–पर्जन्य–यम–सवितृ–सोम–मण्डूक–वात–वाक्–ब्रह्मणस्पति–मरुत्–रुद्र–उषस्–पूषन्–अश्विन्–हिरण्यगर्भादिदेवानां स्तुतिः विविधं विहिता। अनेकदेवानां 'विश्वेदेवा' इतिनाम्ना एकत्रापि स्तुतयो दृश्यन्ते। तद्यथा–

देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो निवर्तताम्।
देवानां सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे।।[११]

शुक्लयजुर्वेदस्य पुरुषसूक्ते पुरुषो ब्रह्मतेजोरूपेण स्तूयते –
यो देवभ्य आतपति यो देवानां पुरोहितः।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मणे[१२]।।

सामवेदस्योदगाता अग्निं स्तुवन् स्वकीयभावानेवं प्रस्तौति–
पाहि नो अग्न एकया पाह्युत द्वितीयया।
पाहि गीर्भिस्तिसृभिरुर्जा पते पाहि चतसृभिर्वसो[१३]।।

अथर्ववेदेऽपि स्तुतिधारा सततं प्रवर्तते। ऋषिः देवैः सह जडजगदपि स्वकीयाराध्यत्वेन स्वीकुरुते –
नमो रुद्राय नमो अस्तु तक्मने नमो राज्ञे वरुणाय त्विषीमते।
नमो दिवे नमः पृथिव्यै नम ओषधीभ्यः[१४]।।

उपनिषत्स्वपि अनेकस्थलेषु स्तुतिर्दृश्यते। ईशावास्य–प्रश्न–तैत्तिरीयाद्युप–निषत्सु[१५] यथास्थानं स्तुतयो विहिताः। तैत्तिरीयोपनिषदो मङ्गलाचरणमेव स्तुत्यात्मकम्। तद्यथा –
शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा।
शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः।।

नमो ब्रह्मणे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्[१६]।

२. लौकिकसंस्कृते स्तोत्रसाहित्यम्

महर्षिवाल्मीकिः संस्कृतस्य आदिकविरूपेण तत्प्रणीतं रामायणञ्चादि–काव्यरूपेण स्वीक्रियते। तत एव लौकिकसंस्कृतस्य समारम्भो विहितः। अतस्तन्मुखेनैव लौकिकसंस्कृतस्थस्तोत्राणां दिङ्निर्देशः क्रियते।

## क. आदिकाव्ये (रामायणे) स्तोत्राणि

महर्षिवाल्मीकिना प्रणीते दिव्ये रामायणे नैकानि भावप्रवणस्तोत्राणि स्थाने स्थाने दृश्यन्ते। तत्र कल्पनाया भावनाया दर्शनस्य च मञ्जुलं सामञ्जस्यं सचेतसां चेतांस्यावर्जयति। आरम्भ एव देवकृता ब्रह्मस्तुतिः काव्यस्य स्तुतिमत्त्वं प्रतिपादयति।

भगवंस्त्वत्प्रसादेन रावणो नाम राक्षसः।
सर्वान्नो बाधते वीर्याच्छासितुं तं न शक्नुमः।।

अनेनैव प्रकारेण ऋषिकृता विष्णुस्तुतिरपि स्तोत्रसाहित्यं मण्डयति। रामायणस्यादित्यहृदय- स्तोत्रं को नाम न जानाति सचेताः। तदद्यापि रोग-निवारणाय लोके प्रयुज्यते। ब्रह्मकृता रामस्तुतिरपि तथैव मनोज्ञा। अपरत्र च तपसोऽनन्तरं रावण- कुम्भकर्ण-विभीषणैर्विहिता ब्रह्मणः सकामस्तुतिर्ध्येया -

भगवन् प्राणिनां नित्यं नान्यत्र मरणाद्भयम्।
नास्ति मृत्युसमः शत्रुरमरत्वमहं वृणे।।

## ख. महाभारते स्तोत्राणि

महर्षि वेदव्यासप्रणीते महाभारतेऽपि स्तोत्राणां निचयो दृश्यते। महाभारत-स्यानेकेषु कथानकेषु स्तुतिसाम्राज्यं विततम्। विष्णुसहस्रनाम-भीष्मस्तव- राजश्च स्तोत्रसाहित्ये प्रामुख्यं भजतः। अनुशासनपर्वणि अश्वत्थामकृता शिवस्तुतिः सौप्तिकपर्वणि चार्जुनकृता दुर्गास्तुतिः।

## ग. पुराणेषु स्तोत्राणि

पौराणिकसाहित्ये सरसानि भावसंवलितानि दार्शनिकानि च स्तोत्राण्यु-पलभ्यन्ते। पुराणेषु विन्यस्तस्तोत्राणि परमसत्ताया विविधं स्वरूपं विवेचयन्ति। सामान्यतस्त्वष्टादशस्वेव पुराणेषु स्तोत्राणि दरीदृश्यन्ते किन्तु विशेषतो विष्णुपुराणे श्रीमद्भागवते चोपलब्धानि स्तोत्राणि अतिशयं मनोहारीणि तात्त्विकदृष्ट्या विवेचनीयानि च। विष्णुपुराणे पृथिव्या, पराशरेण, प्रह्लादेन, कायिनागेन, नागपत्न्या, इन्द्रादिकेन च कृताः स्तुतयोमहत्त्वशालिन्यः। ऋषिपराशरेण विष्णुरुत्पत्तिस्थिति-संहारकर्तृरूपेण प्रतिष्ठितः। विष्णुपुराणतः कानिचित्स्तुतिवाक्यान्यत्रनिदर्शन-रूपेणोद्ध्रियन्ते।

नमस्ते पुण्डरीकाक्ष शंखचक्रगदाधर ।
भवता यत्परं तत्त्वं तन्न जानाति कश्चन
त्वामाराध्य परब्रह्म याता मुक्तिं मुमुक्षवः
त्वं वेदास्त्वं तदङ्गानि त्वं यज्ञपुरुषो हरे ।

उपरिनिर्दिष्टेषु स्तुतिवाक्येषु स्तुतिकर्त्रा यादृशी भावना स्तुत्याय समर्पिता सा स्तोत्रस्य निकषत्वेन स्वीक्रियते।

श्रीमद्भागवतमहापुराणं तु स्तोत्रस्याब्धिरेव। अत्र ब्रह्मविष्णुशिवकपिल–श्रीकृष्णरामादीनां स्तुतयो हृदयमावर्जयन्ति। एतासु न केवलमाराध्यस्य गुणकीर्तन–मेवापितु भक्तेः पराकाष्ठा दार्शनिकतत्त्वानाञ्च सम्यक् सन्निवेशो दृश्यते। भागवतस्य नैकाः स्तुतयः सङ्कटनाशिन्यः। काव्यदृष्ट्या विचारेण श्रीकृष्णाय समर्पिताः स्तुतयोऽनायासेनैव श्रोतुः पाठकस्य वा हृदये रससञ्चारं विदधति। श्रीमद्भागवतस्य स्तुतिषु कुन्तीकृता भगवत्स्तुतिः भीष्मकृता कृष्णस्तुतिः शुकदेवकृता भगवत्स्तुतिः देवहूतिकृता कपिलस्तुतिः ऋत्विग्गणकृता भगवत्स्तुतिः शिवकृता भगवत्स्तुतिः यमकृता हरिस्तुतिः ब्रह्मकृता भगवत्स्तुतिः सनकादिकृता भगवत्स्तुतिः गजेन्द्रकृता विष्णुस्तुतिः ध्रुवकृता विष्णुस्तुतिः देवकीकृता श्रीकृष्णस्तुतिः नारदकृता श्रीकृष्णस्तृतिः रुक्मिणीकृता श्रीकृष्णस्तुतिः उद्धवकृता श्रीकृष्णस्तुतिश्च प्रामुख्यं भजन्ति।

श्रीमद्भागवते सकामा निष्कामाश्चोभयविधाः स्तुतयो विलसन्तितराम्। सकामस्तुतिषु दैहिकदैविक भौतिकाख्यतापत्रयान्मुक्तिरेवोद्देश्यम्। अत्र विभावा–नुभावसञ्चारिभावानामभिव्यञ्जनासाध्वनुष्ठिता। एकतः कोमलकान्तपदावली, अपरतश्च भावानां लोकोत्तरश्चमत्कारो मनास्याहरतः। निष्कामस्तुतयस्तु वैशिष्ट्यद्वयसमन्विताः सन्ति। प्रथमं वैशिष्ट्यं स्तुतिमाध्यमेन तत्त्वज्ञानस्य स्थापना। तत्र स्तोता चिदचिदात्मकजीवनस्यानन्दमयीं शक्तिं तस्याः कर्तृत्व–भोक्तृत्वादि–गुणांश्च विवेचयति। द्वितीयं वैशिष्ट्यं साधनागतमस्ति। प्रह्लादाम्बरीषब्रह्मध्रुवाणां स्तुतयः साधनाप्रधानाः। स्तुतिर्निर्गुणा वा भवतु सगुणा वा सर्वत्र तस्या विषयः परमात्मैव।

ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।

ध्रुवकृतायां विष्णुस्तुतौ परमात्मैवालम्बनं यः सगुणरूपो अन्तर्यामिपुरुषत्वेन स्वमायाशक्त्या प्रपञ्चस्य निमेषोन्मेषं विदधाति।

'एकस्त्वमेव भगवन्निदमात्मशक्त्या मायाख्ययोरुगुणया महदाद्यशेषम्।
सृष्ट्वानुविश्य पुरुषस्तदसद्गुणेषु नानेव दारुषु विभावसुवद्विभासि'' ।

वृत्रः सर्वभावेन समर्पणपुरस्सरं दासानुदासत्वं कामयते।

अहं हरे तव पादैकमूलदासनुदासो भवितास्मि भूयः।
मनः स्मरतासुपतेर्गुणास्ते गृणीत वाक् कर्म करोतु कायः'' ।।

किं बहुना लयरूपानुप्रवेशप्राप्त्यार्थं भागवतरसपानमवश्य करणीयम्।

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः'' ।

## घ. स्फुटस्तोत्राणि

संस्कृतस्य स्फुटं स्तोत्रसाहित्यमति गभीरम्। अत्र कवयः स्वकीयान् भावान् स्तुत्यं प्रति निर्द्वन्द्वरूपेण प्रकटयामासुः। एतेषु स्तोत्रेषु चण्डीशतकं सूर्यशतकं, कटाक्षशतकं, मन्दहास्यशतकं, पादारविन्दशतकम्, आर्याशतकं, स्तुतिशतकं, शिवापराधक्षमापनस्तोत्रं, द्वादशपञ्जरिकास्तोत्रम्, आनन्दलहरी, सौन्दर्यलहरी भवान्यष्टकं, चर्पटपञ्जरिकास्तोत्रं, वक्रोक्तिपञ्चाशिका, शिवमहिम्नःस्तोत्रं, देवीशतकं, शिवस्तोत्रावली, मुकुन्दमाला, स्तोत्ररत्ने (आलाबन्दारस्तोत्रं) स्तोत्रचतुःश्लोकी, श्रीस्तुतिः, दीनाक्रन्दनस्तोत्रं कृष्णकर्णामृतं, गोविन्ददामोदरस्तोत्रं जगद्धरभट्टस्य च स्तुतिकुसुमाञ्जलिरित्यादीनि विविधस्तोत्राणि स्तोत्रसाहित्यस्य श्रियं वर्धयन्ति। विविधदेवसम्बद्धस्तोत्राणां परिचयस्तदनुसारेणैव दीयते।

## अ. शैवस्तोत्राणि

संस्कृतसाहित्ये शिवविषयकाणि नैकानिस्तोत्राणि विरचितानि। एतेषु शिवमहिम्नःस्तोत्रं प्रमुखम्। अस्य प्रणेता पुष्पदन्ताभिधानः कश्चिद्गन्धर्वः स्वीक्रियते। भाषालालित्येन भावानां च दार्शनिकत्वेन स्तोत्रमिदमधिकलोकप्रियम्। अस्मिन् चत्वारिंशत्पद्यानि साम्प्रतमुपलभ्यन्ते। स्तोत्रस्यास्य टीकाकारेषु मधुसूदनसरस्वती विशिष्टः। अन्याश्चापि बह्व्यष्टीका अस्य महत्त्वं प्रकाशयन्ति। स्तोत्रेऽपि एवमुद्घोषितम् –

महेशान्नापरो देवो महिम्नो नापरा स्तुतिः'' ।

जगद्धरभट्टप्रणीता स्तुतिकुसुमाञ्जलिः शिवविषयकस्तोत्राणां विशालो

ग्रन्थोऽस्ति। अस्मिन् अष्टत्रिंशत्स्तोत्राणि विलसन्ति। कविः सर्वथा शिवं प्रति आत्मानं समर्पयति। पद्यमेकं द्रष्टव्यम् –

**स्वैरेव यद्यपि गतोऽहमधः कुकृत्यैस्तत्रापि नाथ तव नास्म्यवलेपपात्रम्।**
**दृप्तः पशुः पतति यः स्वयमन्धकूपे नोपेक्षते तमपि कारुणिको हि लोकः**[४६]**।।**

अवतारनाम्नः कवेः 'ईश्वरशतकम्' चित्रकाव्येन मण्डितम्। काव्येऽस्मिन् कविना स्वोपज्ञटीकाऽपि विरचिता। शङ्कराचार्यप्रणीतेषु शैवस्तोत्रेषु शिवपादादि–केशान्तवर्णनस्तोत्रं शिवकेशादिपादान्तवर्णनस्तोत्रं चैतत्स्तोत्रद्वयं शिवावयवानां मनोरमं वर्णनं विदधाति। लङ्केश्वरविरचिता 'शिवस्तुतिः' केवलं दशपद्यसंवलिततैव, किन्तु तस्याः साहित्यिकमहत्त्वमधिकम्। पद्यमेकमवलोक्यतां यत्र शिवसमीपे पिशाचयोनिः कविना इन्द्रपदापेक्षयास्वीकृता।

भवद्भवन–देहली–विकट–तुण्डदण्डाहति–
त्रुटन्मुकुट–कोटिभिर्मघवदादिभिर्भूयत।
व्रजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं
किमित्यमरसम्पदः प्रमथनाथ नाथामहे[४७]।।

काश्मीरकवेरुत्पलदेवस्य शिवस्तोत्रावल्यां भक्तिभावसमन्वितानि एकविंशतिस्तोत्राणि सन्ति। कल्हणकृतमर्धनारीश्वरस्तोत्रं लघुकायमपि महत्त्वपूर्णम्।

शैवस्तोत्रेषु 'दुर्वासा' इतिनाम्नः कवेः परशम्भुमहिम्नःस्तवो दार्शनिकदृष्ट्या महत्त्वपूर्णः। त्रयोदशप्रकरणेषु विभक्तेऽस्मिन् ग्रन्थे तान्त्रिकसिद्धान्तप्रख्यापकानि गूढार्थप्रकाशकानि च शैवस्तोत्राणि समुपनिबद्धानि। शिवविषयकस्फुटस्तोत्रेषु स्वामिश्रीशङ्कराचार्यप्रणीता शिवमानसपूजा, श्रीशिवापराधक्षमापनस्तोत्रं वेदसार–शिवस्तवः, शिष्टकं श्रीशिवपञ्चाक्षरस्तोत्रं, रावणकृतं शिवताण्डवस्तोत्रं, पृथिवीपति–सूरिविरचितं श्रीपशुपत्यष्टकं श्रीवेदव्यासप्रणीतं श्रीविश्वनाथाष्टकं च मनोहारीणि सन्ति।

## ब. शाक्तस्तोत्राणि

भगवत्यास्त्रिपुरसुन्दर्याः स्तुतिप्रणयने शाक्तकविभिरलौकिककाव्यप्रतिभा प्रदर्शिता। महर्षिदुर्वाससो रचना ललितास्तवरत्नमार्याद्विशतीतिनाम्नाप्यभिज्ञायते। ललिताम्बायास्त्रैलोक्यमधुरसौन्दर्यस्य वर्णनमेवैतस्य स्तोत्रस्य वैशिष्ट्यम्। अत्रार्यैका

दृष्टिपथमानेया –

शम्पारुचिभरगर्हा –सम्पादककान्तिकवचितदिगन्तम् ।
सिद्धान्तं निगमानां शुद्धान्तं किमपि शूलिनः कलये ।।

अस्यैव महिर्षकवेस्त्रिपुरसुन्दरीमहिम्नःस्तोत्रमपि श्लाघनीयम्। पञ्चस्तवीनाम्नी रचना लक्ष्मीधरमतेन कालिदासस्य कामेश्वरसूरिमतेन च श्रीमच्छङ्कराचार्यस्यास्ति। अत्र भगवत्याः पादपङ्कजस्यानवद्या शोभा दर्शनीया–

आनन्दमन्थर–पुरन्दरमुक्तमाल्यं मौली हठेन निहितं महिषासुरस्य।
पादाम्बुजं भवतु मे विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः ।।

महाकविकालिदासप्रणीतं श्यामलादण्डकमपि मनोहारि। गौडपादाचार्यस्य शिखरिणीछन्दःसन्दृब्धा सुभगोदयस्तुतिस्तान्त्रिकतथ्यानां विश्लेषणाय श्रीचक्रस्य सम्यविवरणाय चातीव प्रसिद्धा। आचार्यशङ्करपादा अपि त्रिपुरसुन्दर्या उपासका आसन्। एतेषां त्रिपुरसुन्दरी मानसिकोपचार–पूजा चतुःषष्टि–उपचारमानसपूजा च भगवत्या मानसपूजाया निर्धारणं कुरुतः। सौन्दर्यलहरी चान्यतमैव प्रतिभाति। कयाचिदपि दृष्ट्या विचारेणास्या अलौकिकत्वं पदे पदे स्फुटति। भगवत्या नेत्रप्रभायाः वर्णनं तावदास्वाद्यम्।

पवित्रीकर्तुं नः पशुपतिपराधीनहृदये
दयामित्रैर्नत्रैररुणधवलश्यामरुचिभिः।
नदः शोणो गङ्गा तपनतनयेतिध्रुवममुं
त्रयाणां तीर्थानामुपनयसि सम्भेदमनघम् ।।

शङ्कराचार्यविरचितेषु लघुशक्तिस्तोत्रेषु कनकधारास्तवः, ललितापञ्चकं, मीनाक्षीपञ्चरत्नं देव्यपराधक्षमापनस्तोत्रंमम्बाष्टकं भवान्यष्टकमानन्दलहरी चेति प्रमुखानि सन्ति। मूककवेः पञ्चशती पञ्चशतस्तुतीनां सङ्ग्रहोऽस्ति। ध्वन्यालोक–प्रणेतुरानन्दवर्द्धनस्य देवीशतकं कलापक्षप्रदर्शनस्य स्थलम्। तत्रत्यश्लोकोऽयं द्रष्टव्यः।

सरस्वति–प्रसादं मे स्थितिं चित्तसरस्वति।
सरस्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति ।

शक्तिविषयकान्यस्तोत्रेषु सामराजदीक्षितस्य त्रिपुरसुन्दरीमानसपूजास्तोत्रं, सुन्दराचार्यस्य गीतिशतकं, नीलकण्ठदीक्षितस्यानन्दसागरस्तवः, लक्ष्मणकवेश्चण्डी–कुचपञ्चाशिका, कृष्णपण्डितस्य महाराज्ञीस्तोत्रं, लल्लादीक्षितस्यानन्दमन्दिरस्तोत्रं च दर्शनीयानि।

## स. वैष्णवस्तोत्राणि

वैष्णवस्तोत्राणां तिस्रः धारा उपलभ्यन्ते काचिद्विष्णुसम्बद्धस्तोत्राणां काचिद्रामस्तोत्राणां काचिच्च श्रीकृष्णस्तोत्राणाम् धारात्रय एतस्मिन्नैकैः कविभिर्विरचितानि स्तोत्राणि राजन्तेतराम्। कानिचित्प्रमुखान्यत्र निर्दिश्यन्ते। कुलशेखरस्य मुकुन्दमाला श्रीवैष्णवसम्प्रदायगतस्तोत्रेषु विशिष्टा आकारदृष्ट्या लघ्वप्यतस्तात्र हृदयावर्जकम्। कविः सर्वत्र भगवच्चरणारविन्दं ध्यायन्नेवास्ते।

दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक प्रकामम्।
अवधीरित–शारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ।।

श्रीयामुनाचार्यविरचित– आलबन्दारस्तोत्रे प्रपत्तिभावस्य पराकाष्ठा दृश्यते। आराध्यस्य महत्त्वमात्मनश्च लघुत्वं प्रदर्शयता कविनोक्तम् –

तत्त्वेन यस्य महिमार्णवशीकराणुः शक्यो न मातुमपि शर्वपितामहाद्यैः।
कर्तुं तदीयमहिमस्तुतिमुद्यताय मह्यं नमोऽस्तु कवये निरपत्रपाय ।।

वेदान्तदेशिकेन नैकानि वैष्णवस्तोत्राणि प्रणीतानि। तेषु वरदराजपञ्चाशत्, हयग्रीवस्तोत्रमष्टभुजाष्टकमच्युतशतकं गरुडपञ्चाशत्, दयाशतकं गोदास्तुतिः पादुकासहस्रमित्यादीनि प्रमुखानि। श्रीकृष्णपादुकायाः स्तुतिं कुर्वन् कविरेवं कथयति –

मातरस्त्वदर्पितभरस्य मुकुन्दपादे भद्रेतराणि यदि नाम भवन्ति भूयः।
कीर्त्तिः प्रपन्नपरिरक्षण–दीक्षितायाः किं न त्रपेत तव काञ्चनपादरक्षे ।।

नारायणकविप्रणीतं नारायणीयं नामस्तोत्रं केरलप्रदेशे सर्वाधिकप्रसिद्धम्। वातरोगनिवारणार्थमेतस्य श्रीकृष्णस्तोत्रस्य प्रणयनं श्रीमद्भागवतीयकथामाश्रित्य स्कन्धक्रमणैव कृतम्। रासंमभिलषन्त्योऽपि काश्चन तत्र गन्तुमक्षमा गोपिका भगवद्ध्यानेनैव निर्वृतिमापुः।

काश्चिद् गृहात् किल निरेतुमपारयन्त्यस्त्वामेव देव हृदये सुदृढं विभाव्य।
देहं विधूय परचित्सुखरूपमेकं त्वामाविशन् परमिमा ननु धन्यधन्याः ।।

शैवदर्शनाचार्यस्य अप्पयदीक्षितस्य वरदराजस्तवो दार्शनिकविचारसंवलितत्वेन चेतो नितरामाकर्षति। सोमेश्वरस्य रामशतकनाम्नी स्रग्धराच्छन्दोविरचिता स्तुतिः प्रसादगुणोपेता। पद्यमेकं द्रष्टव्यम् –

पुण्यानां प्राक्तनानां फलमिति जनकेनान्तरात्मेति मात्रा
साक्षादक्षीयमाणप्रणयनिधिरिति मातृभिश्च त्रिभिर्यः ।
नीतिमूर्तीत्यमात्यैः परपुरुष इति ज्ञानिभिर्ज्ञायमानः
प्राप प्रौढिक्रमेण दृढयतु नितरां राघवः सः श्रियं वः[१] ।।

श्रीरामसम्बद्धस्तोत्ररचनायां श्रीरामदीक्षितोऽन्यतमः । तत्कृतस्तोत्रेषु रामचापस्तवो रामबाणस्तवो विश्वगर्भस्तवो (जानकीजानिनाम्ना ख्यातः) वर्णमालास्तोत्रं रामाष्ट-प्रासादीनि प्रमुखानि । सर्वत्र कवेः पाण्डित्यप्रकर्षो विलसति । शार्दूलविक्रीडित एव छन्दसि प्रायो रचना विहिता । यथा –

राकानाथ–निभाननं वसुमती–नोकाभिरामाकृतिं
पाकाराति–पुरः सरामरसदः शोकापनोदक्षमम् ।
कोकानन्दन–वंशज–व्रतपरी–पाकावकृष्टोदयं
केकावन्नवपिच्छनीलवपुषं लोकामहे चेतसि[२] ।।

अत्र प्रतियतिस्थितस्य 'का' इति द्वितीयवर्णस्य अष्टानुप्रासाः प्रयुक्ताः । रामाष्टप्रासस्य सकलानि षोडशोत्तरशततमानि पद्यान्येवमेवानुप्रासखचितानि । श्रीनिवाससाचार्यप्रणीतं जानकीचरणचामरनामस्तोत्रमालङ्कारिकप्रौढिमण्डितम् ।

बिल्वमङ्गलापरनामधेयस्य लीलाशुककवेः कृष्णकर्णामृतं नामस्तोत्रकाव्यं भक्तिरसपेशलं स्निग्धं कोमलकान्तपदावलीयुक्तं चास्ति । अत्र माधुर्यभक्तेः उज्ज्वलं निदर्शनं प्रस्तुतम् । काव्यमिदं स्वकीयविविधगुणमण्डितत्त्वेन श्रीकृष्णकाव्यानां मुकुटमणिरिव राजते । मुरलिकां सम्बोधयन् कविः कथयति–

अपि मुरलि मुकुन्दस्मेरवक्त्रारविन्दश्वसनमधुसंज्ञे त्वां प्रणम्याद्य याचे ।
अधरमणिसमीपं प्राप्तवत्यां भवत्यां कथय रहसि कर्णे मद्दशां नन्दसूनोः[३] ।।

श्रीकृष्णस्य मोक्षमार्गज्ञापकत्वं पुरोवर्तिनि पद्ये कविना श्लेषमुखेन साधु प्रतिष्ठितम् ।

अग्रे दीर्घतरोऽयमर्जुनतरुस्तस्याग्रतो वर्तनी
सा घोषं समुपैति तत्परिसरे तीरे कलिन्दात्मजा ।
तस्यास्तीरतमालकाननतले चक्रं गवां चारयन्
गोपः क्रीडसि दर्शयिष्यति सखे पन्थानमव्याहतम्[४] ।।

महाकविजयदेवप्रणीते गीतगोविन्दे राधाकृष्णयोः प्रेम्ण आध्यात्मिकं स्वरूपं सम्यगुपनिबद्धम्। राधाकृष्णसमागमो वस्तुतो जीवब्रह्मणोरेकभावः। साधनमार्गस्यानेकानि रहस्यान्यत्र काव्ये स्फुटतां व्रजन्ति। कोमलकान्तपदावल्याः सरसः प्रभावो मधुरभावानाञ्च मधुरः सन्निवेशोऽत्र दृश्यते। विरहिणीराधिकाया एका छटा दृष्टिपथं नेया।

वहति च वलित-- विलोचनजलभरमाननकमलमुदारम्।
विधुमिव विकटविधुन्तुददन्तदलन–गलितामृतधारम्[१] ।।

श्रीरूपगोस्वामि–विरचिते स्तवमालानाम्नि ग्रन्थे श्रीकृष्ण–राधावृन्दावन–यमुनादीनां वर्णनं स्तुतिपद्येषु विहितम्। अत्र विविधाष्टपदीनां शोभा दर्शनीयैव। भाषा शैली च रसस्निग्धा। गीतेष्वेतेषु कविना प्रणेतृरूपेण स्वकीयाग्रजस्य सनातनस्य नाम सन्निविष्टम्। अत्रत्यपद्येषु कविप्रतिभायाश्चरमोत्कर्षो विलसतिराम्। पद्यमेकं निदर्शनाय पर्याप्तिमेष्यति।

मरन्द–भर–मन्दिर–प्रतिनवारविन्दावली –
सुगन्धिनि विहारयोर्जलविहार–विस्फूर्जितैः।
तपे सरसि वल्लभे सलिल–वाद्य–विद्याविधौ
विदग्धभुजयोर्भजे व्रजनवीन–यूनोर्युगम्[२] ।।

मधुसूदनसरस्वतीसन्दृब्ध आनन्दमन्दाकिनीसञ्ज्ञके स्तोत्रे श्रीकृष्णस्तुतयो विहिताः। भक्तिरससिक्तास्वेतासु स्तुतिषु सर्वत्र माधुर्यं राजते। पण्डितराजजगन्नाथस्य कवित्वं संस्कृतजगत्सम्यग्जानाति। कविपुङ्गवेनैतेन कृष्णस्तुतिपराण्यनेकानि पद्यानि विरचितानि। एतेषु कवेर्भक्तिभावनायाः परिचयो लभ्यते। स्वकीयं चित्तमुपदिशन् पण्डितराजः कथयति–

रे चेतः कथयामि ते हितमिदं वृन्दावने चारयन्
वृन्दः कोऽपि गवां नवाम्बुदनिभो बन्धुर्न कार्यस्त्वया।
सौन्दर्यादभुतमुद्गिरद्भिरभितः सम्मोह्य मन्दस्मितै–
रेंष त्वां तव वल्लभांश्च विषयानाशु क्षयं नेष्यति[३] ।।

अनेन पद्येन पण्डितराजस्य भक्तिभावना स्फुटं प्रतीयते। एतत्प्रणीता षष्टिपद्यपरिमिता करुणालहरी करुणासागरमुद्वेजयति। एतस्याः पद्यमेकमास्वाद्यताम् –

अपि गर्तमुखे गतः शिशुः पथिकेनापि निर्वार्यते जवात्।
जनकेन पतन् भवार्णवे न निवार्यो भवता कथं विभो[४] ।।

अन्यान्यपि बहूनि वैष्णवस्तोत्राणि सन्ति। केषाञ्चिन्नामग्रहणेनैवात्रोल्लेखः क्रियते। श्रीकूरेशस्वामिनः श्रीनारायणाष्टकं, श्रीब्रह्मानन्दस्वामिनः श्रीकमलापत्यष्टकं परमेश्वरस्तुतिसारस्तोत्रञ्च, श्रीबुधकौशिकऋषेः श्रीरामरक्षास्तोत्रं श्रीअच्युतयतिकृतं श्रीसीतारामाष्टकं, श्रीवरवरमुनिस्वामिनः श्रीराममङ्गलाशासनं, श्रीयामुनाचार्यस्य श्रीरामप्रेमाष्टकं, श्रीअमरदासकवेः श्रीरामचन्द्राष्टकं, श्रीब्रह्मानन्दस्वामिनः श्रीदीनबन्ध्वष्टकं गोविन्दाष्टकमच्युताष्टकं श्रीकृष्णाटकं कृष्णाष्टकञ्च, श्रीबिल्वमङ्गलाचार्यस्य गोविन्ददामोदरस्तोत्रं , श्रीकृष्णलालद्विजस्य श्रीप्रपन्नगीतं श्रीकृष्णः शरणं मम च, श्रीमहाप्रभुवल्लभाचार्यस्य मधुराष्टकं श्रीनन्दकुमाराष्टकञ्च, श्रीविट्ठलेश्वरस्य चतुःश्लोकी चेति कानिचित्स्फुटवैष्णवस्तोत्राणि।

## द. प्रकीर्णस्तोत्राणि

प्रकीर्णस्तोत्रेषु मयूरभट्टस्य स्रग्धरावृत्ते निबद्धं सूर्यशतकं प्रौढं काव्यमस्ति। स्तोत्रमिदं कविना कुष्ठरोगनिवारणार्थं विरचितम् । काव्येऽस्मिन् कलापक्षस्य प्राधान्यं दृश्यते। महाकविबाणभट्टस्यापि स्रग्धराच्छन्दोविरचितमेव चण्डीशतकाभिधं काव्यं भगवत्या दुर्गायाः स्तुतिपरायणम्। पद्यमेकं द्रष्टव्यम् –

विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे
जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे।
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषापघ्ननिघ्नं
निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा भवानी[७]।।

श्रीशङ्कराचार्यसन्दृब्धपञ्चलहरीषु करुणालहरी भगवत्स्तवनपरायणा, गङ्गालहरी पीयूषलहरी वा गङ्गादेव्याः स्तुतिपरा, अमृतलहरी यमुनास्तुतिसंवलिता, लक्ष्मीलहरी लक्ष्मीस्तवपरा सुधालहरी च सूर्यस्तुतिपूरितास्ति। लक्ष्मीकृपाकटाक्षफलमेवं वर्णितम् –

समीपे सङ्गीत–स्वरमधुरभङ्गी मृगदृशां
विदूरे दानान्धद्विरदकलभोद्दामनिनदः।
बहिर्द्वारि तेषां भवति हयहेषाकलकलो
दृगेषां ते येषामुपरि कमले देवि सदया[८] ।।

आचार्यपादस्य भजगोविन्दमिति ललितं स्तोत्रं समेषां सचेतसां चेतांसि

बलादाकर्षति। अत्र माधुर्यस्यातिरेको दृश्यते। अन्येषु च प्रकीर्णस्तोत्रेषु स्वामिश्रीब्रह्मानन्दस्य श्रीहरिशरणाष्टकं, श्रीवेङ्कटनाथस्य न्यासदशकं, श्रीशिवप्रोक्तं सूर्याष्टकं, श्रीमदुमापति–शर्मद्विवेदिनो वीरविंशतिकाख्यं श्रीहनुमत्स्तोत्रं, महर्षिवाल्मीकिविरचितं गङ्गाष्टकं, श्रीरामानन्दस्वामिनः श्रीशिवरामाष्टकस्तोत्रं, श्रीचिन्तामणेगौरीशाष्टकं श्रीमच्छङ्कराचार्यस्य श्रीगङ्गाष्टकं श्रीगङ्गास्तोत्रं श्रीयमुनाष्टकं यमुनाष्टकं साधनपञ्चकं धन्याष्टकं कौपीनपञ्चकं स्तोत्रं परापूजा चर्पटपञ्जरिकास्तोत्रं द्वादशपञ्जरिकास्तोत्रं चेति प्रमुखानि सन्ति।

## च. जैनस्तोत्राणि

जैनकविभिः तीर्थङ्कराणां स्तुतौ भक्तिरसस्निग्धानि स्तोत्राणि विरचितानि। वस्तुतो जैनानां धर्मभाषा प्राकृतमेवासीत्। प्रथमतः संस्कृते रचनायाः समारम्भ आचार्यसमन्तभद्रेण द्वितीयशताब्द्यां विहितः। तेन स्वयम्भूस्तोत्रं देवागमस्तोत्रं युक्त्यनुशासनं जिनशतकञ्चेति चत्वारि स्तोत्राणि प्रणीतानि। स्तोत्राणां भाषा सरला बोधगम्या चास्ति। तत्र यथास्थानं दार्शनिकतत्त्वानामपि सन्निवेशः कृतः। स्वयम्भूस्तोत्रे चतुर्विंशतितीर्थङ्कराणां स्तुतिर्विहिता। देवागमस्तोत्रस्य प्रसिद्धं नाम 'आप्तमीमांसा' अस्ति। अत्रत्यं व्याख्याद्वयं स्तुतिस्थान् दार्शनिकभावान् विशदीकुरुते। युक्त्यनुशासने चतुषष्टिपरिमितेष्वेव पद्येषु निखिलं जिनशासनं निबद्धम्। अर्थगौरवदृष्ट्यापि स्तोत्रमिदं हृदयावर्जकम्। जिनशतके चित्रालङ्कारस्य प्रचुरः प्रयोगो दृश्यते। स्तोत्रमिदं स्तुतिविद्येति नाम्नापि ज्ञायते। तीर्थङ्करप्रणीतस्य धर्मतीर्थस्य महत्त्वं प्रतिपादयन् कविरेवं वक्ति –

येन प्रणीतं पृथुधर्मतीर्थं ज्येष्ठं जनाः प्राप्य जयन्ति दुःखम्।
गाङ्गं ह्रदं चन्दनपङ्कशीतं गजप्रवेका इव धर्मतप्ताः" ।।

दार्शनिकभावपूर्णमिदमपि पद्यमास्वाद्यताम् –

एकान्तदृष्टि–प्रतिषेधसिद्धिन्यायेषुभिर्मोहरिपुं निरस्य।
अस्मि स्म कैवल्यविभूतिसम्राट् ततस्त्वमर्हन् असि मे स्तवार्हः" ।।

समन्तभद्रप्रवर्तिता स्तोत्रधारा अग्रेऽपि प्रावर्तत। समन्तभद्राच्छताब्दित्रयानन्तरं सिद्धसेनादिवाकरसन्दृब्धस्तोत्राणि द्वात्रिंशिकेति नाम्नि ग्रन्थे सङ्गृहीतानि। अत्र द्वात्रिंशत्संख्याकानां रचनानामुल्लेखो विधीयते। प्रतिरचनं च द्वात्रिंशदेव पद्यानि निबद्धानि।

एतासु साम्प्रतमेकविंशतिरेवोपलभ्यते। स्तोत्राणीमानि साहित्यिकसौन्दर्यसंवलिताध्यात्मिकगाम्भीर्यमण्डितानि। अत्रत्या भाषा प्रौढा परिमार्जिता च। प्रवादिनस्तीर्थङ्करान्यक्कर्त्तुं नैव क्षमन्ते इति प्रतिपादयन् कविः कथयति–

समृद्धपक्षा अपि सच्छिखण्डिनो यथा न गच्छन्ति गतं गरुत्मतः।
सुनिश्चितज्ञयविनिश्चयास्तथा न ते गतं यातुमलं प्रवादिनः ।।

देवनन्दिपूज्यपादेन सिद्धभक्तिश्रुतभक्ति–चरित्रभक्ति–योगभक्त्यादीनि द्वादशस्तोत्राणि प्रणीतानि। पात्रकेसरिणो नाम्ना कविनाऽपि तस्मिन्नेव काले जिनेन्द्रगुणसंस्तुतिरिति स्तोत्रं निरमायि। स्तोत्रमिदं 'जिनेन्द्र! गुणसंस्तुतिस्तव मनागपि प्रस्तुता' इत्यनेन वाक्येन समारभते। मानतुङ्गाचार्यो जैनो भक्तकविर्भक्तामरस्तोत्रं चकार, यत्खलु श्वेताम्बर–दिगम्बरोभयसम्प्रदायानुगतं मान्यं च स्तोत्रकाव्यमस्ति। अस्मिन् स्तोत्रे अष्टचत्वारिंशत्पद्यानि समुपनिबद्धानि यानि खलु समेषां सचेतसां मनांस्याहरन्ति। नैसर्गिकमेकं वर्णनमवलोक्यताम्–

अल्पश्रुतं श्रुतवतां परिहासधाम त्वद्भक्तिरेव मुखरीकुरुते बलान्माम्।
यत्कोकिलः किल मधौ मधुरं विरौति तच्चारुचूतकलिकानिकरैकहेतुः ।।

स्तोत्रेणानेन कुमुदचन्द्रकविना प्रणीतं कल्याणमन्दिरस्तोत्रं पूर्णतः प्रभावितम्। अस्य पद्यानि नैसर्गिकानि प्रसादगुणोपेतानि च सन्ति। कविर्जिनं स्तुवन् स्वकीयभावानेवं प्रकटमति–

आस्तामचिन्त्यमहिमा जिन संस्तवस्ते नामापि पाति भवतो भवतो जगन्ति।
तीव्रातपोपहतपान्थजनान् निदाघे प्रीणाति पद्मसरसः सरसोऽनिलोऽपि ।।

अन्येषु जैनस्तोत्रेषु धनञ्जयस्य विषापहारस्तोत्रं, वादिराजस्य एकीभावस्तोत्रं कल्याणकल्पयुगस्तोत्रं वा, जम्बूकवेर्जिनशतकं चेति प्रामुख्यं भजन्ति। श्रीहेमचन्द्राचार्येण अन्ययोगव्यवच्छेदिका द्वात्रिंशिका–अयोगव्यच्छेदिका द्वात्रिंशिका चेति दार्शनिकस्तोत्रद्वयं प्राणायि। उभयमपि द्वात्रिंशत्पद्यपरिमितम्। प्रथममधिकृत्य मल्लिषेणसूरिणा स्याद्वादमञ्जरी नाम्नी टीका विरचिता यया स्तोत्रस्य दार्शनिकत्वं स्वयमेव प्रतीयते।

## छ. बौद्धस्तोत्राणि

बौद्धानां महायानसम्प्रदाये बहूनि स्तोत्राण्ययुपलभ्यन्ते। तत्र भक्तेः प्राधान्यं दृश्यते। महायानिनः खलु बुद्धस्य भक्तिपूर्वकं कृतया सेवया निर्वाणावाप्तिं स्वीकुर्वते। शून्यवादस्य प्रतिष्ठापकाचार्येण नागार्जुनेन चत्वारि भक्तिभावसंवलितस्तोत्राणि विरचितानि येषां सङ्कलनं चतुः स्तवनाम्नि ग्रन्थे कृतम्। ग्रन्थेऽस्मिन् सङ्कलितं स्तोत्रद्वयं मूलसंस्कृत एवोपलब्धमपरद्वयस्य च केवलं तिब्बतीभाषायामनुवाद एव लभ्यते। मूलसंस्कृतस्तोत्रयोर्नाम निरौपम्यस्तवः अचिन्त्यस्तवश्चेति। अत्र नागार्जुनेन आस्तिकवादस्य प्रतिष्ठा कृता। अत्रत्यं श्लोकद्वयं द्रष्टव्यम् –

नामयो नाशुचिः काये क्षुत्तृष्णा सम्भवो न च।
तव या लोकानुवृत्त्यर्थं दर्शिता लौकिकी क्रिया।।
नित्यो ध्रुवः शिवः कायस्तव धर्ममयो जिन।
विनेयजनहेतोश्च दर्शिता निर्वृतिस्त्वया"।।

सर्वज्ञमित्रस्य स्रग्धरास्तोत्रं तारादेव्याः स्तुत्यर्थं विरचितं, या खलु महायान–सम्प्रदाये मातृदेवीरूपेण रक्षादेवीरूपेण च प्रतिष्ठिताऽस्ति। एवं बौद्धस्तोत्रसाहित्यमपि नेवाल्पम्।

## ज. आधुनिकस्तोत्राणि

अद्यापि न विश्रान्ता सेयं स्तोत्ररचनामनोभूमिः साम्प्रतिकानामपि कवीनां, या खलु ऋग्वेदादेव निर्गता सती प्रकर्षमाप्तवती। आधुनिकसंस्कृतकविषु सन्ति बहवः सहृदया यैर्हृदयावर्जकानि स्तोत्राणि प्रणीतानि। वस्तुतः स्तुतिः संस्कृतकाव्यस्य प्राणतत्त्वं यदाश्रयेणैव कविः स्वकीयं काव्यं पूर्त्तिं नयति। ग्रन्थारम्भे विरचितं मङ्गलाचरणमेव स्तुतिरथ च स्तोत्रम्। अतो न कोऽपि कविः स्तुतिविहीनः कथयितुं शक्यते। प्रायः कविप्रवृत्तिरेव स्तुतिपरा।

आधुनिककविषु श्रीवेङ्कटरामराघवेन प्रणीतं श्रीकामाक्षी–मातृकास्तवः श्रीमीनाक्षी–सुप्रभातं चेति स्तोत्रद्वयं सुप्रसिद्धम्। स्वर्गीयजानकीवल्लभशास्त्रिणो भारती वसन्तगीतिः कस्य चेतो नावर्जयति। श्रीधरभास्करवर्णेकरस्य शिवराजस्तवनं प्रसिद्धम्। स्वर्गीयपण्डित–आनन्दझा–महाभागेन प्रणीतानि स्तुतिदण्डकानि श्लाघ्यान्येव। ज्ञानोपाह्–वेनावस्थिना बच्चूलालेन मातृस्तुतिर्विरचय्य स्तवनिकुरम्बे किञ्चिन्नावीन्यमुपकल्पितम्। अभिराजोपाह्वस्य डॉ. राजेन्द्रमिश्रस्य सुरभारतीदण्डकं स्तोत्रसाहित्यस्य मण्डनम्। डॉ. राधावल्लभत्रिपाठिमाभागेनापि नूतनविषयान् भावांश्चाङ्गीकृत्य विधायामेतस्यां नैके प्रयोगा विहिताः। आचार्यश्रीनिवासरथेन बलदेवचरितमहाकाव्यस्य प्रारम्भे प्रणीतानि हनुमत्स्तुति–

रूपपद्यानि नितरामावर्जकानि। विनय इत्युपनामधारिणा मिश्रोपाह्वेन डॉ. विन्ध्येश्वरीप्रसादेन भक्तिभावपूरितेन चेतसा रचितानि सङ्कीर्तनसुधाषोडशी– उज्जयिनीनुतिर्वामनस्तवोमहाकालदण्डकादीनि स्तोत्रसाहित्यस्य भास्वरनक्षत्राणि। अन्यस्तोत्रप्रणेतृकविषु पण्डिरामकुबेरमालवीयः पण्डितबटुकनाथशास्त्री खिस्ते –पण्डितरतिनाथझा – डॉ. रेवाप्रसादद्विवेदी – शिवदत्तशर्माचतुर्वेदी शिवजीउपाध्याय – कैलाशपतित्रिपाठी – मनुदेवभट्टाचार्यः – रमाकान्तशुक्लः – इच्छारामद्विवेदः – रहसबिहारीद्विवेदी-भास्कराचार्यत्रिपाठी – सुधाकराचार्यत्रिपाठी इत्येते प्रमुखा विद्यन्ते।

यदि साम्प्रतिकाः केचिदाचक्षीरन् यन्नास्त्यधुना स्तोत्रकाव्यस्य काचन प्रासङ्गिकता। तद्वार्तम्। स्तोत्रमेव वास्तविकी सार्वकालिकी च काव्यधारेति वयं स्वीकुर्मः। यदा पुनरादिमं वैदिकं साहित्यमेव स्तुत्यात्मकं येन मानवस्यादिमा प्रवृत्तिर्ज्ञायते, तदा मानवप्राणभूतस्यास्य स्तोत्रसाहित्यस्य महत्त्वं कदाप्यपलापितुं नैव शक्यते। यन्निभृततमहृत्प्रान्तेऽशान्ते समुद्भ्रान्ते च कविरेकान्ततया यदाविष्करोति स्वत्वं तत्स्तोत्रैणैवाधिगन्तुं शक्यत इति निर्विवादम्।

सन्दर्भाः


१. स्तवः स्तोत्रं स्तुतिर्नुतिः। अमरकोश – १.६.११
२. तैत्तिरीयसंहिता – २.१.१
३. इदं वाक्यं हि वायूद्देशयकं ...प्राशस्त्यबोधनेन विध्यर्थं स्तौति। मीमांसासूत्रभाष्यम् – १.२.७
४क. साक्षाद् विध्यर्थस्य प्रशंसार्थकं वाक्यं स्तुतिः। न्यायसूत्रवृत्तिः।
ख. गुणकथनपरमेकं वाक्यं स्तुतिः। जैमिनीयन्यायमालाविस्तरः १.२.३.
५. वाक्यपदीयम् – २.२४.७
६. मत्स्यपुराणम् – अध्याय १२३।
७. पुष्पदन्तः शिवमहिम्नःस्तोत्रम् – ३३.
८. काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥
मम्मटभट्टः, काव्यप्रकाश – १.२।
९. शङ्कराचार्यः –षट्पदी ३।
१०. अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्॥ ऋग्वेद– १.१.१
११. ऋग्वेदः १.८९.२
१२. शुक्लयजुर्वेदः ३१.२०
१३. सामवेदः १.१.८
१४. अथर्ववेदः ६.२०.३
१५. ईशावास्योपनिषद् १५.१६–१८ प्रश्नोपनिषद् २.१२–१३

५२. पञ्चस्तवी, घट्रस्तव:, १।
५३. सौन्दर्यलहरी – ४५।
५४. देवीशतकम्– ५०।
५५. मुकुन्दमाला– २०।
५६. आलवन्दारस्तोत्राम्–५।
५७. पादुकासहस्रम् - ६५८।
५८. नारायणीयम्- ६५.७।
५९. रामशतकम्– ६।
६०. रामाष्टप्रास: – ८
६१. कृष्णकर्णामृतम्– २०।
६२. तत्रैव – ३०।
६३. गीतगोविन्दम्, ५.११।
६४. स्तवमाला– २१।
६५. भामिनीविलास: – ४.१६।
६६. करुणालहरी– २८।
६७. चण्डीशलम्– ८
६८. लक्ष्मीलहरी– २०
६९. जिनशतकम्– २७
७०. तत्रैव – ४०
७१. द्वात्रिंशिका– ३.१२
७२. भक्तामरस्तोत्रम् –४२
७३. कल्याणमन्दिरस्तोत्रम्– ३८।
७४. अचिन्त्यस्तव – ६–७।



# उत्तमाव्रजितायै (३४.११) इति कौशिकसूत्रविषये किञ्चित्

निर्मला कुलकर्णी

१.०.० **उपोद्‌घातः** – कौशिकसूत्रस्य[1] (कौसू.) स्त्रीकर्माणी[2]ति विभागे स्त्रीणाम् अनपत्यत्वहरणाय कानिचित् कर्माणि आदिष्टानि। पुत्रकामावतोकाशान्तिः, मृतापत्याशान्तिः, वन्ध्याप्रजननकर्म इत्यादीनीमानि कर्माणि विवेचितानि कतिपयैः सूत्रैः। मृतापत्यविषयके सूत्रसमूहे 'उत्तमाव्रजितायै' इत्येकं सूत्रं कौशिकसूत्रस्य भाष्यकारैः विभिन्नतया पठितम्। अत्र को वा पाठः युक्तिमान् इत्येव अस्य शोधपत्रस्य विषयः। प्रथमं तावद् विषयसौकर्यार्थं मृतापत्याशान्ति– विधिम् विवृणोमि।

१.० **मृतापत्याशान्तिविधिः** – कौसूगतानि (३४.३–११) इति सूत्राणि मृतापत्यायाः स्त्रियः शान्तिं विदधति। अयं सूत्रसमूहः द्वे कर्मणि आदिशति।

११ **प्रथमः कर्मविधिः** – पुरोहितः त्रीन् प्राङ्मुखान् मण्डपान् निर्माति। 'निःसालाम्' (अथर्व. शौ. २.९४)[3,4] इति सूक्तं जपन् स्त्रीं कृष्णं वस्त्रं परिधापयति। जलपूर्णे कुम्भे हुतशेषान् संपातयति। पलाशनिर्मिते पर्यङ्के सीसं प्रतिष्ठाप्य तदुपरि स्त्रीम् अधिष्ठापयति। उदपात्रेण च आप्लावयति। कृष्णं वस्त्रं तस्मिन्नेव मण्डपे निधाय मण्डपम् अग्निा ज्वालयति एवमेव द्वितीये तृतीये च मण्डपे विधाय ततोत्तरं तां श्वेतवस्त्रं परिधाप्य शिंशपाशाखासु उपवेश्य 'निःसालाम्' इत्यनेन सूक्तेन शान्तोषधिभिः ताम् सिञ्चति। ततः गृहं प्रत्यागतायै 'निः सालाम्' इति सूक्तेन पुरोडाशप्रमन्दालङ्कारान् तस्यै प्रयच्छति इति।

११.२ **द्वितीयः कर्मविधिः**–उपर्युक्तं विधिं विकल्पयति कौशिकः। पुरोहितः एकं मण्डपं निर्माति। तस्य प्राक्पश्चिमे च द्वारे इषिकान् नाम तृणमध्यगतानि काण्ठनि

बद्ध्वा 'निःसालाम्' इति सूक्तेन स्त्रियः मस्तके औदुम्बरीः समिधः आधत्ते। ततः पुनः 'निःसालाम्' इतिं सूक्तं जपन् शान्तोषधिभिः अभिमन्त्र्यावसिञ्चति। यदा सा गृहं प्रविशेत् तदा 'निःसालाम्' इति सूक्तेन तस्यै पुरोडाशं, प्रमन्दं नाम कन्दुकं तथा च अलङ्कारान् प्रयच्छति।

१.२.० **पाठभेदाः** – अस्मिन् कर्मद्वये इदं तावत् साधारण यत् सर्वोऽपि विधिः गृहाद् बहिरेव कर्तव्यः, एकमेव कर्म पुरोडाशादिप्रदानमेव गृहे कार्यम्। इदं समानं सर्वेष्वपि शान्तिकर्मसु। यदा यदा तस्याः गृहागमनप्रसङ्गः तदा सूत्रं वर्तते 'आव्रजितायै' इति। पश्यन्तु भवन्तः – पुत्रकामावतोकाविषयके शान्तिसूत्रसमूहे 'आव्रजितायै पुरोडाशप्रमन्दालङ्कारान् संपातवतः प्रयच्छति'' इत्यन्तिमं सूत्रम्। वन्ध्याप्रजननकर्मविषयके सूत्रसमूहे 'आव्रजितायै'' इत्यन्तिमं सूत्रम्। मृतापत्या–विषयके द्वितीयकर्मविवरणान्तेऽपि 'आव्रजितायै'' इत्येव सूत्रभागः। केवलं तत्पूर्वं यः शब्दः स एव मतभेदविषयः। 'उत्तमाव्रजितायै' उत वा 'उक्तमाव्रजितायै' इति। अस्मिन् सूत्रविषये भाष्यकाराभिप्रायान् प्रथमं निर्दिश्य ततः युक्तायुक्तता विचार्यते।

२.१ **दारिलाभिप्रायः** – दारिलभाष्यस्य टि४विसंस्करणे प्रकाशकैः ग्रन्थस्य अद्वितीया पांण्डुलिप्यपि छायाचित्रिता ऑफ्सेटपद्धत्या तत्रैव। तत्रस्थं सूत्रं पठयते – 'उतमा' इति उत्तमाव्रजितायै इति। तथापि इदमेव सूत्रं दारिलः विवृणोति – ''पुरोडाशप्रमन्दालङ्कारान् संपातवतः प्रयच्छति इत्येतदत्र भवति। उक्तग्रहण–मनर्थकम्। अवयवग्रहणादेव सिद्धत्वात्।''

अत्र प्रायः अयमभिप्रायः दारिलस्य – अस्य सूत्रस्य 'उक्तं' च 'आव्रजितायै' इति च अवयवद्वयम्। तथापि अत्र 'आव्रजितायै' इति शब्देनेव अलम्। 'उक्तं' इति शब्दस्य सूत्रे आवश्यकतैव नास्ति। कुतः ? 'आव्रजितायै' इति विषयको विधिः पूर्वमेव 'आव्रजितायै पुरोडाशा– प्रमन्दालङ्कारान् संपातवतः प्रयच्छति।' इति सूत्रे स्पष्टीकृतः एव। तदनन्तरं यदा पुनः विधिप्रसङ्ग तदा पुनरपि 'आव्रजितायै' इत्येव सूत्रावयवः निर्दिष्टः। अत्र सूत्रस्य मुख्योऽवयव एव गृहीतः नं तु सम्पूर्ण सूक्तम्। एवमेव अत्रापि योग्यम्। 'उक्तम् आव्रजितायै' इति सूत्रे उक्तशब्दः अनावश्यकः। 'आव्रजितायै' इत्येव शब्दः सूत्रप्रकरणप्रकाशः, इति प्रायः अभिप्रायः दारिलस्य। दारिलभट्टस्येदं वचनं ग्राह्यमुत अग्राह्यम् इदमत्र न खलु प्रसङ्गोचितम्। तस्येदं वचनं ननु तस्य पुरतः यः कौसूपाठः आसीत्तमेव प्रकाशयति। अत्र खलु दारिलः उक्तशब्दस्येव अनावश्यकतां प्रतिपादयति न

खलु 'उत्तमा' शब्दस्य। अतः दारिलभट्टः इदं सूत्रं 'उक्तमाव्रजितायै' इत्येवमेव जानाति न तु 'उत्तमाव्रजितायै' इति विनिगमयितुं शक्यते।

प्राचीन्यां लेखनसरण्यां 'क्तत्तयोः' स्वल्पमेव भेदः। केवलम् अक्षरगतदण्डचिह्नस्य दक्षिणोऽवयवोऽधिकः 'क्त' इत्यक्षरे। अतः केनचित् लिपिकारेण 'क्त' इत्यस्य स्थाने 'त्त' इति लिखितमत्र किमाश्चर्यम्? तथापि उपर्युक्त निःसन्दिग्धं दारिलवचनमवलम्ब्यैव प्रायः प्रकाशकैः 'उक्तम्' इत्येव पाठः स्वीकृतः, न तु 'उत्तमा' इति।

११.२.२ **केशवाभिप्रायः** – एषा कथा तावद् दारिलभाष्यस्थितपाठभेदयो। इदं खलु दृष्टं भवद्भिः यद् भाष्यकारः दारिलः सूत्रगतान् शब्दान् सूत्रकृताभिप्रेतं विधिं च विशदीकरोति। कौशिकसूत्रस्यापरो व्याख्याता केशवः। स तु पद्धतिकृत्, अतः सूत्रगतान् शब्दान् गौणतया विवृणोति, विधिं च प्रधानतया। यया दारिलः सूत्रस्थितान् शब्दान् उद्धृत्य व्याख्याति न तथा केशवः। कौशिकपद्धतेः सर्वाः अपि उपलब्धाः पाण्डुलिपयः 'उत्तमाव्रजितायै' इत्येव पाठं स्वीकुर्वन्ति। अतः प्रायः यैः दारिलभाष्ये 'उक्तम् आव्रजितायै' इति पाठः सम्यक् विविक्तः तैरेव सम्पादकैः लिमये–दाण्डेकरप्रभृतिभिः कौशिकपद्धतिसंस्करणे तावत् 'उत्तमा–व्रजितायै' इति पाठः स्वीकृतः।

'उत्तमाऽव्रजितायै' इत्यस्य पाठस्य को वाऽभिप्रायः भवितुम् अर्हति? 'उत्तमा' इति स्त्रीलिङ्गेनान्वितं विशेषणम् अस्मिन् प्रकरणे प्रायः अथर्ववेद–स्थितायाः कस्याश्चित् ऋचः भवेत्। 'उत्तमा' नाम प्रथमा ऋक् गृहं प्रत्यागतायै विनियोक्तव्या इति। इयं प्रथमा ऋक् कस्य वा सूक्तस्य? उक्तमेव यत् कर्मविधिविवरणे द्वावपि भाष्यकारौ मृतापत्याशान्तिविषयके विधौ 'निःसालाम्' इत्येव सूक्तं विनियुञ्जाते। अतः तस्यैव सूक्तस्य उत्तमा ऋक् अस्मिन् विधौ प्रयोक्तव्या इत्येव 'उत्तमाव्रजितायै' इति सूत्रस्य अभिप्रायो भवितुमर्हति।

अपरं च, 'उत्तमा' इति कस्याश्चित् ऋचः पारिभाषिकं नामाभिधानमपि स्यात्। तथापि, अद्ययावत् न मया तत् कुत्रापि प्रयुक्तं दृष्टम्। भवतु।

यद्यपि केशवः 'उत्तमा' इति शब्दं स्वीकुर्वन् कस्याश्चित् एकस्या एव ऋचः प्रयोगम् अभिप्रैति इति दृश्यते, तथापि अस्यैव सूत्रस्य व्याख्यानावसरे तावत् सम्पूर्णस्यैव सूक्तस्य प्रयोगः अभिप्रेतः न केवलं केशवेन, अपि तु

सायणाचार्यैरपि। पश्यन्तु तेषां साक्षाद्वचनानि।

"ततो 'निःसालाम्' इति सूक्तेन उदकान्ते शान्तौषधीं सहोदकम् अभिमन्त्र्या- वसिञ्चति। ततो गृहेऽभ्यातानान्तं कृत्वा 'निःसालाम्' इति सूक्तेन पुरोडाश- प्रमन्दालङ्कारान् सम्पातवतः प्रयच्छति।" केशवः सायणोऽपि 'निःसालाम्' इति सूक्तस्य व्याख्यानावसरे ब्रवीति। "निः सालाम् इति सूक्तेन मृतापत्यायाः स्त्रियः अपत्यनाशपरिहाराय त्रिषु मण्डपेषु एकैकस्मिन् उदपाने सीसेषु च संपातानयनम्। सीसोपरि स्थितायास्तस्याः संपातितोदकेन आप्लावनं च कृत्वा स्वगृहमानीय शान्त्युदकेन अभिषिच्य तस्यै पुरोडाश- कन्दुक-अलङ्कारान् अभिमन्त्र्य दद्यात्।"... इति।

अपरं च अस्यैव अध्यायस्य नवमं सूत्रं वर्तते 'शाखासूक्तेमिति। अत्र केशवः - ततः द्वितीयमण्डपे एवं कृत्वा श्वेतवस्त्रं परिधानं कृत्वा शिंशपाशाखासू- पवेश्य स्त्रीं 'निःसालाम्' इति। सूक्तेन शान्तौषधिभिः तदुदकमभिमन्त्र्यावसिञ्चति। स्नपनं करोति। ततो गृह आगत्य आज्यतन्त्रं कृत्वा 'निःसालाम्' इति सूक्तेन पुरोडाशप्रमन्दालङ्कारान् संपातवतः प्रयच्छति। तत उत्तरतन्त्रम्। त्रिमण्ड- पाधेकं कर्म।

दारिलस्तु 'शाखासूक्तम्' इत्यत्र वदति - अस्य शिंशपाशाखासूदकान्ते इत्येतत्कर्म भवति। इति। किन्तु अत्र 'आव्रजितायै' इत्यत्र सम्पूर्णः सूत्रप्रयोगः इष्टः तस्य न वा इति सन्देहास्पदमेव। परन्तु तेनैव 'उक्तम्' आव्रजितायै' इति स्पष्टतया उक्तत्वात् 'उत्तमायाः ऋचः चर्चा न युक्ता अत्र।

१.२.३ **सायणाभिप्रायः** - सायणाचार्याः स्वीये अथर्ववेदीये भाष्ये विनियोगपुष्ट्यर्थं कौसूत्रम् समुद्धरन्ति। 'निःसालाम्' इत्यस्य सूत्रस्य विनियोगं विशदीकुर्वाणाः ते वदन्ति - सूत्रितं हि - 'निःसालाम्;' इत्यव्रतोकायै कृष्णवसनायै त्रिषु विमितेषु ' इत्यादि औदुम्बरीराधापयति" उक्तमाव्रजितायै" (कौ.सू. ३४.३-९९) इत्यन्तम्।"

१.३.० **निष्कर्षः** - एवम् 'उत्तमाव्रजितायै' 'उक्तमाव्रजितायै' इति विकल्पावसरे 'उक्तम्' आव्रजितायै इत्येव पाठः समीचीनः इति निगमनं भवितुमर्हति। कुत इति चेत् -

(१) यतः दारिलः सूत्रगतान् शब्दान् विमृशन् 'उक्तम् आव्रजितायै' इत्येव कौसूत्रं इति संसूचयति।

(२) केशवोऽपि यद्यपि 'उत्तमाव्रजितायै' इति पठति तथापि स न कामपि उत्तमाम् ऋक् पुरस्करोति। 'उक्त म्' इत्येव अनुसृत्य तस्याभिप्रायः।

(३) सायणोऽपि उक्तम् आव्रजितायै' इति एव स्पष्टतया समुद्धरति।

अत एव 'उक्तम् आव्रजितायै' इत्येव मूलं कौसूत्रम्। 'क्त' इत्यक्षरस्य दक्षिणो भागः नाङ्कितः केनचित् लिपिकारेण। अत एव 'त्त' इत्यक्षरम् 'उत्तमाव्रजितायै' इति पाठम् अजनयत्। तथापि उपर्युक्तान् भाष्यकाराणाम् अभिप्रायान् सम्यक् विमृश्य 'उक्तमाव्रजितायै' इति पाठः, निर्णेतुं शक्यते। कौशिकसूत्रस्य सम्पादने दारिलभाष्यं सायणभाष्यं इतिं भाष्यद्वयम् नितरां सहाय्यकृत्। इति दिक्।

## संदर्भाः


1. **Bloomfield, M, 1889 (1972) "The Kauśikasūtra of the Atharvaveda" M. Banarsidass.**
२. स्त्रीपु कर्माणि स्त्रीकर्माणीति दारिलः। कौशिकसूत्रास्य चतुर्थेऽध्याये ३२.२८ तः ३६.४० पर्यन्तानि सूत्राणि स्त्रीकर्माणीति आख्यायन्ते।
३. निःसालां धृष्णुं धिषणं मे कवाद्यां जिघत्सवम्।
सर्वाश्चण्डस्य नत्यौ नाशयामः सदान्वाः।१।।
४. सं. विश्ववन्धुः (१९६०–१९६४) अथर्ववेद–सायणभाष्यम्, वि.भा ग्रन्थमाला १३–१७, होशियारपुर.
५. कौसू. ३२.२९.
६. कौसू. ३४.२
७. कौसू. ३४.११
८. (संपा) दिवेकर, ह.रा., लिमये प्रभृति, (१९७२). ''कौशिकसूत्रदारिलभाष्यम्'' तिलक महाराष्ट्र विद्यापीठम्.
९. ''पदार्थपूर्वो यदुक्तो नैमित्तिकानां विधिः।
तस्मात्पदविभागोऽत्र प्रथमं प्रतिरच्यते।। दारिलभाष्यम्, उपोद्घातः।
१०. (संपा.) लिमये, दाण्डेकर (१९८२) केशवविरचिता कौशिकपद्धतिः, तिमवि, पुणे.
११. उपर्युक्तम्।




# साम्प्रतिकसंस्कृतकाव्यसृष्टौ आधुनिकतायाः सन्दर्भः

हर्षदेवो माधवः

'आधुनिकता' इति शब्दः 'अधुना' इत्यस्मात् शब्दान् निष्पन्नः। 'अधुना' इत्यस्यात् शब्दात् 'आधुनिकम्' 'आधुनिकता', 'आधुनिकतावादः', अपि च 'आधुनिकीकरणम्' इत्येते शब्दा निष्पन्नाः। अधुनायाः शब्दार्थः 'साम्प्रतम्' 'इदानीम्' 'अद्यतनम्' इति भवति। अस्मिन्नेवार्थे 'अर्वाचीनम्' 'अद्यतनम्' इत्यादिकाः शब्दाः प्रयुज्यन्ते।

आंग्लभाषायां 'Modern' शब्दः 'आधुनिकस्य' कृते प्रयुज्यते। 'Modern' इत्यस्मात् शब्दात् Modernity, Modernism, Modernization इत्यादिकाःशब्दा जाताः। वयमपि 'Modern' इत्यर्थे 'आधुनिकम्' इति शब्दं स्वीकुर्मः।'

## 'साम्प्रतम्' अर्वाचीनम्, आधुनिकञ्च

यान्त्रिकीकरण–नगरीकरण–विश्वयुद्धद्वय–अणुबॉम्बकृतनरसंहारादि कारणैः मनुष्यनियतिविषयकाः प्रश्ना उत्थिताः। किमिदं सर्वम् ईश्वरः करोति कारयति वा? किं निर्दोषजनसंहारस्य कृते निष्कारुण्यमस्ति भगवतः? ये अणुबॉम्बस्फोटेन मृतास्ते सर्वे पापात्मानः सन्ति? इत्यादिकानां प्रश्नानां समाधानं न जातं पारम्परिक–सामाजिक–धार्मिकमूल्यैः। मानवास्तित्वस्य मार्गणं मनुष्यस्य स्वस्योत्तरदायित्वं जातम्। अस्मात् संघर्षाद् 'आधुनिकचेतनायाः' प्रादुर्भवो जातः।

पाश्चात्यसाहित्ये यांत्रिकीकरण–नगरीकरण–विश्वयुद्धकृतनरसंहार–जातनैराश्यात् प्रसूता विशिष्टा सर्जकचेतना अर्थात् 'आधुनिकता' इति व्याख्या प्रवर्तत आधुनिकतायाः।'

'इरविंग होवे' (Irving Howe) महो[illegible] 'समकालीनम्' ('साम्प्रतम्') च 'आधुनिकता' च इत्येतयोः शब्दयोर्मध्ये भेदरेखा[illegible]थं वर्णयति –

"Where the contemporary refers to time, the modern refers to sensibility and style, and where the contemporary is a term of natural reference, the modern is a term of critical placement and judgement."[3]

## साहित्ये आधुनिकतायाः प्रारम्भः

'वुल्फ वर्जिनिया' कथयति यत् 'on or about Dec. 1910 human nature changed.'[4]

डी. एच्. लोरेन्सो मन्यते यद् इसवीयें पञ्चदशाधिक–एकोनविंशतिशततमे (१९१५) संवत्सरे प्राचीनविश्वम् अस्तं गतम्। रिचर्ड एलमान–चार्ल्स फाइदलनौ मन्येते यद् आधुनिकसाहित्यस्यं प्रारम्भ एकोनविंशति–शततम ईसवीये संवत्सरे जातः। सिरिलकोनोली आधुनिकतावादस्य प्रारंभ अशीत्यधिक–अष्टादशशततमे संवत्सरे मन्यते। फ्राङ्ककरमोडः 'आधुनिकता' १९०७ तः १९२५ पर्यन्तं 'एकोनविशतिसंवत्स–राणां मध्ये प्रतिष्ठिता जाता' इति कथयति।

श्रीरामजीउपाध्यायाः जगन्नाथोत्तर सर्वसाहित्यम् 'आधुनिकसंस्कृत–साहित्यम्' वक्तुमुत्सहन्ते। विश्वनाथभट्टाचार्याः आधुनिकसंस्कृतसाहित्यं स्वीकर–णीयमिति मतं प्रदर्शयन्तः कथयन्ति –

'आधुनिकसंस्कृतस्य वैशिष्ट्यानि कानिचन ध्रुवं स्वीकार्याणि। संस्कृत–भाषायाः संस्कृतज्ञस्य च कृते न किमपि सर्वविलक्षणं स्थानं कल्पनीयम्। वर्तमाने भारतीयसमाजे संस्कृतज्ञानां स्थानं योग्यनागरिकरूपेण कल्पनीयम्। ईदृशी भावना विशेषतो वर्तमानयुगे समुद्भूता दृश्यते अतश्च कालेऽस्मिन् विरचितं साहित्यं वर्तमानकालस्य सर्वान् प्रश्नान् सर्वाः समस्याश्च विषयीकरोति।"

अभिराजो डॉ. राजेन्द्रमिश्रः ईसवीयस्य चतुरशीत्यधिकसप्तदशशततमस्य संवत्सरस्य पश्चान् निर्मितसाहित्यम् अर्वाचीनं मन्यते। अयं महाकविः अर्वाचीनसाहित्यं कालत्रयस्तबकेभ्यो विभज्य अर्वाचीनसाहित्यस्य विवेचनं करोति। यथा –

१. पुनर्जागरणकालः (१७८४–१८८४) २. स्थापनाकालः (१८८४–१९५०) ३. समृद्धिकालः (१९५०–तः अद्यावधि)

श्रीचन्द्रकिशोरः गोस्वामी आधुनिकयुगं स्वातन्त्र्यपूर्व–स्वातन्त्र्योत्तरं चेति द्विधा विभज्य चर्चां करोति।

श्रीमती निर्मलोउपाध्याया 'आधुनिकतायाः' लक्षणानि प्रस्तौतीत्थम् –

१. शृंगारितभावनायाः ह्रासः. २. राष्ट्रीयभावनाप्राबल्यम् ३. समग्रदेशाय ऐक्यस्य संदेशः ४ समकालीनघटना–प्रसंग– वृत्तान्तनिरूपणे जागरुकता..

इत्यादीनि ।

किन्त्वेतानि लक्षणानि अर्वाचीनसाहित्यं विशेषतः स्पृशन्ति, नाधुनिक–साहित्यमिति मे मतिः ।[१०]

डॉ. अजितठाकोरेण सूक्ष्मतया निरूपितोऽयं विषयः । तेन सूक्ष्मेक्षिकया आधुनिकताया निरूपणं कृतम् ।




## आधुनिकताया लक्षणानि

१. कृतिकारो भावकं प्रसादयितुं न किंचिदपि लिखति
२. आधुनिकं विलक्षणं जीवनदर्शनम्
३. प्रकृतेश्च्युतिः, रतेश्च केन्द्रच्युतिः

४. कुत्सित–क्षोभकारक–दुर्गाह्य–वस्तूनाम् निर्भीकाव्यिक्तिः ५. अनायक (Anti Hero) सदृशो नायकः, जन्तुकल्पो मानवः तस्य नैराश्यस्य मार्मिकं चित्रणम् ।[११]

अन्यानि लक्षणानि –

१. निषेधात्मिका वृत्तिः
२. परम्पराणामुन्मूलनम्
३. साहित्यस्वरूपं प्रत्यभिनिवेशः
४. प्रयोगधर्मिता
५. कृतकता नवीनतया संयुक्ता वेदना–हताशा–विच्छेद–स्वीकारः– विघटनम् इत्यादीनां भावानां रचनाः
६. प्राचीनध्वंसावशेषाणां त्यागः – नूतना चेतना
७. केन्द्रोत्सर्गिता–निर्भयता–मनुष्यस्य निर्बलतायाः स्वीकारः
८. नूतनार्थसर्जनम्। इत्यादीनि[13]

डॉ. राधावल्लभाः साम्प्रतसंस्कृतकाव्यशिल्पनिर्माणे प्रेरकानि निम्न–लिखितानि तत्त्वानि निर्दिशन्ति।

१. राजनैतिकी पार्श्वभूमिः – राष्ट्रवादी काव्यप्रवाहः २. गांधीवादस्य भावः ३. राष्ट्रभावस्य सातत्यम्। ४. सामाजिकी चेतना ५. विडम्बनशैली–व्यंग्य–प्रधानाभिव्यक्तिः ६. नवचेतना ७. विषयनावीन्यम् ८. समकालिकता ९. नवविधाः १०. प्राचीनविधासु वस्तुविन्यासनावीन्यम् ११. परम्पराधुनिकतायोः समन्वयः १२. यथार्थबोधः १३. व्यक्तिवादोदयः १४. परम्पराधुनिकतयाः द्वन्द्वम्[14] नवार्थसन्धानम्।[15]

इत्थं पाश्चात्यसाहित्ये यथा 'आधुनिकतायाः' अर्थोऽवगम्यते न तादृशी आधुनिकता संस्कृतस्य साम्प्रतवाङ्मये कतिपयान् अपवादान् विहाय प्राप्यते। तथापि आधुनिकतायाः कानिचिल्लक्षणान्यवश्यमेव दरीदृश्यन्ते।

## विषयनावीन्यम्

नवे युगे जगति अस्माभिः विज्ञानोद्योगोपलब्धिभिः समृद्धिः प्राप्ता जीवन–रीत्यां द्रुतगत्या परिवर्तनं जातम्। मनुष्यजीवने नूतने परिवेशे जीवनस्य नवं रूपं समुपस्थितम्। काव्यसृष्टौ कोऽप्यविषयो नावशिष्टः।

मथुरानाथशास्त्रिणा 'साहित्यवैभवम्' कृतौ 'नवयुगवीथी' ग्रथिता। तत्र ट्राम– मोटरकार–रेल–जलपोत–विद्युत्–क्षकिरण–छायाचित्र–सिनेमा–विज्ञान–

इत्यादिषु विषययेषु नानाविधा पद्यरचनाः प्रस्तुताः।

राजेन्द्रमिश्रेण 'विमानयात्राशतकम्' लिखितम्। राधावल्लभस्य 'धरित्री-दर्शनलहरी' विमानात् सृष्टेः रम्यदर्शनं प्रस्तौति। तेन 'वातानुकूलिते याने' काव्ये बिम्बसंवलितं मार्मिकं पर्यवेक्षणं कृतम्।

डॉ. कवठेकरः 'मोनालिसा' याः चित्रविषयकं रम्यं काव्यं रचितवान्। सत्यव्रतशास्त्रिणा 'थाईदेशविलासम्' थाईलेण्डस्य मधुराणि चित्राणि सृजति।

डॉ. रेवाप्रसादद्विवेदी 'प्रमथः' इत्याख्ये काव्यसंग्रहे अणुयुगं प्रति सन्धानं करोति।

डॉ. हर्षदेवमाधवः 'संकेतरहिते नगरे', 'दीपपञ्चाशिका', 'भूतप्रेतशतकम्' 'कालोऽस्मि', 'उपनेत्रम्', 'वीणा', 'रुधिरम्', 'सिकताः', 'नागोनगोरो-टांजानियावनम्', 'महाबलिपुरम्', 'आतङ्कवादः', वन्ध्याकरणम्' 'एकाकिनः शून्यावकाशम्' 'शब्दानां निर्मक्षिकेषु ध्वंसावशेषेषु', 'प्रतिच्छाया' 'कन्याकुमारी', 'लोस एंञ्जलिस', 'बोपुटो-डोल्फीनमीनः, 'हत्या', 'व्हेलव्यापादनम्', ओलोम्पिकसमारोहः', इत्यादिषु शतत्र-याधिकान् नवनवान् विषयान् अवलम्ब्य वैश्विकीं संवेदनां संस्कृते प्रवाहयति।

## अन्तरराष्ट्रीयता/स्वयुगसंवेदना

संदेशव्यवहारोपकरणैः, कम्प्यूटरैः अन्तर्जालिकाभिः वैज्ञानिकान्वेषणै-रस्माकं विश्वं संक्षिप्तम्। वयमधुना आंतरराष्ट्रीयघटनाभिः, विश्वसाहित्येन च रञ्जिता भूत्वा साहित्यं रचयामः। संस्कृतकवेः समक्षम् एकनीडीभूतविश्वं विशाले फलके भवत्युपस्थितम्। अतः संस्कृतकविरान्तरराष्ट्रीयचेतनां वोढुं क्षमोऽस्ति। स स्वयुगचेतनामपि स्वकाव्येष्वतारयति।

चीनपाकिस्तानदेशाभ्यां सह संघर्षः देशभक्तिः, युद्धोत्साहः, बांग्लादेश-मुक्तिसंग्रामः, अन्तरिक्षयात्रा, अपोलोयानगमनम्, अमेरिका-इराकदेशयोर्युद्धम्, आतङ्कवादः, नेल्सनमण्डेलामहाभागस्य कारागृहान् मुक्तिप्रसङ्गः, मुम्बापुर्यां बॉम्बविस्फोटः, नेतृणां हत्याः - इत्येतान् विषयान् अवलम्ब्य रचितासु रचनासु स्वयुगसंवेदनास्पर्शो लभ्यते।

डॉ. रमाकान्तगुप्त-राजेन्द्रमिश्र-हरिदत्त शर्मा- इत्यादिभिर्विदेशयात्रां कृत्वा कृतिनिर्माणं कृतम्। तेषां रचनासु साम्प्रतसंस्कृतकविता अन्तरराष्ट्रीयतां प्राप्तेति दृश्यत एव।

प्राचीनकवयो 'राधा–कृष्ण–पार्वतीपरमेश्वर, गोपीकृष्ण' इत्यादीनां देवीदेवानां प्रणयस्य निरूपणं चक्रुः। कदाचिद् शृङ्गाररसः अश्लीलतामपि प्राप्तः। अद्यतनकविः स्वस्यैव निरूपणमित्थं करोति –

काहिरानगरशोषप्राप्ता
मृत्तिका समा
मम मनसः स्थितिरस्ति।
इत्सिंगपर्यटकविषममार्गसमोऽस्ति दिवसः।
ध्रुवप्रदेशेहिमखण्डेन गृहीतेव रात्रिः
'काराकोरम' इत्याख्ये घाटप्रदेशे चलतीव समयः,
हिन्दुकुशपर्वतशिखरात् पारं गच्छतीव
प्रतीक्षा,
एकः श्वासोऽपि
फुफ्फुसात् लावारसमुपस्पृश्य बहिरागच्छति।
चम्बलकन्दराऽऽश्रिता
अपराधयुक्ता इव वासनाः
आतङ्कं नीत्वा प्रसरन्ति।
ईरानदेशस्य ज्वालाग्रस्ततैलक्षेत्रमिव
मयि किं प्रज्वलति?
जग्वारविमानानां व्यस्तपरिवर्तनच्छायाः
मम रुधिराभिसरणतन्त्रे
मिश्रिताः सन्ति।
अलकनन्दे।
इन्सेट बी उपग्रहोऽपि
मम प्रणयावेगस्य छविं गृहीतुं
न शक्नुयात्'[३]

यथा .।

बुद्धस्य भिक्षापात्रे
निमज्जितमस्ति
अणुबॉम्बदग्धं नगरम्।'[४]

वेदना
जेरुसलेमचर्चवेदिकागृहे
रुधिराप्लुता श्वसिति।[१९]

## अस्तित्वस्य लोपः / अस्तित्वलोपवेदना

अधुनातनः कविः स्वास्तित्वं लुप्तप्रायं प्रेक्ष्य स्वास्तित्वमार्गणे चिन्ताकुलो दृश्यते। आधुनिके विश्वस्मिन् यन्त्रालयेषु, कार्यालयेषु, अपि च नगरस्य कोलाहले मनुष्यस्य न किञ्चिदपि मूल्यम्। संस्कृतेर्नाशमवलोक्य, संस्काराणां ध्वंसमवगम्य, ईश्वरस्य संवेदनरहितायां सृष्टौ मनुष्यो छायाद्वितीयो भ्रमति व्याकुलः, हतप्रभः, नष्टचैतन्यः।

विंशत्यां शताब्द्यां संस्कृतकाव्येषु मुक्तकविधासु कविभिः स्वानुभवनिरूपण आत्मकेन्द्रिता व्यक्तित्वपरका रचना दत्ताः।[२०] सामाजिकविघटेन सह व्यक्तेर्विविक्तं, नैराश्यं, निर्वासनपीडाम्, अस्तित्वलोपवेदनाश्च सूच्यन्ते। यथा

व्यक्तवेदनया हतोऽहम्।
येऽस्म रे स्पृहयन्ति मह्यम्, तेऽधुना द्रुह्यन्ति मह्यम्।
का कथा गरलस्य, सुधया मूर्च्छितावस्थां गतोऽहम्।[२१]
स्थास्याम्यहमेकाकी स्थाणुः प्रेतवने यथा।
नग्नो निष्प्रभशाखश्च भस्मीभूतमनोरथः।।[२२]
संस्थासु रथ्यासु गृहेषु कार्यन्यायालयेष्वत्र मिथश्चरन्ति।
संघट्टयन्तः परितो जनौघा व्यक्तिस्तु कुत्रापि चिराय लुप्ता।।[२३]
अहं पर्यटामि अलकामन्विष्यन्
मच्चरणरुधिरेषु पर्वतान् स्नपयन्।।[२४]
अत्राऽहं समयस्य/गरलं पिबामि/ शिशुर्यथा अङ्गुलीं पिबति।[२५]
सम्भावनाया इतिकथा
दिग्विहीनकल्पनायाः पूर्णच्छेदः,
प्राप्यापि अप्राप्तेर्दुःखम्,
असीमा चातृप्तिः।
स्थानं नास्ति भविष्यस्य मनाक्
इहास्ति तु केवलमतीतम्।।[२६]

## उपमानयोजनायां परिवर्तनम्

एकतः आधुनिकसंस्कृतभाषा सरलीकरणं स्वीकरोति, अपरतः अन्य–भाषाणाम् अलङ्कारयोजनामपि अङ्गीकरोति। अधुना प्राचीनरूढोपमानानां स्थानो नूतनोपमानां स्वीकारोऽपि दृश्यते। उपमानाना ग्रहणं विश्वस्य सर्वक्षेत्रेभ्यो भवति। प्राचीनबन्धनानि त्यक्त्वा साम्प्रतिकी संस्कृतकविता नितान्ताधुनिकी सञ्जाता। यथा कविः समुद्रं वर्णयति–

समुद्रः
जिप्सीयुवतिपृष्ठदेशसमोऽनावृतः।
समुद्रः।
हब्शीनेत्रप्रतिमः श्यामः
समुद्रः
होनोलुलुसुन्दरीहस्तसन्निभो मसृणः।
समुद्रः
ओडीसीमहाकाव्यनायक – 'ओडिस्युस' प्राप्तशापप्रतिभटः करालः।
समुद्रः
'The old man and the sea' इत्याख्यस्य
उपन्यासस्यवृद्धाय जीविताशावत् संशयकारकः।[२७]

अधुना अप्रचलितोमानानां प्रयोगोऽपि प्रायः प्रशस्यते।

प्राचीनरूढिबद्धाः परम्परागतोपमानानामेव स्वीकारं कुर्वन्ति। नूत्ना नूतनोपमानैः काव्यमलङ्कुर्वन्ति। यथा –

अद्य त्वत्सत्तासन्धानम्
प्रतिभाति साक्षात्
पलाण्डुकेशरान्वेषणम्।[२८]
आविद्धोऽसौ भवति सघनैरभ्रखण्डैरदभ्रं
भूमिदेव्या हृदयकरुणासान्द्रनिः श्वासकल्पैः।[२९]
तव स्थितौ मम स्थितिर्मरुद्यानमिव।
त्वदभावे अहमस्मि निःस्वो मरुभूमिः।[३०]

डॉ. हर्षदेवमाधवेन होमरोपमायाः (Homeric Simile) प्रयोगः कृतो यस्मिन् उपमानस्य दीर्घं वर्णनं क्रियते। अनन्तरम् उपमानस्य उपमेयेन सह तुलना क्रियते। यथा –

यथा
कोऽपि महाविषादग्रस्तः,
सर्वनाशवार्ताचकितः,
स्वजनमृत्युदर्शनभीतः,
विपद्वज्रपातवशीभूतः,
शोककलुषितमानसः,
अज्ञातभयवेपमानः,
महासंक्षोभपीडितात्मा
प्रलयसंहारलीलादर्शनप्रमत्तः,
रोदितुमिच्छन्नपि
अश्रूणि न मुञ्चति
न मोक्तुं शक्नोति
तथैव
ध्वंसावशेषाः स्थिताः
वेदनाभरव्यथिताः
रोदितुमशक्ताः
साक्षाद्घनीभूतरोदनाकारा इव
शोकात् पतनदिवसं प्रतिपालयन्ति।[31]

इत्थम् आधुनिकता साम्प्रतसंस्कृतकाव्यजगत्युपमानयोजनापरिवर्तने द्रष्टुं शक्या। परम्पराया विच्छेदेन सह पुरातनविधानां स्थाने नवविधानां स्वीकारोऽपि आधुनिकताया लक्षणं वर्तते। मथुरानाथः शास्त्री दोहा–सोरठा–कवित्त–घनाक्षरी–गज़ल–रचना–मकरोत्। जगन्नाथपाठक–राजेन्द्रमिश्र–बच्चूलाल अवस्थी–इच्छारामं द्विवेदी–राधावल्लभैः प्रयोगधुरन्धरैर्नवविधासु महत्त्वपूर्णं भावजगत् निर्मितम्। श्रीभाष्यम् विजयसारथिः, तेलगुभाषाच्छन्दोविधाने काव्यानि सृजति।[32] डॉ. राधावल्लभः 'गीतधीवरम्' इति संग्रहे रागकाव्यरचना उपायनीकरोति।[33]

दीपकघोषः 'विलाप-पञ्चिका' काव्यसंग्रहे विलापकाव्यपरम्पराम् अरचयत्।[३४]

राजेन्द्रमिश्रः इच्छाराम द्विवेदी च द्वावपि प्रयोगनिपुणौ। ताभ्यां बालक-काव्यरचना अपि साफल्यं विनिर्मिताः।[३५]

हर्षदेवमाधवो हाइकु, ताङ्का, 'सिजो', 'लघुबिम्बकाव्य', प्रतीककाव्य, 'बाउलकाव्यम्', 'उपनिषद्', 'परावास्तववादकाव्यानि' लिखित्वा संस्कृते वैश्विकीं चेतनामवतारयति।[३६]

डॉ. जगन्नाथपाठकेन रूबाइ-गज़लप्रयोगेन संस्कृते नूतनं भावविश्वं सृष्टम्। अभिराजराजेन्द्रमिश्रः लोकगीतस्य भावजगत् स्वगीतिकाव्येषु सृजति।[३७]

## भाषाभिव्यक्तिपरिवर्तनम्

सांप्रतसंस्कृतस्य लेखका आधुनिकायुगानुरूपां शैलीमवलम्ब्य काव्यसर्जनं कुर्वन्ति। अतः आधुनिकी भाषा युगानुरूपां सरलां, अर्थावबोधक्षमां, लालित्यपूर्णां, अन्यभाषाणां शब्दैरपि युक्तां, रूढिमुक्तां शैली स्वीकरोति।[३८]

अधुना सुबन्धु-बाणादीनां कवीनां समासबहुलां दुर्बोधां शैलीं प्रति मोहो नास्ति। सर्वेषां कवीनां रचना अभिव्यक्तिप्रावीण्ये परिवर्तनमवश्यं सूचयन्ति। यथा-

- आनतमुद्रायां
  मेघो यत्र चुम्बति पर्वतं
  तन्मे स्थानं प्रियमिलनाय पूर्वनियोजितम्।[३९]
- रजनी विजनीभवति
  एकाकिनी गृहिणीव
  हेमन्तस्य शिशिरबिन्द्रवे
  तारका करकायते
  व्यथा कथामारभते।[४०]
- यदतीत्य न पुनराप्तं यदमेयसुखं जातम्।
  तद्बाल्यमपि क्षपितं स्पृष्टं न मया कुसुमम्।[४१]
- पलाण्डुच्छेदेन निर्गतं नयनयो-
  र्लावण्यमयं बाष्पजलम्
  सहैव चैव विच्छुरितं
  मधुरमधुरं स्मितं तथाष्ठयोः।[४२]

- त्वया शुष्कं कृतं कबन्धनवस्त्रन्तु
  मयापरिहितमासीत् ।
  शोषितं हृदयं पुनः
  परिधास्यते मया किम् ।[८३]
- पिनकुशन
  इवास्ति मे जीवनम्
  मम कायो जीर्णशीर्णो जातः ।[८४]
- यन्त्रचालिता मानवीयता
  सङ्गणको ननु मनुजविजेता
  'कैल्क्यूलेटर' गणितैर्विजिता मतिर्निराधारा ।।[८५]
- सर्वे मेघाः
  राजनीतिज्ञाः
  भ्रान्तिजनकाः ।[८६]
- राजघाटे
  माननीयानां नेतृणां चरणध्वनयः श्रूयन्ते ।
  समाधिः
  शनैः शनैः ब्रविति
  'हे राम हे राम' इति ।।[८७]

## वैश्विकपरिभाषाणां स्वीकारः—पाश्चात्यवादानां प्रभावः

साम्प्रतसंस्कृतकाव्यविश्वे काश्चिद् रचना नून विश्वसाहित्यप्रवाहस्य प्रतिनिधिभूता वर्तन्ते। ताः सम्यक् ज्ञातुं वैश्विकपरिभाषाणां स्वीकारोऽनिवार्यो जातः।

डॉ. राधावल्लभैः 'आधुनिक संस्कृत साहित्य : नये प्रतिमान' इत्याख्ये लेखे विषयस्यास्य चर्चा कृता । [८८]

अधुना बिम्ब, पुराबिम्ब (Myth) प्रतीक, परावास्तववाद, वास्वतवाद, मनोवैज्ञानिकतावाद, धनंवाद, प्रतिबद्धतावाद, रूपकग्रन्थि—इत्यादीन् शब्दान् अविज्ञाय आधुनिककाव्यविश्वस्य ज्ञानं न शक्यमेव। अद्यतनं काव्यं प्राचीनकाव्य-सिद्धान्तानां निगडैर्न बद्धमेव। काव्यसिद्धान्तेष्वपि नूतनवैश्विककाव्यसिद्धान्तान् स्वीकर्तुं

विवशं करोत्याधुनिकं काव्यविश्वम्। यथा (निष्क्रान्ताः सर्वे) संग्रहे 'इत्थं विचारयति कोषगते द्विरेफे' इत्याख्यः काव्यस्तबकः प्रतीककाव्यरचनाः प्रस्तौति। 'सम्प्रति' इत्याख्यः काव्यस्तबकः मुद्रणकलावैशिष्ट्यं (Typographical Techniques) समुपस्थापयति।[६१] भावस्थिराणि जननान्तरसौहृदानि' इत्याख्ये संग्रहे परावास्तववादमवलम्ब्य रचिताः काव्यरचनाः अद्यावधि अस्पृष्टम् अचेतनमनःस्पन्दनानि निरङ्कुशतया सृजन्ति।[६२] इत्थं डॉ राधावल्लभ–केशवचन्द्र–वनमालीविश्वाल–इच्छारामद्विवेदी–रेवाप्रसाद द्विवेदी– जगन्नाथपाठक–राजेन्द्रमिश्र–इत्यादीनां रचनासु नवनवोन्मेषा अनुभूयन्त एव।

## उपसंहारः

कामम् 'आधुनिकतायाः' सर्वलक्षणानि सर्वासु रचनासु न दृश्यन्ते, किन्तु साम्प्रतसंस्कृतकाव्यविश्वे 'आधुनिकतायाः' प्रमुखकवि–रचनासु विशिष्टः सन्दर्भोऽस्ति। अत्र कानिचिल्लक्षणानि निर्दिश्यन्ते –

- रूढित्यागः / परम्पराया अस्वीकारः
- नूतनविधासु सर्जनम्
- वैश्विकपरिभाषाणां स्वीकारः
- स्वयुगसंवेदनायाः अभिव्यक्तिः। राष्ट्रियताया उपासना।
- छन्दोमुक्तिः। नूतनछन्दसामन्वेषणम्
- विश्वसाहित्यानुसन्धानम्।
- नवनवा भाषाभिव्यक्तयः। अन्यभाषाणां शब्दानां संस्कृते प्रवेशः।
- अस्तित्वप्राप्तितृषा।
- मनोवैज्ञानिकमालेखनम्।
- संस्कृतं लोकाभिमुखं कर्तुं प्रयत्नाः। संस्कृतमत्याधुनिकं कर्तुम् अभिनिवेशः।

'आधुनिकतया साम्प्रतसंस्कृतकाव्यविश्वे परिवर्तनमानीतमिति निः संशयम्। संस्कृतस्य परिप्रेक्ष्ये आधुनिकतायाः सन्दर्भोऽयमस्माभिरवगान्तव्यः।

## सन्दर्भाः


१. पटेल डॉ. भोलाभाई 'आधुनिकता' अने गुजराती कविता' आर.आर. शेठनी कंपनी, अमदावाद, प्रथम, १९८७, पृ. ३–४.

२. ठाकोर डॉ. अजित 'काव्यार्थ' साम्प्रतसंस्कृतकवितामां आधुनिकतावादी वलणो, पार्श्व प्रकाशन, अमदावाद, प्रथम, १९९२, पृ. ५७-५९.

3. Howe Irving 'Literary Modernism' Fawcett World Library, New York, 1967, अजित ठाकोर 'काव्यार्थ' पृ. ७०

४. आधुनिकता अने गुजराती कविता, पृ. ६–१०।

५. तत्रैव पृ. ११–१२, टोपीवाला चन्द्रकान्त: 'विवेचननो विभाजित पट', पार्श्व प्रकाशनम्, अमदावादम्, प्रथमम्, १९९०, पृ. १–३.

६. सं. रामजी उपाध्याय: 'आधुनिकसंस्कृतसाहित्यानुशीलनम्' आधुनिकसंस्कृतसाहित्ये सागरविश्व–विद्यालयस्य संयोजनस्य शोधपत्राणा सञ्चय:, संस्कृतपरिषद्, सागरविश्वविद्यालय:, सागरम्, वि.सं. २०२२, पृ. ६३–६४

७. भट्टाचार्य डॉ. विश्वनाथ, 'आधुनिकसंस्कृतसाहित्यानुशीलनम्' पृ. ९८।

८. मिश्रो डॉ.राजेन्द्र: 'प्राग्वाचिकम्' सं. डॉ. 'अभिराज' राजेन्द्रमिश्र: देववाणीसुवास:, प्रथम खण्ड:, देववाणी प्रकाशनम्, दिल्ली, प्रथम, १९९३, पृ. घ–५

९. गोस्वामी डॉ. चन्द्रकिशोर, 'आधुनिक संस्कृत काव्य में युगबोध', 'आधुनिकसंस्कृतसाहित्य, राजस्थानी भाण्डागार, जोधपुर, १९८७, प्रथमम्, पृ. २९

१०. उपाध्याय निर्मला 'स्वातन्त्र्योत्तर संस्कृतसाहित्य', 'आधुनिकसंस्कृत साहित्यानुशीलनम्', सागरम्, पृ. ५७–६४

११. ठाकोर डॉ. अजित: 'काव्यार्थ' पृ. ५७–५९

१२. तत्रैव : पृ. ५८–६०

१३. टोपीवाला चन्द्रकान्त 'प्रतिभाषानु कवच', त्रिमूर्ति प्रकाशन, अमदावाद, प्रथम, १९८४, द्वितीय प्रकरणम्।

१४. डॉ. राधावल्लभत्रिपाठी 'संस्कृत साहित्य : बीसवीं शताब्दी', राष्ट्रीय संस्कृत संस्थानम्, १९९९, पृ. ९–७५

१५. अर्वाचीनसंस्कृतम्, जुलाई १९८७, दूर्वा – अङ्क २३, पृ. २६, संस्कृतसाहित्य बीसवीं शताब्दी, पृ. ८२

१६. 'अलकनन्दा' (१९९०), 'पुरा यत्र स्रोत:' (१९९८), 'कालोऽस्मि' (१९९९), 'निष्क्रान्ता सर्वे (१९९७) मृगया (१९९४) इत्यादिषु काव्यसङ्ग्रहेषु।

१७. डॉ. हर्षदेव माधव: (निष्क्रान्ता: सर्वे), संस्कृत साहित्य अकादमी, गान्धीनगरम्, १९९७, पृ. ११५.

१८. तत्रैव : पृ. १२७

१९. तत्रैव : पृ. १३४

२०. संस्कृतसाहित्य बीसवीं शताब्दी, पृ. ६९
२१. रामनाथपाठक, 'प्रणयी', राष्ट्रवाणी, आरा, १९५१, पृ. ३२
२२. 'डॉ. राधावल्लभः 'सन्धानम्', संस्कृत परिषद्, सागरम्, प्रथमम्. १९८९, पृ. १०।
२३. डॉ. सत्यव्रतशास्त्री 'इन्दिरागान्धीचरितम्' २५–५, ६.
२४. डॉ. केशवचन्द्रः दाशः 'अलका', लोकभाषाप्रचारसमितिः, पुरी, १६८६, पृ. ३१.
२५. डॉ. केशवचन्द्रः दाशः 'ईशा', लोकभाषाप्रचारसमितिः, पुरी, १६६२, पृ. ७
२६. डॉ. वनमालीविश्वालः 'व्यथा', पृ. ९५
२७. हर्षदेवमाधवः, 'रथ्यासु जम्बूवर्णानां शिराणाम्', संस्कृत सेवा समिति, अमदावादम्, पृ. १३,
'आधुनिक संस्कृत साहित्य', पृ. ४३.?
२८. डॉ. केशवचन्द्र दाशः 'ईशा', लोकभाषाप्रचारसमितिः, पुरी, १९९२, पृ. ९
२९. डॉ. राधावल्लभः त्रिपाठीः 'सन्धानम्', पृ. ७४
३०. वनमाली विश्वालः 'व्यथा', पद्मजा प्रकाशनम्, प्रयागः, १९९७, पृ. ८
३१. डॉ. हर्षदेवो माधवः 'शब्दानां निर्मिक्षिकेषु ध्वंसावशेषेषु', पार्श्वप्रकाशनम्, १९९३, पृ. २६
३२. संस्कृतसाहित्य : बीसवीं शताब्दी : पृ. ४६–४८
३३. राधावल्लभः 'गीतधीवरम्', संस्कृत परिषद्, सागर, १९९६
३४. दीपकघोषः 'विलापपञ्चिका', विक्रेता संस्कृत पुस्तक भण्डार, कलकत्ता, १९८९
३५. 'दूर्वा' सप्तत्रिंशत्तमोऽङ्कुरः।
३६. 'लावरसदिग्धाः स्वप्नमयाः पर्वताः', संस्कृत सेवा समितिः, १९९५, 'आसीच्च मे मनसि',
स्वयम्, १९९६, 'निष्क्रान्ताः सर्वे' संस्कृत साहित्याकादमी, गान्धीनगरम्, १९९७
३७. संस्कृतसाहित्य : बीसवीं शताब्दी : पृ. ५१।
३८. आधुनिक संस्कृत साहित्य, पृ. ८३
३९. डॉ. वनमाली विश्वालः 'व्यथा' पृ. ७
४०. डॉ. केशवचन्द्र दाशः 'ईशा' पृ. २६
४१. 'अभिराज राजेन्द्रमिश्रः 'मृद्वीका', वैजयन्त प्रकाशनम्, इलाहाबादम्, १९८५, पृ. ८६
४२. डॉ. राधावल्लभः 'सम्प्लवः' प्रतिभा प्रकाशनम्, २०००, पृ. ६५
४३. डॉ. राजेन्द्रनाणावटी, मरीचिका, वितरकम् : पार्श्व प्रकाशनम्, १९९३
४४. प्रो. देवदत्तः भट्टिः 'पिनकुशनः' देववाणीसुवासः, प्रथमखण्डः, देववाणी परिषद्, दिल्ली,
१९९३, पृ. ३०
४५. तत्रैव : पृ. ३०३७–३०३८

४६. तत्रैव : पृ. ३०६२

४७. सं. डॉ. हर्षदेवो माधवः 'संस्कृत साहित्यमां महात्मा गान्धी', संस्कृत साहित्य अकादमी, गान्धीनगर, १९९९, पृ. १४३

४८. संस्कृतसाहित्य : बीसवीं सदी :, पृ. २०५-२१३

४६. 'निष्क्रान्ताः सर्वे' पृ. ४३-६६

५०. भावस्थिराणि जननान्तरसौहृदानि, पार्श्व प्रकाशनम्, २०००.



# दर्शनस्य स्वरूपं शिवदृष्टिसमालोचनञ्च

हरेराम त्रिपाठी

विश्वसाहित्ये संस्कृतसाहित्यमतिप्राचीनं सर्वाङ्गपूर्णं क्रमप्राप्तविकासञ्चेति सर्वजनानुभवभवसिद्धम्। साहित्यस्यास्य बहुषु अङ्गेषु अध्यात्मसिद्धान्तपरो भागः प्रधानतम इति साहित्यमर्मज्ञाः विचक्षणाश्शास्त्रज्ञाश्च कथयन्ति। अध्यात्मसिद्धान्तपरो भागःदर्शनशब्देन भारतीय सम्प्रदाये व्यवहृतः प्रयुक्तश्च दृश्यते। यद्यपि भरताख्येन दुष्यन्तपुत्रेणान्येन वा राज्ञा संघटितोऽयं देश इति भारतशब्दस्य व्यवहारो देशस्यास्येति बहूनां मतं विद्यते। तथापि भासि ज्ञाने ज्ञानप्रकाशे रतः आसक्तः, संलग्न इति व्युत्पत्त्या भारतोऽयं देशः अनादिकालादारभ्य तत्त्वज्ञानार्जने व्यापृतो दृश्यत इति कथनमपि न दोषायेति रोचते मह्यम्। एवञ्च भारतीया अन्वर्थनामानः तत्त्वज्ञानार्जने व्यापृता आसन्। ते शान्तचित्ताः जितेन्द्रियाः दिव्यचक्षुषः अखिल पदार्थजातं करतलामलकवत् प्रत्यक्षी-कुर्वाणाः विचारविवेकशीलाश्च भूत्वा मानवसमुदायस्य श्रेयसे कल्याणकामनया च यानि तत्त्वानि, यांश्च सिद्धान्तान् बुद्धियुक्तिसहितान् ज्ञानप्राप्तिसाधनभूतान् आविर्भावयामासुः, तानि दर्शनशब्देन व्यवह्रियन्ते। तथाच तेषां तपस्यम्भूतायाः धिषणायाः निखिलानां जागतिकानां पदार्थानां मूलंकष आलोचनापूर्वकः तत्त्वज्ञान-प्राप्त्यर्थं युक्तिपूर्वकश्च यः प्रयत्नः स एव दर्शनशब्दवाच्यो भवति।

आहारनिद्राभयमैथुनञ्च,
सामान्यमेतत् पशुभिर्नराणाम्।

इत्युक्तरीत्या पशुभिरभिन्नान् मानवान् पृथक् करोति, मानव जातेरुत्कर्षमापादयति च।

मनुष्यः किल निसर्गत एव मननस्वभावः। मत्वा कर्माणि सीव्यति इति मनुष्यशब्दव्युत्पत्तिसम्भवात्। यदा च स कृत्यैः प्रतिक्षणमाकुलः चिन्तान्तरविमुक्तः, वैषयिकसुखेन विरक्तो भवति। तदा स चिन्तयति सुतरामिमां जटिलां विश्वसमस्यां कोऽहं? कुतोऽहं? सर्वतो दृश्यमानस्यास्य जगतः किं सत्यं स्वरूपम्? अस्य जगतः उत्पत्तिः कथम्? सृष्टेः कारणं किम्? को नामबन्धः? कथमेष आगतः? कथं प्रतिष्ठा अस्य कथं विमोक्षः? कोऽसावनात्मा? परमः क आत्मा? तयोर्विवेकः कथम्? ईदृशानां

प्रश्नानां समस्यानां वा समुचितमुत्तरं दर्शनेभ्य एव लब्धुं शक्यते। तादृशचिन्तनमनन-परिणतिभूतान्येव दर्शनानि। दर्शनान्येव सर्वेषामस्माकं प्रश्नानां योग्यं समुचितं युक्तियुक्तञ्च समाधानं दर्शयन्ति। दृश्यते अनेन इति दर्शनशब्दव्युत्पत्तेः। सरहस्यस्य निगूढतमस्य प्रपञ्चस्य तत्त्वमनेनैव दृश्यते।

यथा –

"हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।[1]
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये।।"

मन्त्रे तु दृष्टिशब्दः प्रयुक्तः। हिरण्मयेन पात्रेणेव आत्मनो द्वारमावृत्तं दृश्यते पूषन् सत्यस्य ब्रह्मणः परमात्मनः तत्त्वस्य दृष्टये दर्शनाय द्वारमपसारय इति तस्यार्थः। तत्र दृष्टिशब्दः दर्शनार्थमावेदयति। एवमेव विचारभेदे मते वादे वा सोऽयं दृष्टिशब्दः गीतायाम् –

असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्।[2]
अपरस्परसम्भूतं किमन्यत् कामहेतुकम्।।
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।[3]

इत्यत्र प्रयुक्तः। दृशिरधातोरेवोत्पन्नोऽयं शब्दः अनन्तरं सर्वासूपनिषत्सु बहुलमात्मदर्शनार्थे प्रयुक्तो विद्यते। तथाहि आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः[4]।" "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विज्ञातं भवति।[5]" इति। इदमेव वाक्यं दर्शनस्याधारभित्तिरवधार्यते। आत्मसाक्षात्कार एव मानवस्य चरमोद्देश्यम्। स च श्रवणमनननिदिध्यासेनैव सम्भवति नान्यथा। इमान्येव श्रवणादीनि दर्शनहेतुत्वेन स्वीकृतानि।

श्रोतव्यः श्रुतिवाक्येभ्यः मन्तव्यश्चोपपत्तिभिः।
मत्वा तु सततं ध्येयं एते दर्शनहेतवः[6]।।

पूर्वश्रुतिवाक्येभ्यः श्रवणं, श्रुतस्य बुबोधयिषया मनने प्रवृत्तिः, मननद्वारा पक्षप्रतिपक्षोपपत्तिभिर्निर्णीतेऽर्थे निदिध्यासनं प्रवर्तते। निदिध्यासनाद्धि आत्मदर्शनं, एवञ्च श्रवणाभावे मननाभावः, मननाभावे निदिध्यसनाभावः, निदिध्यासनाभावे आत्मदर्शनाभावः इति दृश्यते।

वस्तुतः तदिदं दर्शनमेकमेव दर्शनं, ख्यातिरेव दर्शनमिति प्रसिद्धम्। सर्वस्यास्य आत्मानात्मभेदभिन्नस्य प्रपञ्चस्य अन्यथाख्यातिरूपं ज्ञानं दर्शनशास्त्रेणैव भवितुमर्हति नान्यथा। एवमेव मनुस्मृतौ –

वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणाञ्च संयमः।[७]
अहिंसागुरुसेवा च निःश्रेयसकरं परम्।।
सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम्।
तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः।।
सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते।।इति।।

एवं याज्ञवल्क्यस्मृतावपि–

इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्।[८]
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्।। इति

दर्शनशब्दः आत्मसाक्षात्कारे आत्मयाथातथ्यज्ञाने च प्रयुक्तः। तथा च सरहस्यस्य निगूढतमस्य प्रपञ्चस्य तत्त्वज्ञानप्रदर्शकं ज्ञानविशेषाधायकं ज्ञानविशेषप्राप्तिप्रयोजकं दर्शनमेव दर्शनशास्त्रशब्देन व्यवह्रियते। शास्ति च त्रायते च इति शास्त्रम्, शंसति च शास्त्रमिति व्युत्पत्तेः।

यच्छास्ति च क्लेशरिपूनशेषान्[९]।
सन्त्रायते दुर्गतितोभवाच्च।
तच्छासनात् त्राणगुणाच्च शास्त्रम्,

अपि च

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते।।[१०]
शासनात् शंसनात् शास्त्रं शास्त्रमित्यभिधीयते।
शासनं द्विविधं प्रोक्तं शास्त्रलक्षणवेदिभिः।।
शंसनं भूतवस्त्वेकविषयं न क्रियापरम्[११]।।इति।।

एवञ्च नित्येन वेदेन चोपनिषद्भिश्च कृतकेन सूत्रादिना वा येन शब्दविशेषेण पुरुषाणां कस्मादपि प्रवृत्तिः कस्मादपि निवृत्तिर्वा उपदिश्यते तच्छास्त्रमिति। एवं

विधिनिषेधपरं शासनार्थकं शास्त्रं धर्मशास्त्रादिर्भवति। शंसनार्थकं तु वस्तुनः वास्तविकं स्वरूपमावेदयति वर्णयति च विधिनिषेधमुखेन। एवञ्च दर्शनं नाम वस्तुतत्त्व-निरूपकोऽभ्यर्हितपुरुषप्रणेतृकशब्दसन्दर्भविशेषः। अथवा तत्त्वज्ञानसाधनं शास्त्रमिति। एवं विधानां दर्शनग्रन्थानां विचारशैली विस्तृता अधिकं व्यापिका च भवति। दर्शनग्रन्थेषु च तत्त्वविज्ञानस्य, नीत्याः, तर्कस्य, मनोविज्ञानस्य प्रमाणानाञ्च विशदाः विचाराः व्याख्याश्च कृताः दृश्यन्ते। दार्शनिकग्रन्था समन्वयात्मिकां दृष्टिमनुसृत्य प्रवृत्ता एव विद्यन्ते। यद्यपि दर्शनेषु भेदाः विद्यन्ते, सिद्धान्तेषु च भेदाः दृश्यन्ते। परं किञ्चिदपि दर्शनं दर्शनान्तरस्योपेक्षां कृत्वा युक्तियुक्तानां विचाराणां समीक्षां कुर्वदेव न दृश्यते। अत एव दर्शनग्रन्थेषु विचाराणां विमर्शावसरे नूतना काचन पद्धतिः दर्शन-कारैस्स्वीकृता। सा च पद्धतिः पूर्वोत्तरपक्षरूपा। एवां पद्धतिमाश्रित्य दर्शनानि परमपुरुषार्थसाधनतत्त्वज्ञानसाधनानि भवन्ति। मानवजीवनस्योन्नतं लक्ष्यमधिगन्तुं दर्शनानां परिशीलनं मानवस्य नितान्तमावश्यकं भवति। दर्शनानामध्ययनमध्यापनं परिशीलनं, वा दुःखस्य कारणं दुःखनिवृत्युपायञ्चावेदयति।

सर्वेषां दर्शनानामिदमेव परमं प्रयोजनं यत् ''रागादिदोषवर्जनम्''। शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः'' इति वचनात् एवं तन्त्रवार्तिके ''विज्ञानमात्रक्षण-भङ्गा नैरात्म्यवादानामपि उपनिषत्प्रभवत्व, विषयेषु आत्यन्तिकं रागं निवर्तयितुमित्यु-पपन्नं सर्वेषां प्रामाण्यम्'' इति। एवं नव्यन्यायस्य प्रवर्तकः महामहोपाध्यायः श्री गङ्गेशोपाध्यायः स्वकीयतत्त्वचिन्तामणिग्रन्थे प्रामाण्यवादनिरूपणावसरे कथयति ''अथ जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्या- स्थानेष्वभ्यर्हितत-मामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय''' इति।

एतेन तत्तद्दर्शनमूलपुरुषाणां महतां वचस्सु परामृश्यमाणेषु दर्शननिमित्त-रागद्वेषशून्यत्व स्पष्टमभिहितमवगम्यते। नानादर्शनसारग्रहिणस्तु तादृशाभिमान-विधुराः प्रायः शान्ताः भवन्ति। ततश्च य एव सर्वशास्त्रज्ञस्तस्य शान्तं मनस्सदा इति वचनमनुसृत्य मनसश्शान्तिरेव सर्वदर्शनानां गौणप्रयोजनं भवतीति। तदिदं दर्शनं दृष्टादृष्टभेदात् द्विविधम्। तत्र दृष्टवादिदर्शनं तु दृष्टप्रपञ्चस्यैवास्तित्वबुद्धिं स्वीकरोति। अदृष्टप्रपञ्चस्यामुष्मिक- परलोकादिशब्दव्यवहृतस्य नास्तित्वं स्वीकरोतीति कारणेन नास्तिकदर्शनमिति प्रसिद्धम्। अदृष्टवादिदर्शनन्तु दृष्टात्परयोरात्मानात्मनोरस्तित्वं स्वीकरोतीति आस्तिकनाम्नाप्रसिद्धम्। आस्तिक-शब्दः ईश्वरास्तित्ववादिनि प्रसिद्धः, नास्तिक- शब्दश्च ईश्वरनास्तित्ववादिनि प्रसिद्धः। यद्येवं स्वीक्रियते तर्हि पूर्वमीमांसाकैकदेशिनः अपूर्वाणामेव फलदातृत्वं न तु

तद्भिन्नस्येश्वरस्येति ईश्वरमनङ्गीकुर्वाणा अपि आस्तिकशब्दव्यवहारानर्हा भवेयुः एव प्रकृतिः पुरुषसम्बन्धात् जगत्सृष्टिवादिनः ईश्वरस्वीकारस्यावश्यकता–मनङ्गीकुर्वाणाःसाङ्ख्या अपि आस्तिकशब्दभाजो न भवेयुः। यदि च परलोकास्तित्व–वादी आस्तिकः, परलोकनास्तित्ववादी नास्तिक इति स्वीक्रियते तर्हि बौद्धा अपि केचन कर्मसिद्धान्तपरलोकास्तित्ववादिनः, तन्त्रप्रामाण्यवादिनस्तान्त्रिकाश्चास्तिका भवेयुः। तस्मात् "नास्तिको वेदन्दिकः" इति वाक्य प्रमाणं स्वीकृत्य वेदप्रमाण्यस्वीकर्तारः



आस्तिकाः, वेदाप्रमाण्यस्वीकर्त्तारश्च नास्तिका इति स्वीकर्त्तव्यम्। एवं सति आस्तिकदर्शनेषु न्यायवैशेषिक साङ्ख्य योग–मीमांसा वेदान्त संज्ञकानि षड्दर्शनानि अन्तर्भवन्ति। नास्तिकदर्शनेषु अवैदिकदर्शनेष्विति प्रसिद्धेषु चार्वाकबौद्धजैन दर्शनान्यन्तर्भवन्ति।

दर्शनभेदरूपरेखाः उपरि प्रदर्शिताः सन्ति।

तत्र साधकानुग्रहार्थं महेश्वरः शिवः शैवदर्शनस्योपदेशं चकार इति शैवाचार्याः। तत्र अमर्दको द्वैतशैवस्य[1], श्रीनाथः द्वैताद्वैतशैवस्य, त्र्यम्बकः अद्वैतशैवस्य चोपदेशं चकार। कश्मीरशैवदर्शनस्य प्रवर्तकः त्र्यम्बकादित्यः आसीत्। कश्मीर–शैवदर्शनं, त्र्यम्बकदर्शनं, अद्वैतशैवदर्शनं, पराद्वैतशैवदर्शनञ्च इत्यादिशब्देभ्य कथ्यते। त्र्यम्बकादित्यस्य शिष्परम्परायां आचार्य सोमानन्दः आचार्य उत्पलदेवः, आचार्य अभिनवगुप्तश्च विद्यते। शैवशास्त्रस्य दर्शनग्रन्थेषु प्रधानतमः ग्रन्थः शिवदृष्टिः विद्यते। अत्र सप्ताध्यायेषु सप्तशतं श्लोकाः सन्ति। स्पन्दशाखायां प्रचलितस्य रूढ़िवादस्य विरुद्धमत्र तर्कवादस्य स्थापनं सञ्जातम्। महर्षि दुर्वासा भगवतः महेश्वरस्यादेशात् त्र्यम्बकादित्याख्यं मानसं पुत्रं ससर्ज। अथ दुर्वासा त्र्यम्बकादित्यं सम्पूर्णं शिव–रहस्योपदेशं चकार। सोऽपि गुहां गत्वा मनसा सुतं ससर्ज। अथ गगनमुत्पपात। इत्थं परम्पराया चतुर्दशसिद्धाः बभुवुः। पञ्चदशः सिद्धः सर्वशास्त्रविशारदः कदाचिल्लोकयात्रायां गच्छति स्म। रूपयौवनसौभाग्यवसुन्धरां योग्यां ब्राह्मणीं कन्यां दृष्ट्वा तत्पितरं स्वयमर्थयित्वा तया सहोद्वाहं कृतवान्। स च भ्रमन् कश्मीरेषु जगाम। नाम्ना स संगमादित्यः सर्वगुणसम्पन्नः शैवदर्शनस्य ज्ञाता आसीत्। तत्पुत्रः वर्षादित्यः आसीत्। वर्षादित्यस्य सुतः भगवानरुणादित्यः, तत्सुतः आनन्दः उद्‌बभूव।

आनन्दस्य पुत्रः सोमानन्दः आसीत्। सोमानन्दः अशीत्युत्तराष्टशततम ईश्वीये शिवदृष्टिग्रन्थस्य निर्माणं चकार। समस्तप्रपञ्चानां मूलकारणं सर्वतत्त्वविग्रहः शिवः विद्यते इति शिवदृष्टेः मंगलाचरणेन ज्ञायते।

अस्मद्‌रूपसमाविष्टस्वात्मनात्मनिवारणे।<br>
शिवः करोतु निजया नमः शक्त्या ततात्मने।।

अर्थात् अहं यं नमस्करोमि। स शिवः अस्मद्‌रूपेण ऐक्यं प्राप्तः। ईश्वरप्रत्य–भिज्ञान्यायेन शिवः संसाराय मायाशक्तिकृतैक्या आख्यात्या भावान् अनात्मस्थानान् आभासयति। सोमानन्देन शिवदृष्टौ षट्त्रिंशत्तत्त्वानि स्वीकृतानि। उक्तञ्च

आत्मप्रच्छादनक्रीडां कुर्वतो वा कथञ्चन।
मायारूपमितीत्यादि षट्त्रिंशत्तत्त्वरूपताम्।।[13] इति।।

शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या, माया, कला, विद्या, रागः, कालः, नियतिः, पुरुषः, प्रकृतिः, बुद्धिः, अहंकारः, मनः, श्रोत्र, त्वक्, चक्षुः, जिह्वा, घ्राणः, वाक्, पाणिः, पादः, वायुः, उपस्थः, शब्दः, स्पर्शः, रूपरसगन्धाः, आकाश, वायुः वह्निः, सलिलम्, पृथिवी इत्येतानि षट्त्रिंशत्तत्त्वानि सन्ति। तत्र शिवतत्त्वं नाम इच्छा–ज्ञान–क्रियात्मककेवलपूर्णानन्दस्वभावरूपः परमशिव एव। अस्य जगत् स्रष्टुमिच्छां परिगृहीतवतः परमेश्वरस्य प्रथमस्पन्दः एवेच्छाशक्ति– तत्त्वम्। यदा परमेश्वरः शुद्धचिन्मात्राधिकरण एवाहमित्यंशे इदमंशं उल्लासयति तदा तस्य प्रोन्मीलितमानस–चित्रकम्पभावराशिविषयत्वेन अस्फुटत्वात् इच्छा प्रधानं सदाशिवतत्त्वम्। स्फुटीभूते च इदमंशे यदाहमंशं निषिञ्चति तदा ज्ञानशक्तिप्रधानमीश्वरतत्त्वम्। अहन्ता इदन्तयोः ऐक्यप्रतिपत्तिः शुद्धविद्यास्वस्वरूपेषु भावेषु भेदप्रथा माया। यदा तु परमेश्वरः पारमेश्वर्या मायाशक्त्या स्वरूपं गृहीत्वा संकुचितग्राहकतां अश्नुते तदा पुरुषसंज्ञः, अयमेव मायामोहितः कर्मबन्धनः संसारी, परमेश्वरादभिन्नोऽपि अस्य सर्वकर्तृत्वं, सर्वज्ञत्वं, पूर्णत्व नित्यत्वं व्यापकत्वञ्च अभिलक्ष्य शक्तयः संकुचिताः भवन्ति। यथा राज्ञापहृतसर्वस्वस्य अनुकम्पया जीवनार्थं किञ्चित् स्तोकं धनं दीयते तथैव अणुत्वमापन्नस्य बोधस्य अपहृतसर्वज्ञत्वादेस्तत्स्थाने किञ्चित्कर्तृवादिपरमार्थ–कलादिकं वितीर्यते। कला नाम अस्य पुरुषस्य किञ्चित् कर्तृताहेतुः, विद्या किञ्चिज्ज्ञत्वकारणम्, विषयेषु अनुरागः रागः। भावानां भासनाभासनात्मकानां क्रमोऽवच्छेदकः भूतादिः, कालः। ममेदं कर्त्तव्यं ममेदमकर्त्तव्यमिति नियमनहेतुः नियतिः। एतत्पञ्चकमस्य स्वरूपावरकत्वात् कञ्चुकमित्युच्यते। महदादि–पृथिव्यन्तानां तत्त्वानां मूलकारणं प्रकृतिः। सत्त्वरजस्तमसां सुखदुःखमोहात्मकानां प्रकाशक्रिया–नियमनस्वभावानां साम्यावस्था अविभक्तरूपा मूल प्रकृतिः। निश्चयकारिणी विकल्पप्रतिबिम्बधारिणी बुद्धिः। ममेदं न ममेदं इत्यभिमानसाधनम्अलङ्कारः, संकल्पसाधनं मनः। बुद्ध्यहंकारमनांसि अन्तः करणानि सन्ति। ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं पञ्चमहाभूताश्च प्रसिद्धाः सन्ति। अत एव विस्तारभयान्न तेषां लक्षणमत्र विहितं मया।

भूतानां विभवभूतानि अपरिसंख्येयानि भुवनादीनि कार्याणि सन्ति। परमेश्वरः स्वमातृपितृभूतादिरूपेण देवादीनां भुवनानि च तन्निवासरूपाणि विसृज्य प्रकर्षेण

उत्कृष्टादिदेवमनुष्यतिर्यग्योनिरूपं गृह्णाति। अत एव शिवदृष्टौ सोमानन्देनोक्तम्–

तथा नाना शरीराणि भुवनानि तथा तथा।
विसृज्यरूपं गृह्णाति प्रोत्कृष्टाधममध्यमम्।।
स्थानानुरूपतो देहान्देहाकारेण भावनाः।
आददत्तेन तेनैव रूपेण प्रविभाव्यते।।[१४]

यथा सार्वभौमो राजा आमोदभावेन क्रीडति तथैव परमेश्वरः सर्गरूपेण क्रीडति। ईश्वरस्य हर्षानुसारी स्पन्दः क्रीडा भवतिः। भगवान् शिवः पूर्णः निरपेक्षः आनन्दात्मा सदैव। तथापि मायाशक्तिवशात् आत्माख्यातितः आनन्दातिरिक्त इव तत्त्वतामेति जगन्निर्माणेच्छारूपेण स्थातुम्, तस्याः क्रियात्वात् तत्पूर्वभागात्मकोन्मुखतां याति। सा च क्रमेण इच्छाज्ञानक्रियात्मतां याति। ततः सर्वत्रैव शिवात्मत्वं विद्यते। शिवः स्वशिवत्वमजानन्निव पश्वात्मभावमासाद्य स्थितः। मायाशक्तिवशात् ग्राह्य–ग्राहकरूप – संसारात्मत्वस्वरूपं स शिवः अवतिष्ठते। तत्र ग्राहकः पशुः पुर्यष्टकावच्छिन्नं चैतन्यम्। स एव परिमितत्वात् अणुः चैतन्यात्मत्वेन नित्यः अमूर्तश्च। विश्वात्मत्वत्यागेन अज्ञः अस्वातन्त्र्यात् क्रियागुणरहितो अनीश्वरश्च। मायाकृतत्वात् मायोदरान्तःस्थः। क्वचिन्महामायापरपर्यायविद्याशक्तिवशात् शिवत्वेन आत्मानं पश्यन् सर्वथा विश्वात्मत्वमनुगतः शान्त इव। विद्याशक्तितारतम्यश्च भेदात् क्वचिद् वैशेषिकदर्शनभिमतस्वीकृतकेवलेश्वरमात्रदृढाभिमानेन स्थितः शिवः। क्वचित् शिवभेदेन शम्भुसंज्ञा। क्वचित् विज्ञानमय एवाम्लानपशुभावः मायाख्यमलोप–स्थापितभिन्नग्राह्यशून्यः प्रलयकेवली भवति। कार्ममलास्पर्शी विज्ञानकेवलीरूपः। अत एवं सोमानन्देनोच्यते –

स्वशिवत्वमिवाजानन्पश्वात्मव्यपदेशतः।[१५]
तद्रूपत्वेन वा पश्यन्स्थितः शान्त इव क्वचित्।
केवलेशदृढत्वेन क्वचित् केवलशम्भुता।।
अप्रबुद्धो निष्कलश्च क्वचित्प्रलयकेवली।
आत्मबोधी विकलवत् क्वचिद्विज्ञानकेवली।।

वैयाकरणाःयदनादिः अनन्तञ्च परं ब्रह्म चिद्रूपं तदक्षरं निर्विकारं शब्दरूपम्। सैव च पश्यन्ती संज्ञा परा वाक् इति वदन्ति। वाग्रूपतां विना परब्रह्मणः चित्प्रकाशः न प्रकाशितुं शक्यते। वाग्रूपता हि प्रत्यवमशिर्नी प्रत्यवमर्शनस्यार्थः

प्रकाशनमिति। या अन्तः पश्यदवस्था भोक्तृतारूपा ज्ञेयरूपशून्यं चिद्रूपत्वं चैतन्यमात्रं स एव आत्माशब्देन व्यपदिश्यते।

अत एवोक्तं

स एवात्मा सर्वदेहव्यापकत्वेन वर्तते।
अन्तः पश्यदवस्थैव चिद्रूपत्वमरूपकम्।। इति।।

अभ्यासप्रकर्षात् पराकाष्ठां प्राप्ता सा पश्यन्त्येव भवति यथा अनन्तं सर्वमेवविश्वं पश्यति येन दर्शनक्रियार्थे अस्याः पूर्यते।

वैयाकरणमते पश्यन्तीरूपं शब्दतत्त्वं अक्षरं अनाद्यन्तं ब्रह्म विश्वार्थभावेन विवर्तते। अत्र सोमानन्देनोच्यते सा पश्यन्ती प्रतिदेहं पृथग्भूता वा स्यात् सर्वदेहेष्वे– कैव वा। पृथक्त्वे बह्व्यः पश्यन्त्यः स्युः, ततश्च अद्वैतस्य सिद्धिः न कर्तुं शक्यते। यदि सर्वदेहेषु एकैव पश्यन्ती तर्हि सर्वदेहिनां एकपश्यन्तीयोगात् एकत्रापि वक्तरि तत्पूर्वकप्रयत्नप्रेरितप्राणाभिहितस्थानोत्थितः शब्दविशेषः यः, स एव सर्वेष्वपि उच्चरितः स्यात्। तथा असमीचीना व्याकरणदर्शने व्यवस्था विद्यते। अत आह सोमानन्दः शिवदृष्टौ यथा सर्व पदार्थानां भगवच्छिवरूपता।

तद्वद्वागिन्द्रियस्यापि न पुनः सा परा दशा।
कण्ठादौ वदने वायौ व्यापारो वाग्रुतस्य सा।
करणं, नादरूपादिशब्दस्यापि शिवात्मता।
तस्यापि कथिता पञ्च तत्त्वदीक्षा विधौ क्वचित्।
न वाच इष्यते तद्वत् तस्मात् सर्वं शिवात्मकम्।।

शक्त्या शून्यो न यद्यपि शिवः विद्यते। तथापि शिवस्य शक्तिः इति कथनात् भेदः परिलक्ष्यते तर्हि कथं शिवस्य शक्तिः शिवस्वरूपैव। अत्रोच्यते सोमान्देन।

न हिमस्य पृथक् शैत्यं नाग्नेरौष्ण्यं पृथग्भवेत्।

यथा वह्नौ उष्णस्पर्शः जले शीतस्पर्शः न पृथगुपलभ्यते तथैव शिवस्य शक्तिः शिवरूपैव। तथाच शक्तिशक्तिमतोरभेदात् ज्ञानशक्तिमान् सदाशिवः। उद्रिक्तक्रियाशक्तिः ईश्वर इति। अत एव इच्छाशक्तिमय शिवः। यदा चित् स्वातन्त्र्यशक्तिमान् तदा परमशिवः इति। अत एव शिवदृष्टौ उक्तम् –

शिवो भोक्ता शिवो भोज्यं शिवेषु शिवसाधनः ।[१९]
शिवः कर्त्ता शिवः कर्म शिवोऽस्मि करणात्मकः ।
शिव एव फलावस्था व्यापार इति साधुषु ।

सन्दर्भाः


१. ईशावास्योपनिषत् ।।१५।।
२. श्रीमद्भगवद्गीता अध्याय १६ श्लोक ८।
३. तदेव श्लोक ९।
४. बृहदारण्यकोपनिषद् ।।१०।। पृ. ८७ (मूलमात्रम्)
५. तदेव ।।१०।। पृ. ८७ —"—
६. विवरणप्रमेयसंग्रहः
७. मनुस्मृतिः
८. याज्ञवल्क्यस्मृतिः
९. नागार्जुनीयमूलमध्यमकारिका।
१०. श्लोकवार्तिकम्।
११. पराशरोपपुराणम्, अध्याय १८।
१२. प्रामाण्यवादे पृ. सं. १
१३. श्रीमच्छ्रीकण्ठनाथाज्ञावशात् सिद्धाः अवातरन्।
त्र्यम्बकामर्दकाभिख्यश्रीनाथा अद्वये द्वये।। तन्त्र आ. ३६–१३
१४. शिवदृष्टिः (सोमानन्दः) पृ. सं. २२१
आनन्दसंज्ञकस्तम्भादुद्भवभूत्र तथाविधः।
तस्मादस्मि समुद्भूतः सोमानन्दाख्य ईदृशः।।
श्लोक १२०
अगमा पब्लिशिंग हाउस — १९९१
१५. शिवदृष्टिः पृ. सं. २३ श्लोक सं. ३२
१६. शिवदृष्टिः पृ. २७ प्र. अध्याय श्लोक ३४
१७. तदेव पृ. २८ —"— ३५
१८. शिवदृष्टिः पृ. ३० प्र. अ. श्लोक ४१
१९. शिवदृष्टिः अध्याय ७ श्लोक, ९९, १००




# काव्यास्वाद:

हर्षदेवमाधव:

मणिकर्णिकाघट्टे दिष्ट्या स्थितोऽहम्।
सत्यादृते सर्वैः स्निग्धैश्च्युतोऽहम्।।
स्वप्ने मया किञ्चिद् दातुं प्रतिज्ञातम्।
आजीवनं तस्मात् प्रेतैर्वृतोऽहम्।।
धाराधराः कामं वर्षन्तु वीथीषु।
जातो मरौ शाखी शाखोटकोऽहम्।।
मथ्नन्तु काव्याब्धिं मां मन्दरीकृत्य।
यत्काश्यपे पृष्ठे सम्यक् स्थितोऽहम्।।
काव्यप्रकाशत्वं कस्मान्न मे वन्द्यम्?
हृद्ये दशोल्लासे सप्ताञ्चितोऽहम्।।
नो साहसाङ्कानां गोष्ठ्या बहिष्कार्यः
कामं कुविन्दोऽस्मि काव्ये रतोऽहम्।।
अस्मिन् पुरे यावद् गायामि गीतानि
जाने यथा धाराधीशैः श्रुतोऽहम्।।
मा संस्कृते! खेदं चिन्तां व्यथां कार्षीः।
पुत्रोऽभिराजस्ते लोके धृतोऽहम्।।

## अस्तित्वस्य संघर्षः, परम्परायाः आश्वासनम् : मणिकर्णिकाघट्टे

अभिराज डॉ. राजेन्द्रमिश्र आधुनिकसंस्कृतभाषाभवननिर्माणे मुख्यस्थपतिर्वर्तते। 'श्रुतिम्भरा' (१९८९) तस्य गीतिगज़लकाव्यानां सञ्चयः। कविः स्वयं लिखति यद् यथा पुष्पं वृक्षात् पृथग्भूतं नश्यति तत्संम्पृक्तं च जीवति शोभते, सर्वथा तथैव

परम्पराविच्छिन्नः साहित्यकारो ध्वंसते। परम्परापरिवर्तनाय परम्परावलम्बनं सर्वथाऽनिवार्यं भवतिं (मदीया काव्ययात्रा पृ. १५, प्रस्तुत संग्रहे प्रस्तावनायाम्) किन्तु वर्तमानजीवनं तु विषमम्। आधुनिकी सृष्टिः कविं पृथक् करोति परम्परायाः। स्वपरिचयरहितो मनुष्यः कुत्र कथं गच्छेदिति समस्या।

काव्यनायको 'मणिकार्णिकाघट्टे' स्थित्वा चिन्तनं करोति। सः सत्यादृते सर्वैः स्निग्धश्च्युत इति स्वात्मानं पश्यति। गङ्गाया काशीनगर्याः प्रसिद्धो घट्टोऽस्ति मणिकर्णिकाघट्टः यत्रानीयन्ते शवाः प्रतिदिनम् प्रतिक्षणम्। प्रस्तुतकाव्यनायकोऽपि स्वास्तित्वस्य घट्टे स्थितो मृतातीतक्षणान् पश्यति। अस्मिन् घट्टे हिमगिरिनन्दिन्याः कुण्डलं निपतितमति ख्यातम्। भगवान् शिवस्तन्मार्गयन् भ्रमतीति पुरा कथा। अत्र कविरपि च्युतिं स्मरति अयं रिक्तताया अनुभवश्च स्वात्मलक्षितः कविमाधुनिकं घोषयति। किन्तु सर्वेषां गमनोत्तरं भ्रंशोत्तरं सत्यमवशिष्टम् सैव महती सिद्धिः।

गज़लकाव्यस्य द्वितीये युग्मके (शेर) काव्यलिङ्गालङ्कारे कविः स्वयं कस्मात् प्रेतैर्वृतोऽस्ति इत्येतस्य कार्यस्य कारणं वर्तते तेन स्वप्ने किञ्चिद् दातुं प्रतिज्ञातमिति। अत एव स वासनाभिः वृतो वर्तते। अर्वाचीननायकस्य जीवने यावशिष्टा वर्तते सा पीडैवास्ति। तृतीये युग्मके शाखोटकस्य श्रवणं काव्यप्रकाशस्य दशमोल्लासे निम्ननिर्दिष्टश्लोकस्य स्मृतिं जनयति।

कस्त्वं भोः कथयामि दैवहतकं मां विद्धिशाखोटकं...६

(काव्य प्र.–दशम उल्लास ४४७ श्लोक अप्रस्तुतप्रशंसा – अलङ्कारचर्चायाम्)

इत्थं शास्त्रकविः परम्परायां रचयत्यनुसन्धानम्। वैयर्थ्यस्य भावो विषादं जनयति अयम् अस्तित्वव्यर्थता विरतिम् उत्पादयति। चतुर्थे युग्मके कविगर्वोक्तिर्यत् स स्थितोऽस्ति मन्दरीकृत्य तमेवेति नूनं साधुवादार्हा।

पञ्चमे युग्मके कथितव्यं संदिग्धं वर्तते। 'हृद्ये दशोल्लासे सप्तान्वितोऽहमिति पङ्क्तौ मम्मटस्य काव्यप्रकाशे यथा दश उल्लासास्तथा मम हृदि यः काव्यप्रकाशस्तत्र दशानां विविधानामुल्लासः। अपि किं कविना सप्तकाव्यसंग्रहा रचिता इति सूच्यतेऽत्र? सप्तान्वितत्वं सन्दर्भरहितमस्ति।

षष्ठे युग्मके कुविन्द इति शब्दप्रयोगो भोजप्रबन्धमुद्घाटयितुं सहृदयं विवशं करोति।

राजा भोजः लक्ष्मीधराय गृहं दातुं स्वमन्त्रिणं कथयति तदा तस्यामात्यः कमपि कुविंदं गृहान्निष्काषयितुम् प्रवर्तते किन्त्वसौ कुविन्द्रोऽपि विद्वानेवास्ति। कुविन्दः स्ववैदुष्यं प्रमाणयितुं राज्ञः समक्षं श्लोकं पठति –

**काव्यं करोमि नहि चारुतरं करोमि यत्नात्करोमि यदि चारुतरं करोमि।**
**भूपालमौलिमणिमण्डलपाठपीठ साहसांक कथयामि वयामि यामि।।**

(भोजप्रबन्धे श्लोक ९३)

अयं कविरपि कुविन्दोऽस्मि इति कथयति तदा कविवर्य– कुविन्दस्य कृतेऽन्योऽपि सन्दर्भः स्मर्यते।

प्रसारयन्ति कुशलाश्चित्रां वाचं पटीमिव।। (शिशु. २–७४).
कबीरसमोऽयंमहाकविः कुशलोऽस्ति कुविदन्वे।

सप्तमे युग्मके 'अस्मिन् पुरे यावद्गायामि गीतानी कथयति तदा कस्य पुरस्य सन्दर्भोऽयमिति तर्कयामि यस्यां कविना नैककविसमवायेषु काव्यंरचनापाठेन रसायनं सिञ्चितमंस्ति सहृदयश्रोत्रेषु।

अन्तिमे युग्मके देववाण्याः पुत्रः संस्कृतिं सान्त्वयति। अभिराजस्योपस्थितौ विषादमस्थाने वर्तते। सत्यमेव। संस्कृति–रक्षणार्थे कृतसंकल्पैरेव धृतोऽयं संसारः। किन्तु परम्पराया आश्वासनमस्त्यत्र।

गज़ल रचनायां पञ्च/सप्त/नव–पङ्क्ति–द्वय (शेर) रचनानियमो वर्तते। अत्र अष्टयुग्मकानि नियममुल्लङ्घयन्ति। 'काफिया' (द्वितीयपङ्क्तिप्रासः) बन्धोऽपि शिथिलः।

प्रथमयुग्मत्रयेषु यद् भावविश्वमस्ति तत्परिवर्तते पश्चात्। अतो भावसातत्यमपि हानिं प्राप्नोति। इत्थं यद्यपीयं रम्या रचना, तथापि न सृजति भावविश्वं समग्रतया।

अत्र प्रतीकबोध इत्थं विचारयितुं शक्यः –

⇨ मणिकर्णिकाघट्टः – मृत्योः प्रतीतिः अस्तित्वबोधः
⇨ स्निग्धैः च्युतः – विच्छिन्नता – विप्रयोगः – नैराश्यम्
⇨ प्रेतैर्वृतः – संसारस्य भीतिकरी सृष्टिः – विरतिः
⇨ शाखोटकः – एकान्तं स्थितिः – वैयर्थ्यस्वीकारः

- ➪ मां मन्दरीकृत्य – स्वस्मिन् श्रद्धा –
- ➪ कुविन्दः – पुराबिम्ब (Myth) रचनापटुता – काव्यकर्मणि शिल्पस्य सूचनम्
- ➪ धाराधीशैः श्रुतोऽहं – श्रोतृगणप्रशंसा – प्ररोचना
- ➪ लोके धृतोऽहम् – आत्मश्रद्धा – कवेर्निर्भयः स्वरः – संस्कृतिं रक्षितुं कृत-सकल्पता



# ग्रन्थसमीक्षणम्

## राधावल्लभः

दारुब्रह्म : गीतिसङ्ग्रहः, प्रणेता वनमाली विश्वालः, प्र०- पद्मजा प्रकाशनम्, इलाहाबादम्, २००१

ओडियाभाषायां भगवन्तं जगन्नाथमधिकृत्य लसन्ति जनजनहृदये वसन्ति भजनानि लोकगीतानि वा। "दारुब्रह्म" तेषु केषाञ्चित् बहुप्रचलितानां गीतानां सरसं स्वतन्त्र-संस्कृत- रूपान्तरम्। सुकविना विश्वालेन भक्तिभावनायाः उत्कलीयसंस्कृतेश्च सम्यगत्र अभिव्यक्तिर्विहिता। भाषा नितान्तं सहृदयस्वान्तं प्रविशन्ती सहजसौन्दर्यसमन्वयं विधत्ते। तथाहि-

नभसि शोभते चन्द्रः तडागजले कमुदः।
पश्य पश्य श्रीमन्दिरे शोभते कृष्णकमलम्।। (पृ०३१)

भक्तानां विविधा भावा मर्मस्पृशमिह प्रकटिताः। तत्र न केवलं समर्पणमाराधनं च उपालम्भो माधुर्यभक्तिः सख्यमपि च व्यक्तिं गतानि।

छिनद्मि सम्पर्कं त्वत्तः शृणु जगन्नाथ!
आजीवनं न भवामि पुनस्तव मित्रम्।।
श्रद्धया मया निर्मितं बालुकायां गृहम्
नाखेलस्त्वं मया सह तव कोऽस्मि वाऽहम्।।

(पृ० ३७)

क्वचिच्च भाषा लोकजीवनसंस्कारं लोकाचारं वा प्रकटयितुमक्षमा प्रतिभाति। दिङ्मात्रमुदाह्रियते-

कदाचित् ते लगिष्यति कस्याशुभदृष्टिः
मात्रा त्वत् शरीरेऽर्पिता कृष्णवर्णज्योतिः। (पृ० ३८)

अत्र ज्योतिरिति पदं नपुंसकम्, तत्कृते अर्पिता इति स्त्रीलिङ्गं विशेषणं चिन्त्यम्। हिन्दीक्षेत्रे दिठौना इति यत् कथ्यते, मात्रार्पितकज्जलचिह्नेन स एवात्राभिप्रेत इति प्रतिभाति। संस्कृतभाषायां तत्कृते समीचीनस्य शब्दस्यात्र आविष्कारोऽपेक्ष्यते।

अस्मिन्नेव गीते रूपान्तरकारेण दयणा इति लोकभाषाया: शब्द: प्रायोजि। तथापि संस्कृते दुर्लभं साहित्यराशिमयं सङ्ग्रह: प्रस्तौतीति सर्वथा श्रमो विश्वालस्याभिनन्दनीय:।

**श्रीमद्भगवद्गीताधर्मदर्शनभाष्यम्- प्रथमो भाग: (सप्रमाणं हिन्दूधर्मविवेचनम्)- डा० गिरिधारीलालचतुर्वेदी, बृजरानीपब्लिकेशन, छत्ताबाजार, मथुरा, प्र०सं० १९९९।**

कृतिरियं मर्मज्ञेन विदुषा हिन्दूधर्मस्यास्वरूपबोधाय विरचिता। महाभारतधर्म एव हिन्दूधर्म:, स च महाभारते सनातनधर्म इति विशदीकृत:। श्रीमद्भगवद्गीता चास्य धर्मस्य निष्यन्द इति वर्तते तस्य मतम्। चतुर्वेदीमहोदयो गान्धीवादं नेहरूदर्शनं च हिन्दूधर्मे समुद्भूतौ विकारौ मनुते। श्रीमद्भगवद्गीतायामाश्रिता द्वन्द्वात्मकविवेचनपद्धति रनेन ग्रन्थेऽस्मिन् विवृता। सङ्घर्ष एव गीताया जीवनदर्शनमिति मतमुपन्यस्य भाष्यकारेण चतुर्वेदिना इह सोपानत्रयात्मिका पद्धतिरिह समाश्रिता। तद्यथा- क्रमागतस्य गीताध्यायस्य चिन्तनसंरचनाविश्लेष:, महाभारतसन्दर्भसङ्ग्रह:, गीतार्थविमर्शश्च। गीतायां कर्मोपासनाज्ञानरूपस्य काण्डत्रयस्यानुसन्धानमस्य मतेन नोचितम्। गीताध्यायान् विचारैककेषु विभज्यायं भाष्यं विरचयतीति विशेष:। अत्र प्रथमे भागे गीताप्रथमाध्याय एव विचारित:। अवशिष्टानामपि अध्यायानां
विशदविवेचनेन भाष्यपूर्तौ जातायां गीताभाष्यपरम्परायां महदिदमवदानं भविष्यति गिरिधारीलालचतुर्वेद- महोदयानामिति न संशीति:।

**कल्पवृक्ष: - नाट्यसङ्ग्रह: - हर्षदेवमाधव:. श्रीवाणी अकादेमी, ए-१२, हीरामोती टेनामेंट्स, सिद्धि काम्प्लेक्ससमीपम्, गुलाबसोपफैक्टरीप्रतीपम्, चाँदखेडा-३८२ ४२४, गान्धीनगरम्; २००१।**

कल्पवृक्ष: विविधविधासु काव्यरचना- प्रवीणस्य हर्षदेवमाधवस्य नवीनो नाट्यसङ्ग्रह:। अत्र लसन्ति कल्पवृक्ष- शीर्षकेनैव पञ्चरूपकाणि, कामधेनु: वर्तमानामिति च रूपकद्वयम्। एतेषु रूपकेषु वर्तमानकालिकी विसङ्गति:, भारतीया प्रज्ञा, सनातनी जीवनदृष्टि:

नूतननाट्यविधानम्, नवीनरङ्गपरिकल्पना राराजन्ते। कल्पवृक्ष-१ इति रूपकम् असकृत् रङ्गमञ्चे प्रयुक्तम्। अत्र योग-भोगयोर्द्वन्द्वात्मिकी स्थितिरतितरां मार्मिकतया निरूपिता। द्वितीये कल्पवृक्षे कल्पवृक्षं प्राप्यापि जनः केवलं पानीयमात्रमिच्छतीति चित्रितम्। तृतीये तु मनुष्यः कल्पवृक्षतले कामनासाम्राज्यं विस्तारयति, पूरितास्वपि कामनासु स्वाविवेकेन म्रियते। चतुर्थे कल्पवृक्षे हस्त्यन्धन्यायेन कल्पवृक्षं विरूपयन्ति अद्यतना मनुजाः। पञ्चमे कल्पवृक्षे च कल्पवृक्षोच्छेदनरतानां मनुजानामात्मघातात्मिका प्रवृत्तिः निरूपिता। कामधेनु- रिति रूपके सत्य-धर्म-शान्ति-सङ्कल्पादीनि पात्राणि, सन्ति, कामनाया नाशेन सह कामधेनुरपि विलुप्यत इत्यत्र वस्तु सचमत्कारं चित्रितम्। अन्तिमे वर्तमाननाम्नि रूपके वैज्ञानिकः वर्तमानेन सह

भूतःभविष्ययोरनुभवं युगपद्यथा स्यात् तादृशं यन्त्रं निर्माति। तेन सर्वं विपरिवर्तितं जायते।

एतेषु रूपकेषु दार्शनिकोऽवबोधः, चिन्तनम्, क्रान्तदर्शिप्रज्ञा च विद्यते।

**बुभुक्षा- (कथासङ्ग्रहः) वनमालीविश्वालः, पद्मजा प्रकाशनम्, इलाहाबादम्, २००१**

नीरवस्वन इति प्रथमः कथासङ्ग्रहः निपुणकथाकारस्य वनमालिनो विश्वालस्य सागरिकायां समीक्षितचरः। अस्मिन् कथा सङ्ग्रहे चतुर्विंशतिकथाः सङ्गृहीताः। तत्र अपूर्वं पारिश्रमिकमिति कथा पादत्राणकूर्चनकर्मपरायणस्य बालकस्य मार्मिकं चित्रणम्। कदा आगमिष्यति दूरभाषः, परधर्मो भयावहः, राजधानीयात्रा, लोभासक्तः कथाकारः इत्यादयः कथाः सव्यङ्ग्यं सनर्म विविधमनोरञ्जकप्रसङ्गैराधुनिकजीवनस्य तास्ताः छवीः प्रस्तुवन्ति। किन्नरः, दुश्चरित्रा, प्रतिशोध इत्यादिकथासु विडम्बना सममर्दारणं स्फुरति। 'दीपशिखायाः संस्कृतशिक्षे'ति कथा पतिना पत्न्याः प्रतारणं विषयीकरोति, 'आधुनिकाचार्य'श्च धार्मिकं पाषण्डजातम्। 'अभिशप्तो देवदासः' अन्धविश्वासस्य दारुणां परिणतिं प्रकटीकुरुते। अध्यापकस्य करुण कथा, सुखरामस्य सुखनिद्रा, बुभुक्षा चेति कथाः करुणरसाप्लावितं मनो विदधति पाठकस्य। इत्थं विविधभावनागर्भा आधुनिकसमाजस्य रीतिनीतिनिरूपणसम्पन्नाः इमाः कथाः आधुनिकसाहित्यसमृद्धिं परिचाययन्ति।

**Sanskrit Textual Criticism- विजयपण्ड्या, पार्श्वप्रकाशनम्, अहमदाबादम्, २००१**

निबन्धसङ्कलनेऽस्मिन् पण्ड्यामहोदयस्य संस्कृतसाहित्य- सम्बद्धानां लेखानां षोडशी राराजते। तत्रापि नाट्यसाहित्यस्य परिशीलनं विशिष्यते। एकादशसु लेखेषु स्वप्नवासवदत्त- अविमारक-मृच्छकटिक-विक्रमोर्वशीय-मुद्राराक्षस-मालतीमाधव-महावीरचरित-दूताङ्गद-हनुमन्नाटक-चन्द्रलेखाविजयोल्लाघराघवेति रूपकाणां तत्तत्पक्षस्य सूक्ष्मेक्षिकया विश्लेषणं विमर्शः च विहितः। स्वप्नवासवदत्ते स्वप्नप्रसङ्गः फ्रायडीयमनोविज्ञानदृष्ट्या प्रबन्धकारेण समीक्षितः। अविमारकस्य अनुशीलनं नवीनां मौलिकीं च दृष्टिं विदुषोऽस्य पुरस्करोति। अविमारकं परवर्ति रूपकं मन्यमानोऽयं भवभूतेः प्रभावं तत्र पश्यति, अविमारके विडम्बनपरत्वं च सम्यङ् निरूपयति। तृतीये लेखे मृच्छकटिकस्य दशमेऽङ्के धूताप्रवेशनिरूपणपरः प्रसङ्गः प्रक्षिप्त इति टीकाकारलल्लादीक्षितस्य आधुनिकानां च अध्येतॄणां मतं सप्रमाणं प्रत्याख्यातम्। चतुर्थे लेखे मृच्छकटिके नैक एव विटोऽपितु विटद्वयं पात्रभूतमिति सम्भावना पुरस्कृता। पञ्चमे लेखे विक्रमोर्वशीये पुरूरवसा दृष्टा विद्याधरदारिका न शिशुरपितु विवाहयोग्या कन्येति मतं दारिकाशब्दप्रयोगं कालिदासकृतं परीक्ष्य स्थापितम्। षष्ठे लेखे कालिदासो मायावादं नोरीकरोति, अन्यथा स विद्यते सर्वथा वेदान्तीति विचारः, सप्तमे मुद्राराक्षसस्य नाट्यशास्त्रसिद्धान्तदृशा अध्ययनम्, अष्टमे मालतीमाधवस्य वस्तुरचना, नवमे महावीरचरितस्य पाठ्यम्, दशमे भवभूतेः विरोधिनः कालिदासस्य प्रशंसका व्यञ्जनावादिन आसन्निति मतम्, एकादशे दूताङ्गदसमस्या, द्वादशे हनुमन्नाटकवस्तुविमर्शः, त्रयोदशे हेमचन्द्राचार्यस्य काव्यदृष्टिः, चतुर्दशे चन्द्रलेखाविजय प्रकरणम्, पञ्चदशे सोमेश्वरस्योल्लाघराघवनाटकम्, षोडशे कादम्बर्यां चन्द्रापीडचरित्रमिति विषयाः अत्र साधु प्रस्तुताः। पण्ड्यामहोदयः साहित्यपारावारपारङ्गत इति न संशीतिः।

**Essays On Sanskrit Poetics- डा० राजेन्द्रो नानावटीः, प्राच्यविद्याप्रतिष्ठानम्, महाराजसयाजीराव विश्वविद्यालयः वडोदरा,१९९८**

अस्मिन् ग्रन्थे अलङ्कारशास्त्रे कृतश्रमस्य राजेन्द्रनानावटीमहोदयस्य चतुर्दश निबन्धाः सङ्कलिताः। तत्र निबन्धद्वयं अलङ्काररीतिविषयकं वर्तते।तत्र वामनाभिमतं रीतिस्वरूपम् प्रमाणपुरस्सरं प्रतिपाद्य "सौन्दर्यमलङ्कारः" "अलङ्कृतिरलंङ्कार" इति सूत्रद्वयेन

"रीतिरात्माकाव्यस्य"ति सूत्रात् विरोधाशङ्कायाः साधु समाधानमकारि विदुषा ग्रन्थकृता। आत्मा देहं विनापि तिष्ठति, आसु तिसृषु रीतिषु रेखास्विव चित्रं प्रतिष्ठितं काव्यमिति वामनकथनात् यथा रेखाभिर्विना चित्रं न तिष्ठति तथैव रीतिभिर्विरहितं काव्यमपि न इति तत्र विवेकः। रीतिसिद्धान्तस्य अद्यतनकाले प्रसङ्गोपात्तत्वमपि विशदमिह विचारितम्। ग्रन्थकारो रीतिसिद्धान्तस्य विशेज्ञत्वेन सम्यक् प्रतिपादनमिह चकार, तत्र मम्मटविहितं वामनगुणादीनां गुणालङ्कारविवेकनिरूपणं तत्र साधु परीक्षितम् वामनीयश्च पक्षः सम्यक्तया पुनः स्थापितः। काव्यस्यात्मभूततत्त्वविषयके निबन्धे काव्यशास्त्रगता नैके सम्प्रदाया आत्मतत्त्वविवेकदृष्ट्या परामृष्टाः। तृतीये खण्डे संस्कृतनाटकानां प्रसङ्गविशेषा उद्घाटिताः। तत्र विदूषकस्य दण्डकाष्ठम्, तदीयं वयः, मालविकाग्निमित्रे नायिकाया विलम्बेनावतरणम्, भवभूतेः करुणो रस इति चत्वारो विषयाः सन्ति। एतेषु निबन्धकारस्य विशिष्टा दृष्टिरभिमतविशेषश्च परिलक्ष्यते।

**शैलीशास्त्रज्ञ भामह- डॉ० वा०के०लेले मान-सम्मान प्रकाशन, ४/४०, चन्द्रप्रकाश, कर्वे पथ, पुणे-४११ ००४, प्र०सं० १९९५ भामह's काव्यालङ्कार -A Stylistical and Methodological Study. लेखक-प्रकाशकौ- तौ एव, प्र०सं० १९९९।**

प्रथमो ग्रन्थो मराठीभाषोपज्ञो द्वितीयश्च आङ्ग्लभाषया ग्रथितः। द्वितीयस्तु प्रथमस्यैव रूपान्तरभूतः। अस्मिन् ग्रन्थद्वये अधीतिना श्रीमता लेलेमहोदयेन भामहविरचितकाव्यालङ्कारस्य विशिष्टमध्ययनं प्रस्तुतम्। तच्च शैलीशास्त्रदृशा भामहस्य अवदानं विशदयतितराम्। भामहः काव्यशैलीमर्मज्ञ इति वर्तते लेलेमहोदयस्य स्थापना। सा च साधु इह सत्यापिता। भामहस्य अलङ्कारविषये वक्रोक्तिविषये च या अवधारणा सा नितरां व्यापकं स्वरूपमनयोः क्रोडीकुरुत इति ग्रन्थकारस्य मतं सुविचारितमेव। काव्ये अन्तःसौन्दर्यं बाह्यसौन्दर्यं चेत्युभयमपि भामहस्याभिप्रेतम्। तच्च समग्रं काव्यसौन्दर्यं क्रोडीकरोति। सम्प्रति पाश्चात्त्यकाव्यशास्त्रे संरचनावादस्य उत्तरसंरचनावादस्य च ध्वज उत्तोल्यते। तद्दृष्ट्या भामहस्य विचाराः महत्त्वमावहन्ति। लेखकेन *एतद्ग्राह्यं सुरभिकुसुमं माल्यमेतन्निधेयं धत्ते शोभां विरचितमिदं स्थानमस्यैतदेव। मालाकारो रचयति यथा साधु विज्ञाय मालां, योज्यं काव्येष्ववहितधिया तद्वदेवाभिधानम्"* इति भामहोक्तेः काव्यप्रपञ्चनिरूपणे चरितार्थता परिव्याप्तिश्चेह विशदं विवृता। अन्तिमेऽध्याये तन्त्रयुक्तीनां

प्रतिफलनं काव्यालङ्कारे साधु प्रतिपादितम्। वस्तुतः द्वात्रिंशत्तन्त्रयुक्तयः कौटिलीयेऽर्थशास्त्रे, कामसूत्रस्य जयमङ्गलाटीकायाम्, विष्णुधर्मोत्तरपुराणस्य तृतीये खण्डे च सोदाहरणं विवेचिताः। कस्यापि शास्त्रग्रन्थस्य परीक्षणाय इमा निकषायमाणाः सन्ति। कस्यापि शास्त्रग्रन्थस्य समीक्षणाय परम्परासम्मता पद्धतिर्वर्तते तन्त्रयुक्तिभिस्तस्य शास्त्रस्य परीक्षणं नाम। परन्तु प्रायशः साम्प्रतिके काले इयं पद्धतिरप्रयुक्ता वर्तते। काव्यालङ्कारस्य तन्त्रयुक्तिदृशा समीक्षणं विधाय शैलीशास्त्रसम्मता संरचनावाददृष्ट्याऽपि उपादेया कापि दिगुन्मीलिता लेखकेन इति स सर्वथा साधुवादार्हः।

**वक्रोक्तिजीवितसङ्ग्रहः सङ्कलयिता - डा० शिकारीपुरकृष्णमूर्तिः अखिलकर्णाटक- संस्कृत- परिषद्, , संस्कृतम्, भारतीनगर, बेजाइ, मंगलौर-५७५ ००४, प्र०सं० १९९५ Kuntaka's Vakrokti And Literary Criticism- A Critical Estimate, लेखकः स एव, प्रका० मंगलौर विश्वविद्यालयः, प्र०सं० १९९४**

प्रथमे ग्रन्थे आङ्ग्लभाषायम् कुन्तककृतवक्रोक्तिजीवितस्य सारः समुपस्थापितः। स च समग्रग्रन्थस्य साकल्येन वैशिष्ट्यपरिज्ञानाय वक्रोक्तिप्रस्थानस्य च परिचयाय अलम्। द्वितीये ग्रन्थे वक्रोक्तिप्रस्थानस्य परिशीलनं विहितम्। भूमिकायां अन्यतमकाव्यशास्त्राध्येता डा० के० कृष्णमूर्तिः तथैव डा डी०एन०शानभागश्च कुन्तकस्य महत्त्वमुद्घाटयतः। शानभागेन कुन्तकस्य कालिदासमीमांसा विशदं विवृता। विदुषा लेखकेन कुन्तकात् प्राक् वक्रोक्तिस्वरूपविमर्शः, कुन्तकस्य काव्यचिन्तनवैशिष्ट्यम् वक्रोक्तिविचारस्य च महिमशालित्वमिह सम्यङ् निरूपितानि।

**ब्रह्मनाभिः- (काव्यसङ्ग्रहः) प्रफुल्लकुमारमिश्रः, स्वर्णप्रकाशनम्, ३३१, ए, तपस्या, श्रीअरविन्दनगरम्, चन्द्रशेखरपुरम्, भुवनेश्वरम्-७५१ ०१६**

प्रफुल्लकुमारमिश्रस्य चित्रकुरङ्गी इति संस्कृतकवितासङ्कलनं पूर्वं १९९५ई० वर्षे प्रकाशितम्। अस्मिन् द्वितीये तस्य सङ्कलने मुक्तच्छन्दोरचिताः विंशतिः कविताः सङ्कलिताः, तासु काचन पूर्वं विविधपत्रिकासु प्रकाशिताः दृष्टाः। भावधारा आसु

कवितासु झरीयति। हर्षदेवमाधव इवायमपि कविः वैदेशिकभाषाशब्दानां यत्र तत्र प्रयोगं विदधाति चमत्काराधानाय, आधुनिकीं च संवेदनामङ्गीकरोति। कवितासु क्वचित् सन्दिग्धार्थता च्युतसंस्कृतिश्च दरीदृश्यते। तद्यथा-

*अशून्यं हृदयं/ शून्यायिते वागते/ निश्चिन्ताः चिन्ताजाले नौकाद्वयं/हताशायाः व्याधमुखे क्षिपतीयं वेला* "(पृ०३४) इति तिमिरसंज्ञककवितायामाह कविः। अत्र 'निश्चिन्ताः' इति कस्य विशेषणम्? न कोऽपि पुल्लिङ्गधारी दृश्यते। वेला नौकाद्वयं क्षिपति चिन्ताजाले हताशाया व्याधमुखे चेत्यर्थोऽत्र गम्यते। अत्र हताशाया व्याधमुखमेव चिन्ताजालमिति रूपकमनुसन्धेयम्। कवितानां वैविध्यं नूतनविषयचयनं च प्रभावशालि वर्तते।

**कथाकल्पः -(कथासङ्ग्रहः) शिवसागरत्रिपाठी, मातृशरणम्, ए-६५, जनताकोलोनी, जयपुरम्, प्र०सं०२००१**

कथाकल्पे नव कथाः सङ्कलिताः। सर्वा अपि कथा अद्यतनीं स्थितिं विषयीकुर्वन्ति। पुस्तककृमिः वन्ध्या चेत्याद्याः कथाः सामाजिकीं विसङ्गतिं विषयीकुर्वन्ति। हुतात्मसौहृदम् ललनालोप्तृमिति कथाद्वयी कश्मीर-पाकस्थानगतां राजनैतिकीं स्थितिं भारतीयसैनिकानां हुतात्मत्वं च मार्मिकतया निरूपयति। सौन्दर्यबोधस्य परिष्कारः, संवेदनानां गहनता भावततिश्चात्र प्रभविष्णुतां प्राप्ताः। कथाकारस्य शिवसागरत्रिपाठिनो भाषा प्रसादसम्पन्नापि श्लक्ष्णमसृणा सुषमासंवलिता वलयति मनः, कलयति च कामपि कल्पनासम्भारम्।

**Modern Sanskrit Plays - A Sociological Introspection- ऋता चट्टोपाध्याया, संस्कृतपुस्तकभण्डारः, कोलिकाता, १९९९**

आधुनिकसंस्कृतसाहित्याध्येतृषु चट्टोपाध्याया ऋताया नाम सुविश्रुतं वर्तते। विदुष्याऽनया पूर्वमपि समकालिकसंस्कृतनाटकमाश्रित्य प्रकाशिताः अनुसन्धानपराः प्रबन्धाः शोधनिबन्धा वा। अस्मिन् ग्रन्थे १९७०ई०-तः १९९८ई०-वर्षं यावत् प्रकाशितानां प्रायशो द्विशतं संस्कृतरूपकाणामनुशीलनं प्रस्तुतम्। प्रथमेऽध्याये परिशीलनार्हरूपकाणां सामान्यपरिचयः प्रस्तुतः, द्वितीये तेषां समाजशास्त्रदृष्ट्या वस्तुवैशिष्ट्यम् निरूपितम्, तृतीये तत्रत्याः शिल्पगताः प्रयोगाः चतुर्थे च समकालिकसंस्कृतनाट्यसाहित्यस्य नवीनाः प्रवृत्तयः समीक्षिताः। समकालिकसंस्कृतरूपकेषु भाषागताः नवीनाः प्रयोगा नितरामवधेयाः।

लेखकया महता श्रमेण एतेषु रूपकेषु शैलीगतं वैशिष्ट्यं, नूतनाभाणकानां प्रयोगाः नवीनशब्दप्रयोगाश्च परिशीलितानि। समकालिकसंस्कृतनाट्यसाहित्यवैशिष्ट्यपरिज्ञानाय ग्रन्थोऽयमुपादेयः।

**पाणिनीय और सारस्वतीय पारिकभाषिक संज्ञाओं का तुलनात्मक अध्ययन - डा० कमलाप्रसादपाण्डेयः, भारतीयविद्याप्रकाशनम्, दिल्ली/ वाराणसी, प्र०सं० १९९९**

व्याकरणशास्त्रस्य विशदानुशीलनपरे शोधप्रबन्धेऽस्मिन् चतुर्षु अध्यायेषु प्रथमे समानानुपूर्विकाः संज्ञाः, द्वितीये पर्यायभूताः संज्ञाः, तृतीये केवलपाणिनीयाः संज्ञाश्चतुर्थे च केवलसारस्वतीयाः संज्ञाः परिशीलिताः। प्रत्येकं संज्ञायाः निरुक्तिः, इतिवृत्तम् औचित्यं च विस्तरेण विचारितम्। सन्दर्भग्रन्थत्वेनास्य प्रबन्धस्य उपादेयता निर्विवादैव, केवलं ग्रन्थस्यान्ते समस्तानां संज्ञानां अकारादिक्रमेण पृष्ठसंख्यानिर्देशपुरस्सरं सूची न दत्ता इति गुणसन्निपाते एकः दोषः।

**कालसर्वस्वम्- महामहोपाध्यायः कृष्णमिश्रः, सम्पादकः डा० विश्वनाथस्वाईं, राष्ट्रियसंस्कृतसंस्थान साहाय्यद्वारा सम्पादकेन प्रकाशितम्, संविदि, १५, महोदधिमार्केट, पुरी-७५२ ००१, प्र०सं०१९९७।**

कालमधिकृत्य भूयान् विचारो भारतीयपरम्परायां विहितचरः। तत्र विविधव्रतोत्सवादीनां कालनिर्णयविवेचनं अष्टादशख्रिस्तीयशतकभवेन कृष्णमिश्रेण विश्वकोशात्मके कालसर्वस्वग्रन्थे विहितम्। पुरीस्थ-श्रीजगन्नाथवेदकर्मकाण्डमहाविद्यालये धर्मशास्त्रप्राध्यापकेन विश्वनाथ- स्वाईमहोदयेन मञ्जूषाख्यमौलिकटिप्पणसंवलितमस्य ग्रन्थस्य सम्पादनमकारि। भूमिकायां धर्मशास्त्रपरिचयः, धर्मशास्त्रगतं निबन्धसाहित्यम्, ग्रन्थकारस्य कृष्णमिश्रस्य जीवनं कालनिर्णयः कृतित्वं तत्कृतस्यकालसर्वस्वस्य वैशिष्ट्यमिति विषया सम्यक् गवेषणापुरस्सरं विवेचिताः।

**हर्षचरितमञ्जरी- प्रणेताकाशिनाथमिश्रः, प्रकाशकः नन्दकिशोरसिंहः, जानकीप्रकाशनम्, अशोकराजपथ, चौहत्ता, पटना, प्र०सं० १९९८**

उदयनाचार्य- कर्णाटकराजतरङ्गिणी- विद्यापतिशतक - प्रभृतिविविधसंस्कृतप्रबन्धप्रणेतृत्वेन प्रथितयशसः काशिनाथमिश्रमहोदयस्य यशःसुरभिसहकारमञ्जरीव संस्कृसाहित्यपाठकानां हर्षवर्धनीयं हर्षचरितमञ्जरी सरलैरपि परिष्कृतैः प्रौढैरप्यक्लिष्टैरनुष्टुब्भिः बाणस्यहर्षचरितरसं सरसं सन्निधापयति अष्टभिः स्तबकैः। प्रतिस्तबकं पञ्चपुष्पाणि विकसितानि वर्तन्ते येषु साकल्येन प्रायशः त्रिसहस्रं श्लोका विलसन्ति। संस्कृतसाहित्यन्तर्गतानां गौरवग्रन्थानामेतादृशानि रूपान्तराणि सर्वथा अपेक्ष्यन्ते, यैः मूलग्रन्थस्य जटिलतामपहाय तद्गतः परिष्कारः काव्यसौन्दर्यम् आस्वादश्चाविकलम् अविरलमनुभा- व्येरन्। रूपान्तरकारेण वस्तुतः मौलिकी रचनापि विहिता बाणभट्टस्य समग्रं सौन्दर्यमपि अक्षतं रक्षितमिति विलक्षणता अत्र रचनायाः। दिङ्मात्रमुदाह्रियते -

पक्वानां कपिकच्छूनां गुच्छाच्छोटनतत्पराः।
कन्दान् विदलयामासुर्मुचुकुन्दस्य चञ्चलाः।।
वात्याघातपरिक्लिष्टविहगानां मुखोद्गतैः।
सीकरैः सिच्यमानाङ्गा दुद्रुवुः प्रबलानिलाः।।
प्रखरातपजालेषु धावमानाः समन्ततः।
मृगतृष्णातरङ्गिण्यां सन्तरन्त इवाभवन्।।
तापोच्छ्र्युष्यच्छमीवृक्षकाण्डेषून्नादतत्पराः।
मरूल्लङ्घनजङ्घाला पवना भीषणा ववुः।।
(पृ० ४६-४७)

इति द्वितीयस्तबके निदाघवर्णनात्। तथैव-

अस्ताशैलशिरोरत्नभूषणस्य रवेः कराः।
वानीरमञ्जरीप्रख्या विस्रंसनपरा बभुः।।
रोमन्थमन्थरारण्यस्थलीषु मृगमण्डली।

शाद्वले मृदुलस्पर्शे निषण्णा समदृश्यत।।
चक्रवाकवधूटीनां विरहार्तिसमुद्भवाः।
गिरौ शुश्रुविरे दीनास्तीरेषु सरितां मुहुः।।
गेहोपान्तप्ररूढेषु पादपेषु सुखासिकाम्।
दधाना ददृशे स्वैरं वाचाला चटकावली।। (पृ० ७४-७५)।

इति तत्रैव बाणभट्टस्य ग्रामवर्णने।

**नखचिह्न- (निबन्धसङ्ग्रहः) हर्षदेवमाधवः, श्रीवाणी अकादेमी, ए-१२, हीरामोती टेनामेंट्स, सिद् धि काम्प्लेक्ससमीपम्, गुलाबसोपफैक्टरीप्रतीपम्, चाँदखेडा-३८२ ४२४, गान्धीनगरम्; २००१।**

सङ्ग्रहेऽस्मिन् हर्षदेवमाधवस्य द्वादश समीक्षापरकाः शोधपरका वा लेखाः सङ्कलिताः। तेषु नव लेखा गुर्जरभाषायाम्, लेखाद्वयम् हिन्द्या एकश्च लेख आङ्ग्लभाषयोपनिबद्धः। शिवताण्डवस्तोत्रम्, तान्त्रिकदृष्ट्या गायत्रीमन्त्ररहस्यम्, श्रीकृष्णः शरणं मम इति मन्त्रस्य तान्त्रिकविवेचनम्: इति विषयानधिकृत्य कृतास्त्रयो लेखा धर्मदर्शनरहस्यविवेचनपराः। अर्वाचीनसंस्कृतलघुकथा, एकविंशतितमे शतके संस्कृते साहित्यरचना संस्कृतसम्भाषणञ्चेति विषयानाश्रित्य निबद्धाः निबन्धा आधुनिककाले संस्कृतसाहित्यस्य संस्कृतस्य च स्थितिं गभीरदृशोन्मीलयन्ति। कालिदास-भारवि-भवभूत्यादीनां कृतित्वं अवशिष्टेषु लेखेषु समीक्षितम्। कृतिनिष्टसमीक्षाया उपोद्घातो हर्षदेवमाधवेन समकालिकसंस्कृतसाहत्ये विहितः, स च सर्वथा श्लाघ्यः।

**नरनारायणानन्दमहाकाव्यम्- श्रीवस्तुपालप्रणीतम्, सम्पादकाः- चीमनलालदयालः, अनन्तकृष्णशास्त्री प्रथमरतिविजयश्च। प्रका०- श्री नागपुर जैन श्वेताम्बरमूर्किपूजक तपागच्छ सङ्घः इतवारी, नागपुरम्- ४४० ००२।**

त्रयोदशशतकोद्भवस्य वीरधवलनरे◌ामात्यस्य वस्तुपालस्य कवित्वं वदान्यता धार्मिकसांस्कृतिकावदानं च सर्वथा विश्रुतमेव। तस्येदं नरनारायणानन्दमहाकाव्यं पूर्वं गायकवाड-प्राच्यविद्याप्रकाशनमालायां प्रकाशितम्, सम्प्रत्यनुपलभ्यमानं पुनः

विशद भूमिकया विभूष्य प्रकाशितमिति सन्तोषास्पदम्।

**श्रावकधर्मविधिप्रकरणम् हरिभद्रसूरिकृतम्, मानदेवसूरिनिर्मितवृत्तिसमेतम्। सम्पादकः - चतुरविजयोमुनिः। रत्नाकरावतारिकारत्नप्रभसूरिनिर्मिता वादिदेवसूरि- विरचित- श्रीप्रमाणनयतत्त्वालोकालङ्कारवृत्तिरूपा, संशोधकौ- श्रावकपण्डितौ श्रीहरगोविन्ददासबेचरदासौ। उभयोः प्रकाशकः- एवचनप्रकाशनम्, ४८८, रविवारपेठ, पुणे ४११ ००२**

श्रावकधर्मविधिप्रकरणं हरिभद्रसूरेः श्रावकानां कृते उपदेशामृतवितरणं श्रावकचर्यानिर्देशात्मकं शास्त्रकाव्यम् प्राकृतगाथानिबद्धम्। तस्य संस्कृतव्याख्यासहितमिदं संस्करणं सम्प्रदायदीक्षितानां अनुसन्धित्सूनां च कृते सर्वथा उपादेयम्।

द्वादशशतकोद्भवो वादिदेवसूरिः तार्किकचक्रवर्तित्वे प्रख्यातः। तस्य शिष्यो रत्नप्रभसूरिरपि वादिशिरोमणिरभवत्। तेन निर्मिता वादिदेवसूरिविरचित श्रीप्रमाणनयतत्त्वालोकालङ्कारस्येयं वृत्तिः रत्नाकरावतारिका जैनधर्मदर्शन- परम्परायां प्रथते। अष्टसु परिच्छेदेष्वत्र कपिल-गौतमादिप्रतिपादितस्य प्रमाणस्वरूपस्य खण्डनम्, स्वदर्शनसम्मता प्रमाणव्यवस्था, स्मृतिप्रामाण्यव्यवस्थापनम्, अनुमाने शब्दप्रमाणान्तर्भावनिराकरणम्, पौद्गलिकव्यवस्थापनम्, हेत्वाभासनिरूपणम्, नयस्वरूपाख्यानम्, नादस्वरूपनिरूपणं चेति विषया विशदं विमृष्टा। न्यायदर्शनपरम्परायां महत्त्वपूर्णोऽयं ग्रन्थः।

# सम्पादकीयम्

(शब्दमायेति शब्दितम्)

शब्दस्वरूपमधिकृत्य विप्रतिपद्यन्ते तान्त्रिकाः। शब्दो नित्यः आहोस्वित् कार्य इति विषयमधिकृत्य महती खलु विचारपदवी समतिक्रान्ता तान्त्रिकैः शास्त्रार्थगहनेंऽध्वनि। शब्दो वर्णात्मकः ध्वन्यात्मकश्चेति पक्षाभ्यां विकल्प्य वर्णात्मक स इति पक्षमवलम्ब्य वर्णानामुच्चरितप्रध्वंसितत्वात् पूर्वपूर्ववर्णोच्चारण–जनतिसंस्कारसहकृत–अन्तिमवर्णो वाचक इति पक्षं द्रढयन्तः केचन शास्त्रकाराः शब्दस्यानित्यत्वं साधयन्ति। तावतैव शब्दस्य व्यवहारसाधनत्वं सिद्धयति, तत्रैव च तस्य प्रयोजनं पर्यवसितमिति एका सरणिः।

अपरा सरणिस्तु शब्दस्य भर्तृहरिप्रमुखैः वैयाकरणैः प्रख्यापिता दृश्यतेऽतिप्रशस्ततमा यत्र परब्रह्म–पर्यायभूतः शब्दब्रह्मेति शब्दितः जगदभिन्न–निमित्तकारणीभूतो नित्यः शब्द इति जेगीयते मनीषिभिः। तत्रैकतः परा–पश्यन्ती–मध्यमा–वैखरीभेदेन शब्दस्य चतुर्धा विभागो विकल्पितः व्यवहारसाधनता चास्य सम्यग्व्यवस्थापिता च। अपरतश्च अर्थजगतः विवर्तकारणरूपं शब्दतत्त्वं शब्दब्रह्मेति शब्दितम् ''यतः प्रवृत्तिर्भूतानि येन सर्वमिदं ततम्'' इति मन्त्रवर्णः तत्रैकवाक्यतामेति। अपरोऽपि मन्त्रः तमेवार्थं खल्वेवमाह–

''वागेव विश्वाभूवनानि जज्ञे वाच इत्सर्वममृतं यच्च मर्त्यम्।
अथेद् वाग् बुभुजे वागुवाच पुरुत्रा वाचो न परं यच्च नाह।।'' इति

तदस्मिन् 'शब्दब्रह्मणि निष्णातस्य परब्रह्म अवभाति, शब्दब्रह्मानु–सन्धित्सोः परं च तत्परायणम्, तदेवास्य परमपुरुषार्थसाधनमिति दर्शनं सुव्यवस्थितं दृश्यते। श्रीमदभागवतेऽपि

शब्दब्रह्मात्मनस्तस्य व्यक्ताव्यक्तात्मनः परः।
ब्रह्मावभाति विततो नानाशक्त्युपबृंहितः।। (श्रीमद्भा. 3.12.48)

एतद्दर्शनं तु तथा समुपबृंहितं तथा साङ्गोपाङ्गोपनिबद्धं यथैवास्यैव दर्शनस्य विततं रूपं शाङ्कराद्वैतवेदान्ते दर्शनरान्तररूपेण समानान्तरेण सुविन्यस्तं दृश्यते इति केचनार्वाचीनविद्वांसः प्रतिपद्यन्ते।

परन्त्वरत्यत्र शब्ददर्शनेऽपरोऽपि कश्चन पक्षः सः प्रायशस्तान्त्रिकैरतथा न परामृष्टो नापि व्यापकतयास्य विचारः प्रवर्तित इति साश्चर्यं वयमुत्पश्यामः। तद्दर्शनं शब्दस्य मायासायुज्यतामुपन्यस्यति। देव्यथर्वशिर्षोपनिषदि दृश्यते मन्त्रवर्ण्यः :–

''वाङ्माया ब्रह्मभूः'' इति

तत्र सामानाधिकरण्यप्रयोगदर्शनेन वाचः मायया तादात्म्यं सुस्पष्टं भवति। मायात्मा वागवे ब्रह्मभूः सर्वप्रसवित्री इत्यर्थो ज्ञायते। अनेन परब्रह्मणः शक्तिस्थानीया माया वाग्रूपा वर्तते यतः सर्वस्यार्थजगतः प्रवृत्तिर्भवतीति ज्ञातुं शक्यते।

इदं तु दर्शनं परब्रह्मणः दृष्ट्या शब्दब्रह्मणः मायात्मनोऽवरत्वं प्रख्यापयति। दृश्यते खलु श्रुतिषु :—

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।
शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति।।

(मैत्रायण्यु. 6.22)

''जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते'' इति (गीता 6.44) भगवद्गीतावचनमपि मायात्मनः शब्दब्रह्मणोऽतिवर्तनं ब्रूते।

तत्र ब्रह्मविन्दूपनिषदि दृश्यते—
शब्दमायावृतो यावत्तावत्तिष्ठति पुष्करे।
भिन्ने तमसि चैकत्वमेकमेवानुपश्यति।। (15) इति

अत्रापि शब्दमायेति पदेन शब्दः मायास्थानीयो भवतीति स्पष्टम्। सा च माया अविद्यारूपेति मन्त्रस्योत्तरार्धगतेन 'तमसि' इति पदेन स्पष्टतरं भवति। निर्विकारं खलु अमृतं ब्रह्म अविद्यया भेदरूपेण विवर्तते इति प्राचीना स्मृतिः। प्राचीनामभियुक्तोक्तिमुद्धरति भर्तृहरिरपि वाक्यपदीयस्वोपज्ञोवृत्तौ :—

''तथेदममृतं ब्रह्म निर्विकारमविद्यया।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते।।
ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम्।
विवृतं शब्दमात्राभ्यस्तास्वेव प्रविलीयते।।'' इति

शब्दस्य मायास्थानीयत्वेनैवास्याधस्तादुक्तमन्त्रस्य व्याख्यानं सुस्पष्टतरं भविष्यति। एवं ह्याह —

''सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिनिष्यन्दमानाम्।
उतान्ये विदुरन्यामिव च एनां नानारूपामात्मनि सन्निविष्टाम्।।'' इति।

अतएव ''वागेव प्रकृतिः परा'' इति गीयते। प्रकृतिस्त्रिगुणात्मिका मायेति वेदान्तिनो वदन्ति। सा हि ब्रह्मणः शक्तिस्थानीयास्ति। शक्तिरूपत्वे स्वीकृते शक्ति—शक्तिमतोऽभेद इति शब्दाद्वैतवादस्य प्रतिष्ठापि सुतरां वज्रलेपायिता भविष्यति।

परन्तु शब्दस्य मायाऽविद्यास्थानीयता वेति दर्शनं किमिति न तथा प्रथितं नापि सुविस्तृतमुपन्यस्तमिति विचारयन्तु धीधना इति सप्रश्रयं विनिवेदयामो वयम्। संस्कृतव्याकरणशास्त्रीयशोधक्षेत्रेऽभिनवं किञ्चिद् दर्शनमेतत्प्रख्यापयिष्यतीति दृढं विश्वसिमो वयम्।

अत्रास्मिन् सागरिका—व्याकरणशास्त्रीयविशेषाङ्के नैके विषयाः आधुनिकानुसन्धित्साप्रवृत्तिं प्रदर्शयतीति ते ते रचयितारः सभाज्यन्ते साधुवादैः कृतज्ञतातितिभिश्चेति शम्।।

प्रबन्धसम्पादकः

# त्रिमुनि-काल-विमर्श:

कृष्णदेव: सारस्वत:

वैदिकै: ऋषिभि: महादेवस्य शब्दस्य वर्णनं कुर्वद्भि: 'त्रयो अस्य पादा:' इत्युक्तम्। पतञ्जलिना तत्र व्याख्यायां 'त्रयो अस्य पादा: = त्रय: काला भूत–भविष्यद्–वर्तमाना:' इत्युक्तम्। (महाभाष्य पस्पशाह्निक)

महर्षिणा पाणिनिना '०तत्कालस्य' १.१.७०, 'ऊकाल०', १.२.२७, कालोपसर्जने०' १.२.५७, 'काला:' २.१.२८, 'पूर्वकाल०' २.१.४९, 'काला:०' २.२.५, 'कालाध्वनो:०' २.३. ५, '०काले०' २.३.६४, 'कालविभागे०' ३.३.१३७, 'काल०' ३.३.१६७, '०पूर्वकाले' ३.४.२१, '०कालेषु' ३.४.५७, 'कालेभ्य:' ४.२. ३४, 'कालात्०' ४.३.११, 'कालात्०' ४.३.४३, 'कालात्' ५.१.७८, 'कालाद्' ५.१.१०६, 'कालप्रयोजनाद्०' ५.२.८१, 'कालेषु' ५.३.२७, 'काले' ५.३.१५, 'काले' ५.४.२८, 'कालात्०' ५.४.३३, '०काल०' ६.२.२९, '०काल०' ६.२.१७०, '०काल०' ६.३.१५. '०काल०' ६.३.१७, '०अकालात्' ६.३.१८, 'अकाले' ६.३.८१, अष्टाविंशतिधा कालशब्दस्य प्रयोग: कृत:।

तत्र ''तपरस्तत्कालस्य'' १.१.७०, इति सूत्रे कालशब्द: वर्णबोधक: 'कालसहचरितो वर्णोऽपि काल एव' (महा. १.१.६९) 'ऊकालोऽज्झस्वदीर्घप्लुत:' इति सूत्रेऽपि कालशब्द: वर्णबोधक एव (महा. १.२.२७) तत्कालकाल, ऊकालकाल इति उत्तरपदलोपेन अर्थावगति:।

'कालोपसर्जने च तुल्यम्' १.२.५७ इति सूत्रेण पाणिने: कालविषयको विचार: सुस्पष्ट:। तन्मतेन काल: अशिष्य:, तस्य परिभाषा अकथनीया:, तस्य भेदा: अकर्त्तव्या:, कस्मात्? अर्थस्य अन्यप्रमाणत्वात्। लोकतोऽर्थावगते:। यैरपि व्याकरणं न श्रुतम्, तेऽप्याहु:, इदमस्माभिरद्य कर्त्तव्यम्, इदं श्व: कर्त्तव्यम् इदं ह्य: कृतमिति। नैवं व्युत्पाद्यन्ते। यश्च लोकतोऽर्थ: सिद्ध:, किं तत्र यत्नेन। (काशिका १.२.५७)

महामुनि: भर्त्तृहरि: कालविदां कालविषयिकीं धारणां स्पष्टीकुर्वन्नाह–

आदित्यग्रहतारादि–परिस्पन्दमथापरे।
भिन्नमावृत्तिभेदेन कालं कालविदो विदु:।। इति

तेन कालस्तु क्रियाविशेष इष्यते। (न्यास: १.१.७०) कालस्तु क्रिया (न्यास. १.२.२८)

भाष्येऽपि पतञ्जलि: कं पुनर्भवान् कालं मत्वाऽऽह? येन मूर्त्तीनां उपचयाश्च अपचयाश्च लक्ष्यन्ते, तं कालमित्याहु:। तस्यैव हि कयाचित् क्रियया युक्तस्याऽहरिति च भवति, रात्रिरिति च। कया क्रियया? आदित्यगत्या। तयैवाऽसकृदावृत्तया 'मास:' इति भवति, 'संवत्सर: इति च भवति।' (महाभाष्य २.२.५)

'अह:' 'रात्रि' 'मास' 'मुहूर्त' 'सर्वरात्र' इत्यादय: शब्दा: कालवाचिन: (२.१.२८) पूर्वकाल, अपरकाल इति तस्य भेद: (२.१.४९) यद्यपि काल: प्रस्थादिवत् सर्वतो मानं न भवति, तथापि परिच्छेदहेतुत्वात् परिमाणमित्युच्यते। 'मासो जातस्य' इत्यत्र मास: जातस्य परिच्छेदको न, नापि जननक्रिया। कोऽर्थस्तस्य इति चेत् जननक्रियाया ऊर्ध्वमस्य मासो जात:, अतीते मासेऽस्य जननम् इति। अनेन प्रकारेण मासो जातस्य परिमाणम् (पदमञ्जरी २.२.५)

कालस्य क्रिया–गुण–द्रव्यै: साकल्येन संबन्ध: अन्यन्त: संयोग उच्यते। मासं अधीते। संवत्सरम् अधीते। मासं कल्याणी। संवत्सरं कल्याणी। मासं गुडधाना: (काशिका २.३.५)

पाणिनिना कालशब्दस्यान्यावपि पर्यायवाचिनौ 'समय' (३.३.१६७) 'बेला' (३.३.१६७, ४.३.१६) शब्दावपि प्रयुक्तौ।

कालस्य प्रथमो भेद: भूत:। यस्य स्वसत्ता व्यपवृक्ता तत्सर्वं भूतशब्देनोच्यते। काल एव भूतादिशब्दवाच्यत्वेन सुप्रसिद्ध:। तत्र केचिन्नित्यं कालं परार्थानामनुज्ञा प्रति–बन्धार्थाभ्यां स्थित्युत्पत्तिप्रलयहेतुमाचक्षते। तत्र संसर्गिसूर्यादिक्रियाभेदाश्रयो मासादिभेदव्यवहारो भूतादिव्यपदेशश्च। अन्ये तु प्रसिद्धपरिमाणक्रिया सूर्यादिकर्तृका अप्रसिद्धपरिमाणाया: क्रियाया: परिच्छेदायोपात्ता अहरादिव्यपदेश्या काल इत्याहु:। (प्रदीप महाभाष्य ३.४.८४)।

धातौ भूते। धातुर्वै शब्दो, न च शब्दस्य भूत–भविष्यद्–वर्तमानतायां संभवोऽस्ति। शब्देऽसंभवादर्थे कार्यं विज्ञास्यते। क: पुनर्धात्वर्थ:? क्रिया। क्रियायां भूतायाम्। (महाभाष्य ३.२.८४)

तस्य भूतस्य चत्वारो भेदाः। भूतसामान्यम्, तत्र क्रियायां लुङ्। अनद्यतने भूते लङ्। अनद्यतने परोक्षेभूते लिट्। अनद्यतनेऽपरोक्षे भूते स्म उपपदे लट्। (३.२.११०, १११, ११५, ११९)

'प्रकृतः कटं देवदत्तः' इत्यत्र आदिकर्मणि निष्ठा। 'न्याय्या त्वाद्यपवर्गात्'। न्याय्या त्वेषा भूतकालता। कुतः? आद्यपवर्गात्। आदिरत्राऽपवृक्तः। एष च नाम न्याय्यो भूतकालो यत्र किंचिदपवृक्तं दृश्यते। (महाभाष्य ३.२.१०२)

आदिभूते एवावयवे समूहरूपस्य समाप्तत्वादस्ति भूतत्वोपपत्तिरित्यर्थः। तदुक्तं हरिणा—

समूहः सः तथाभूतः प्रतिभेदं समूहिषु।
समाप्यते ततोऽभेदे कालभेदस्य संभवः।। इति

(प्रदीप. ३.२.१०२)

किं शक्यन्त एते शब्दाः प्रयोक्तुमित्यतो न्याय्यैषा भूतकालता? नावश्यं प्रयोगादेव। क्रियानामेयमत्यन्तापरिदृष्टाऽनुमानगम्याऽशक्या पिण्डीभूता निदर्शयितुं यथा गर्भो निर्लुठित। साऽसौ येन येन शब्देनाऽभिसंबध्यते तावति तावति परिसमाप्यते। तद्यथा—कश्चित् पाटलिपुत्रं जिगमिषुरेकमहर्गत्वाऽऽह— 'इदमद्य गतमिति'। न च तावनाऽस्य व्रजिक्रिया परिसमाप्ता भवति। यत्तु गतं तदभिसमीक्ष्यैतत् प्रयुज्यते—'इदमद्यगतमिति'। एवमिहापि यत्कृतं तदभिसमीक्ष्यैतत् प्रयुज्यते—'प्रकृतः कटं देवदत्तः' इति। यदा हि वेणिकान्तः कटोऽभिसमीक्षितो भवति, 'प्रकरोति कटम्' इत्येव तदा भवति।

(महाभाष्य— ३.२.१०२)

यावदभिमतफलप्रयोजनसकलक्रियापरिसमाप्तिर्न भवति, तावद्वर्तमानत्वमेव क्रियाया न तु भूतत्वम्। ततश्च वस्तुशून्या एवाऽमी शब्दाः प्रयुज्यन्ते इति भावः।

परं = प्रधानं प्रमाणं प्रत्यक्षम्। अनुमानस्य तत्पूर्वकत्वात्, तेन क्रिया न दृश्यते। अवयवसमूहस्य युगपदनुत्पादानवस्थानाच्च तदुक्तम्—

क्रमात् सदसता तेषामात्मानो न समूहिनाम्।
सद्वस्तुविषयैर्यान्ति संबन्धं चक्षुरादिभिः।। इति

शब्देन प्रत्याय्यमाना येन येनावयवेन संबध्यते, समूहरूपा क्रिया, तस्मिन्नेवावयवे समाप्यते। तत्रावयवानां कालत्रययोगात् क्रियाया अपि कालत्रययोगः। (प्रदीप ३.२.१०२)।

अद्यतनेऽपि अद्यतनो विद्यते। कथम्? व्यपदेशिवद्भावेन। (महाभाष्य ३.२ १११)

यथा मुख्ये भेद आधाराधेयभावो भवति, 'तटे तिष्ठति' इति, तथेहापि समुदायावयवभेदाश्रयेण समुदायेऽद्यतनेऽवयवा अद्यतनाः सन्तीत्यनद्यतनो न भवतीत्युच्यते। ननु तत्त्वतोऽवयवव्यतिरिक्तोऽत्र समुदाय आधारोऽस्ति। तदुक्तं हरिणा –

कालस्यापरं कालं निर्दिशन्त्येव लौकिकाः।
न च निर्देशमात्रेण व्यतिरेकोऽनुगम्यते।। इति

(प्रदीप ३.२ १११)

तत्र न्याय्यो वर्त्तमानकालो, यत्रारम्भोऽनपवृक्तः, प्रवृत्तस्याविरामेऽपि आरभ्योऽनपवृक्तः। 'भुङ्क्ते देवदत्तः' इत्यत्रापि देवदत्तो ह्यवश्यं भुञ्जानो हसति वा जल्पति वा पानीयं वा पिबति।

उक्तं हरिणा–

व्यवधानमिवोपैति निवृत्त इव दृश्यते।
क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः।।
न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्त्तते।
सर्वैव हि क्रियाऽन्येन संकीर्णेवोपलभ्यते।।
तदन्तरालदृष्टा वा सर्वैवावयवक्रिया।
सादृश्यात्सति भेदे तु तदङ्गत्वेन गृहयते।।

(प्रदीप ३.२.१२३)

नित्यप्रवृत्ते 'तिष्ठन्ति पर्वताः' स्रवन्ति नद्यः' इत्यादौ असत्यपि कालविभागे प्रयोगादेव कालविभागो ज्ञास्यते। यतोहि भूतभविष्यद्वर्तमानानां राज्ञां याः क्रियास्तास्तिष्ठतेरधिकरणम्। 'तिष्ठन्ति पर्वताः' इत्यत्र संप्रति ये राजानस्तेषां वा क्रियास्तासु वर्त्तमानासु। 'स्थास्यन्ति पर्वताः' इत्यत्र इत उत्तरं ये राजानो भविष्यन्ति तेषां याः क्रियास्तासु भविष्यन्तीषु। 'तस्थुः पर्वता इत्यत्र ये राजानो बभूवुस्तेषां याः क्रियास्तासु भूतासु। (महाभाष्य ३.२.१२३)

प्रसिद्धपरिमाणा क्रियैव क्रियान्तरपरिच्छेदात् काल इत्युक्तम्। तत्र राज्ञां स्थितिर्भूतादिभेदेन भिन्ना पर्वतादिस्थित्यादेर्भेदिकेति क्रियारूपत्वं कालत्रयोपयोगश्चोपपन्न इत्यर्थः।

उक्तञ्च हरिणा–

परतो भिद्यते सर्वमात्मा तु न विकल्पते।
पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते।।
प्रसिद्धभेदा व्यापारा विरूपावयवक्रियाः।
साहचर्येण भिद्यन्ते सरूपावयवक्रियाः।। इति।।

अपर आह – नास्ति वर्तमानः काल इति।

अपि चात्र श्लोकानुदाहन्ति :–

न वर्त्तते चक्रमिषुर्न पात्यते,
न स्पन्दन्ते सरितः सागराय।
कूटस्थोऽयं लोको न विचेष्टिताऽस्ति
यो ह्येतं पश्यति सोऽप्यनन्धः।।

न वर्त्तत इति। परिवर्त्तनक्रियायाः वर्त्तमानाया अभावात् इति भावः। कूटस्थ इति।। स्वरूपस्थो न तु वर्त्तमानक्रियाविशिष्ट इत्यर्थः। अत एवाह।। न विचेष्टितेति।। व्यापारस्य न कर्त्तेत्यर्थः। एवं यो वेत्ति सोऽप्यनन्धः – किं पुनर्योऽनुष्ठाता योगीत्यर्थः। स ह्यविकृतमात्मतत्त्वं भावयन् प्रत्यक्षीकरोति। तथा चोक्तं भगवता–

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषाम् आदित्यवज्ज्ञानं प्रकाशयति तत्परम्।। इति

मीमांसको मन्यमानो युवा मेधाविसंमतः।
काकं स्मेहानुपृच्छति किं ते पतितलक्षणम्।।

मीमांसकः = विचारकः। युवा इत्यनेन पाटवं प्रज्ञाया दर्शयति। पतितलक्षणम् इति पातः पतितं तस्य कि रूपं नास्त्येव पतनक्रियेत्यर्थः।

(प्रदीप ३.२.१२३)

अनागते च पतसि अतिक्रान्ते च काक न।
यदि संप्रति पतसि सर्वो लोकः पतत्ययम्।।

अनागतत्वादेवाऽसन्त्वात् पातक्रियायाः पतसीति व्यपदेशोऽनुपपन्नः इत्यर्थः। अतिक्रान्त इति। तथैव क्रियाया असत्वात्। सर्वो लोक इति। क्रियाया वर्त्तमानत्वाभावेऽपि यदि 'पतसीति' व्यपदेशस्तदा विशेषाभावात् पर्वतादावपि पतसीति व्यपदेशप्रसङ्गः इत्यर्थः। (प्रदीप ३.२.१.२३)

अनागतमतिक्रान्तं वर्तमानमिति त्रयम्।
सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते।।

अनागतमिति। एक एव क्षणः उपलभ्यते नातीतो नाप्यनागतो, न चैकस्य क्षणस्य गमनादिक्रियावेशः सम्भवतीति भावः।

क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम्।
तत्समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन्।।

परिहारः। हेतुः प्रयोजनं, गमनस्य देशान्तरप्राप्तिः तदर्थं फलार्थमित्यर्थः। इह प्रत्यभिज्ञानात् क्षणभङ्गनिरासे देवदत्तस्य देशान्तरप्राप्तिर्निर्हेतुका न संभवतीति गमनक्रियैवै तस्या निमित्तम्। तत्रानेकलक्षणसमूहात्मकं क्रियाप्रबन्धरूपं बुद्धया संकलय्य गच्छतीत्यादि प्रयुज्यत इत्यर्थः। अविचारयन्निति। कुविकल्पकलङ्करहितमित्यर्थः।

अपर आह– अस्ति वर्त्तमानः काल इति। आदित्यगतिवन्नोपलभ्यते। अपि चात्र श्लोकमुदाहरन्ति–

विसस्य बाला इव दह्यमाना,
न लक्ष्यते विकृति सन्निपाते।
अस्तीति तां वेदयन्ते त्रिभावाः,
सूक्ष्मो हि भावोऽनुमितेन गम्यः।।

विसस्येति। विसस्य बाला विसे दह्यमाने दह्यमाना अपि न प्रत्यक्षं दह्यमान–त्वेनावसीयन्ते। किं तर्ह्यनुमानेन, विसान्तर्गतत्वात् तद्दाहे तेषामपि दाहः प्रतीयते। तथा कारकसंनिपात एकैकक्षणग्रहणे क्रियावेशलक्षणा विकृतिः प्रत्यक्षेण न लक्ष्यते। तां तु त्रिभावाः, अस्तीति निश्चिन्वन्ति। त्रिषु कालेषु भावो भावना येषां ते त्रिभावा = योगिनः,

ये भावनावशेन त्रीनपि कालान् योगिप्रत्यक्षेण विदन्ति। सूक्ष्म इति। अनेकक्षणसमूहात्मकस्य धातुवाच्यस्य अर्थस्य क्रियारूपस्य युगपदसंनिधानादनुमीयत इत्यर्थः। (प्रदीप ३.२.१२३)

भविष्यत् कालो द्विधा। अद्यभावो नास्त्यस्मिन् इति अनद्यतनः (अनद्यतने लुट् ३.३.११५) शेषश्च (लृट् शेषे च ३.३.१३)

—इत्थं मुनित्रयमतेन कालविषयिकीधारणायाः सारं एवं प्रतिपादयितुं शक्यते—

१. कालेन सहचरितः वर्णः कालः।
२. येन मूर्त्तीनां उपचयाश्च अपचयाश्च लक्ष्यन्ते, स कालः।
३. आदित्यगत्या = क्रियया अहरिति च रात्रिरिति च भवति।
४. कालः प्रस्थादिवत् न सर्वतो मानम् तथापि परिच्छेदहेतुत्वात् मानम्।
५. नित्यः कालः। पदार्थानां अनुज्ञाप्रतिबन्धार्थाभ्यां स्थित्युत्पत्ति-प्रलयहेतुः।
६. यस्य स्वसत्ता व्यपवृक्ता स भूतः। आरम्भो यत्रानपवृक्तः स वर्त्तमानः कालः।
७. प्रसिद्धपरिमाणा क्रियैव क्रियान्तरपरिच्छेदात् कालः।
८. क्रियाया एव भूत-भविष्यद्-वर्त्तमानता। न शब्दस्य।



# धर्महेतुर्ज्ञानं प्रयोगो वा?

कमलेशझा:

अथ भाष्यकृद्भि: सप्रपञ्चं व्यवस्थापितम् — लोकत एव शब्दार्थसम्बन्धे सिद्धे अर्थज्ञानप्रयोजनकृते शब्दप्रयोगेऽपि सिद्धे शास्त्रं धर्मनियमं कुरुते ''साधव: शब्दा प्रयुज्यमाना धर्मं जनयन्ति न तु अपभ्रंशा:'' इति। प्रसङ्गत: ''अस्त्यप्रयुक्त:[1]'' इत्यादिना केषांचन शब्दानामप्रयुक्तत्वमाह ''सर्वे देशान्तरे[2]'' इति वाक्येन सिद्धान्तितं यत्नदृश्य: प्रयोग एष्टव्य इति।

एवं च व्याकरणशास्त्रस्य नियमार्थत्वं पर्यवसीयते। आह च भगवती श्रुति:—''एक: शब्द: सम्यग्ज्ञात: सुप्रयुक्त: स्वर्गे लोके कामधुग्भवतीति''[3]। अत्र ज्ञानप्रयोगयोरुभयो: श्रवणात् ''यदैकस्मादपूर्वं तदेतरत् तदर्थमि''[4]ति न्यायेन एकस्य प्राधान्यमपरस्य च गौणत्वं कल्पनीयम्।

अथ शब्द: सम्यग्ज्ञात: कामधुग्भवति सुप्रयुक्तत्वान्न तु केवलं सम्यग्ज्ञातत्व–मनुमीयते। उताहो शब्द: सुप्रयुक्त: कामधुग्भवति सम्यग्ज्ञानात्तु सुप्रयुक्त्वं भवतीति विकल्पयोर्मध्ये प्रथमविकल्प: ''प्रथमं वा नियम्येत[5]'' इति न्यायेन संगच्छते।

परन्तु साधुशब्दज्ञाने धर्म इत्यङ्गीकारे शब्दज्ञानवत: भूयसामपशब्दानां ज्ञानसत्त्वाद् धर्मापेक्षया अधर्मबाहुल्यं प्रसज्येत।

अथ ''तेऽसुरा ..... पराबभूवु[6]'' इति श्रुत्या अपशब्दप्रयोगादधर्मप्रतिपादनात् साधुशब्दप्रयोगाद् धर्मो। न तु ज्ञानादिति पक्ष: आश्रीयेत चेद् व्याकरणे अकृतश्रमाणामपि धर्मोऽभ्युदयश्च प्राप्नुयादेवं च व्याकरणाध्ययनप्रयत्नो व्यर्थ: स्यात्। किं च ''सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते[7]'' इति न्यायेन प्रयोगस्यैव धर्महेतुत्वमास्थेयं न तु ज्ञेयशेषस्य ज्ञानस्य। किं च ज्ञानस्य दृष्टं फलं प्रयोग: ''सम्भवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वम्'' इति नयेन ज्ञानस्य न धर्मजनकत्वमपि तु प्रयोगस्येति द्वितीयो हेतु:।

किञ्च "फलवत्सन्निधौ अफलं तदङ्गमितिन्यायेन ज्ञानं प्रयोगाङ्गभूतमिति तस्यैव धर्महेतुना युज्यते। स्वर्गादिरूपे फले सन्निधिपाठरूपस्थानप्रमाणेन प्रयोगस्यान्वयो युज्यते न ज्ञानस्येति तृतीयो हेतुः।

किन्तु व्याकरणे कृतश्रमस्यापि कदाचित् कौशलव्यतिरेकवत् फलव्यतिरेकोऽपि स्यादिति व्याकरणाध्ययनविषयकप्रयत्नवैयर्थ्यापत्त्या प्रयोगस्य धर्महेतुत्वाङ्गीकारो न युज्येतेति प्रयत्नानर्थक्यं भवतीत्यादिना वाक्योपष्टम्भेन ज्ञानस्यैव धर्महेतुता प्रतिपादिता।

वस्तुतस्तु "शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन"[८] इति वार्तिकमुखेन शब्दानां व्याकरणाध्ययनज्ञानपूर्वकप्रयोगेण धर्म इति सिद्धान्तितम्।

किञ्च "योऽग्निष्टोमेन यजते य उचैनमेवं वेद"[९]ति श्रुतिस्वारस्येन यथा नियमपूर्वमधीताः वेदशब्दाः ज्योतिष्टोमादिकर्मानुष्ठानाङ्गविशिष्टबोधेन फलवन्तो भवन्ति तथा देवदत्तः पचतीत्यादयः शब्दाः प्रकृत्यादिविभागवत्तया विदिताः सन्तः प्रयुक्ता अभ्युदयहेतुतां भजन्ते। एवं च ज्ञानपूर्वकात् क्रत्वनुष्ठानात् फलोत्पत्तिवत् ज्ञानपूर्वकात् शब्दप्रयोगादेवधर्मोत्पत्तिरिति न्याय्यः पन्थाः।

तत्त्वविदस्तु शब्दज्ञानस्यैव धर्मफलकत्वमभ्युपयन्ति। एतन्मते ज्ञाने धर्म इत्येष सिद्धान्तः।

अत एव भाष्ये "अथ गौरित्यत्र कः शब्दः[१०]" इति प्रस्तावे शब्दस्वरूपं द्विधा प्रदर्श्य समाहितम्। तत्र "येनोच्चारितेनेत्यादिना"[११] स्फोटस्य सिद्धान्तिसम्मतस्य शब्दत्वमभिधीयते। "ध्वनिः शब्द[१२]" इत्युक्त्या तु प्रसिद्धो ध्वनिः शब्दत्वेन निरूप्यते।

तथा च ध्वनिरूपं शब्दमाश्रित्य शास्त्रपूर्वके प्रयोगे अभ्युदयहेतुता प्रोच्यते– स्फोटशब्दमाश्रित्य तु ज्ञाने धर्म इत्येष सिद्धान्तो राजते।

कौस्तुभकृन्मते धर्मजनकत्वं प्रयोगस्य[१३] न तु ज्ञानमात्रस्य। तत्र शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देने[१४]"ति वार्तिके प्रयोगशब्दोपादानमेव विनिगमकम्। भाष्ये ज्ञानस्य धर्मफलकत्वसमर्थनं तु अभ्युपेत्यवादेनेति बोध्यम्।

एतन्मते यद्यपि "एकः शब्दः" इत्यादिश्रुतौ सम्यग्ज्ञातः सुप्रयुक्तः इत्युभयो– रुपादानेन उभयोर्ज्ञानप्रयोगयोः अभ्युदयहेतुत्वं प्रतीयते तथापि प्रतिपदाधिकरणन्यायेन प्रयोगस्य फलं प्रति साक्षात् कारणता ज्ञानस्य तु प्रयोगाङ्गत्वेन प्रयोजकता यदैकस्मादपूर्वं तदा इतरत् तदर्थमित्यु[१५]क्तेरिति शम्।।

संदर्भा:


१. म.भा.पस्पशा. पृ. ३५

२. म.भा.पस्पशा. ९/०७५०३८

३. म.भा. ६/१/८४

४. उद्धृत म.भा. पस्पशा. उद्योत पृ. ३९

५. मीमांसासूत्रम् – ११/१/४३

६. म.भा. पस्पशा. पृ. ११

७. मी.द.त.वा. १/३/८

८. म.भा. पस्पशा. वा. ११ पृ. ४०

९. म.भा. पस्पशा. उद्धृत पृ. ४०

१०. म.भा. पस्पशा. पृ. – ५

११. म.भा. पस्पशा. पृ. – ७

१२. म.भा. पस्पशा. पृ. – ७

१३. श. कौ. पृ.–२६ प्रथमाह्निकम्

१४. म.भा. पस्पशा. का. वा. –१००

१५. उद्धृत म.भा. पस्पशा. उद्योत पृ.–३९




# व्याकरणदर्शने शब्दशब्दस्यार्थः

कोराडः सुब्रह्मण्यम्

शब्दशास्त्रमिति प्रथिते व्याकरणदर्शने शब्दशब्दः बहुष्वर्थेषु प्रयुक्तः। किन्तु नैकत्र साकल्येन तेऽर्थाः विवेचितास्सन्ति। पदशास्त्रमिति च नाम प्राधान्येन व्यपदेश भवतीति न्यायमनुसृत्यैव प्रथितमस्ति। यतो हि वाक्यशास्त्रे न केवलं वाक्यस्य किन्तु वर्ण–पद–महावाक्य–प्रामणानामपि चर्चाऽकारि। प्रमाणशास्त्रेऽपि न केवलं प्रमाणानां किन्तु वर्ण–पद–वाक्य–महावाक्यानां विश्लेषणं दरीदृश्यते। न्यायशब्दस्य पञ्चावान्तर–वाक्यरूपाणामवयवानां संघातरूपे न्यायमहावाक्ये शक्तिरित्यादि सप्रमाणं न्यरूपि अस्मदीये महावाक्यविचारे। एवमेव व्याकरणेऽपि वर्णवाक्यमहावाक्यादिषु गच्छत्सु विषयतां पदशास्त्रमिति प्रथा तद्वत्प्रकृतिप्रत्ययादिविश्लेषणपूर्वकपदस्वरूपनिरूपणबाहुल्यमनुसृत्यैव। नो चेत् ''अथ पदानुशासनमि''त्येवावक्ष्यत्। नेत्याह।

तस्माद् इदमत्र संक्षेपेण विचार्यते यद् अथ शब्दानुशासनमित्यत्र को वाऽभिधेयः शब्दशब्दस्य? स्वं रूपं शब्दस्याशब्दसंज्ञा (१.१.६८) वचोऽशब्दसंज्ञायाम् (७.३.६७) शब्ददर्दुरं करोति (४.४.३४) इत्यादि पाणिनिवाक्येषु, सिद्धे शब्दार्थ सम्बन्धे'' इत्यादि कात्यायनवाक्येषु, ''शब्दतत्त्वं यदक्षर''मित्यादिहरिवचनेषु च शब्दशब्दः कमर्थं प्रत्याययतीति।

प्रायेण शब्दशब्दः एष्वर्थे प्रयुज्यमानः संदृश्यते– वर्णः, प्रकृतिः, प्रत्ययः, पदं, वाक्यं, महावाक्यं, परा, पश्यन्ती, मध्यमा (स्फोटः), वैखवरी, ध्वनिः, शब्दप्रमाणम्, धातुः इत्यादि (अव्ययसमासोपसर्गनिपाततन्त्रीशब्दकाकवाशितापभ्रंशव्यंग्यव्यंजकादि–नामादिशब्देन ग्रहणम्)।

अत एव हेतोः शब्दशब्दः भाषान्तरीकरणं नैव सहते इतिकृत्वा मत्कृत–वाक्यपदीयब्रह्मकाण्डस्याङ्ग्लानुवादे ग्रन्थान्तविवरणपूर्वकं तमेव यथायथं प्रायुञ्जि। शब्दः वागिति चानर्थान्तरम्।

''किं पुनरिमे वर्णा अर्थवन्तः आहोस्विदनर्थका'' इति वर्णगतं वस्तु विचार्यमाणेन भाष्यकृता वार्तिकान्युद्धृत्य उभावपि पक्षौ प्रदर्शितौ। तत्र चानर्थका वर्णा इत्येव सिद्धान्तः।

धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानाम् अर्थदर्शनं च वर्णस्फोटाश्रयेण। अयं च वर्णस्फोटः शास्त्रप्रक्रियामात्रोपयोगीति स्पष्टमुद्योते "हयवरट्—सूत्रे। तत्र वाक्यस्फोटो मुख्य इति मञ्जूषा अन्ये च सप्त पदस्फोटाद्रयः पञ्चकोशाधिकरणवदुपयुज्यन्ते इत्यादि स्पष्टं प्रत्यपादि भूषणे मञ्जूषायां च।

उपायाः शिक्षमाणानां बालानामुपालालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।।

(वाक्य. २३८, वाक्य)

इति हरिरपि। प्रातिपदिकसंज्ञासूत्रे भाष्येऽपि एषा वर्णविषयिणी चर्चा दरीदृश्यते। "सिद्धं त्वन्वयव्यतिरेकाभ्यां, वृक्षावित्युक्ते कश्चिच्छब्दो हीयते कश्चिदुपजायते, सकारो हीयते औकार उपजायते।... इमे पुनर्वर्णा अत्यन्तमेवानर्थकाः। ... एवमेषां वर्णानां समुदाया अर्थवन्तः अवयवा अनर्थकाः। आह च हरिः—

शास्त्रार्थ एव वर्णानामर्थवन्त्वं प्रदर्शितम्।
धात्वादीनां विशुद्धानां कौकिकोऽर्थो न विद्यते।।

(वाक्य. २१०, वाक्य.)

वाक्यपदीये च पदार्थाष्टकं विचारितम् प्रकृतिप्रत्ययौ पदवाक्ये इति द्विविधौ शब्दौ, प्रकृतिप्रत्ययार्थपदवाक्यार्थरूपार्थद्वयं, कार्यकारणभावयोग्यतारूपसम्बन्धौः, अर्थज्ञान–धर्मरूपप्रयोजनं चेति। अत एव पदार्थाष्टकविचारपरत्वाद् वाक्यपदीयस्येति तृतीयकाण्डारम्भे प्रोवाच हेलाराज़ः। अखण्डवाक्यमेव तावत् सिद्धान्तः। वाक्यानामानन्त्यात् पदविभागं कृत्वा पदानामपि आनन्त्यात् प्रकृतिप्रत्ययविभागं च कृत्वा शास्त्रं निरमायि पाणिनिना। स्पष्टं चेदं वाक्यपदीये मञ्जूषादौ च। तथा च हरिः—

अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः।
अन्वायख्येयाश्च ये शब्दाः येचापि प्रतिपादकाः।।

(ब्रह्म.२४. वाक्य)

यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः।
अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते।। (वाक्य.१०, वाक्य)

भागैरनर्थकैर्युक्ता वृषभोदयथावकाः।
अन्वयव्यतिरकौ तु व्यवहारनिबन्धनम्।। (वाक्य. १२. वाक्य)

अपोद्धारशब्दश्च कृत्रिमे पृथक्करणे प्रयुज्यते। असत्यभूतावयवकल्पनमिति–यावत्।

पाणिनिः शब्दशास्त्रप्रक्रियानिर्वाहाय वाक्यसाधुत्वसंसाधनाय च वस्तून्यमूनि परिकल्पयामास – धातुप्रातिपदिके द्वे प्रकृती। अष्टविधप्रत्ययाः, स्वादयः एकविंशतिः, नव स्त्रीप्रत्ययाः, द्विशताधिका तद्धिताः, सनादयो द्वादश, द्वाविंशतिः विकरणाः, दश लकाराः, अष्टादश तिङः, दशोन्तरैकशताधिकं कृतः।

प्रकृतिप्रत्ययानामर्थोऽपि शास्त्रकृत्कल्पितः। ''न केवला प्रकृतिः प्रयोक्तव्या नाऽपि प्रत्यय'' इति, तश्शब्दो विधेयः तिशब्दः, प्रतिषेध्यः, इत्यादि च सरूपसूत्रे पतञ्जलिः। सिद्धे शब्दार्थसंबन्धे इत्यादि–कात्यायनवचनेन नित्याः शब्दार्थसंबन्धाः इति हरिवचनेन च शब्दनित्यत्वं साध्यत्वेन प्रतिज्ञातम्। 'राज्ञः पुरुष' इति वाक्यं प्रयुज्यते राजपुरुष इति समासश्च। न तत्र परस्परं कश्चनास्ति संबन्धः। 'समर्थः पदविधिः' (पा.२.१.१) इति पाणिनीयं, परार्थाभिधानं वृत्तिरिति ततः प्राचीनाचार्यनियमश्च बालानां सुखबोधाय वृत्तिकल्पने उपयुज्यते। आह च हरिः–

प्रतिपादयता वृत्तिमबुधां वाक्यपूर्विकाम्।
वृत्तौ पदार्थभेदेन प्राधान्यमुपदर्शितम्।। ( वाक्य.२२६, वाक्य)

शब्दनित्यतायां कथं शास्त्रप्रकृतिरिति मनसि निधाय 'दाधाघ्वदाप' (पा.१.१.२०), 'स्थानिवदादेशोऽनल्विधौ' (पा. १.१.५६) इति सूत्रयोः भाष्यकारेण समाहित–मतिचतुरमतिनेत्थम्तत्र शब्दान्तरे शब्दान्तरस्य प्रतिपतिर्युक्ता,

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते।।

बुद्धिस्त्वस्य विपरिणम्यते। सः अस्तेर्भूः इत्यनेनास्तिबुद्ध्या भवतिबुद्धिं प्रतिपद्यते। नित्य एव च स्वस्मिन् विषये अस्तिर्नित्यो भवतिश्च। बुद्धिस्त्वस्य विपरिणम्यते–इत्यादि।

सर्वपदादेशा इत्यत्र पदशब्देन न सुप्तिङन्तं गृह्यते अपि तु कार्यं प्रतिपद्यमानं प्रतीयमानं प्रकृतिप्रत्ययादि तत्सर्वं पदम् इति कैयटः। एवं चास्मिन् विषये शक्तं पदमित्यादि नैयायिकदर्शनं भ्रममूलकमिति स्पष्टं मञ्जूषायां शक्तिवादान्ते च।

सुप्तिङन्तं पदमिति द्वैधी गतिः पदजातस्य। शाकटायनस्तु नामाख्यातो–पसर्गनिपाता इत्युपदिदेश। पदनिष्पत्तिश्च प्राधान्येनान्वाख्यायि पाणिनीये। परंतु अनेकमन्यपदार्थे इति सर्वार्थत्यागं पदानां ब्रुवता आचार्येण जहत्स्वार्थपक्षं मनसिकृत्य अखण्डवाक्यार्थ एव सिद्धान्तः पदानाम् अर्थः कल्पित इत्यसूचि। आह च हरिः–

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन।।

(ब्रह्म. ७३, वाक्य)

यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः।
अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते।।

(वाक्य १०. वाक्य)

जहत्स्वार्थविकल्पे च सर्वार्थत्यागमिच्छता।
बहुव्रीहिपदार्थस्य त्यागस्सर्वस्य दर्शितः।।

(वाक्य.२२८, वाक्य)

एतेन पदस्फोटोऽपि शास्त्रप्रक्रियानिर्वाहोपयोगीति स्पष्टीभवति। वास्तु–ज्यौतिषादिशास्त्रगतपदेऽतिव्याप्तिवारणाय च पदं निर्वक्ति पाणिनिः। वाक्यमिति काचन शब्दसंज्ञा। वचोऽशब्दसंज्ञायामिति पाणिनीयसूत्रेण कुत्वाभावः।

वाक्यस्फोटश्च सिद्धान्तः। वाक्यमेव वाचकमिति तस्यार्थः। कारके इत्यधिकृत्य आचार्येण वक्यनिर्मितिः प्रादर्शि।

पस्पशायां च "केषां शब्दाना" मिति चोदयित्वा "लौकिकानां वैदिकानां चे" ति समाधाय वैदिकानि शं नो देवीरभिष्टये इत्यादिवाक्यानि समुदाहृतानि। एतेन च व्यज्यते यद् व्याकरणं शब्दशास्त्रं न तु पदशास्त्रं केवलमिति।

स्वं रूपमिति सूत्रे शब्दसंज्ञा इति प्रतीकमुपादाय शब्दशब्देन चाभेदोपचारात् व्याकरणमुच्यते, शब्दे संज्ञा शब्दसंज्ञा एवं च कर्मकरणमित्यादिष्वर्थसंज्ञास्वपि शास्त्रीयासु स्वरूपग्रहणं न भवतीति पदमञ्जर्यां हरदत्तः। दीक्षितनागेशौ च तदेवावादिष्टाम्शब्दशास्त्रे या संज्ञेति, शब्दपदेन च शब्दशास्त्रं तदाहेति च।

अर्थोऽल्पश्चेद्वाक्यं प्रयुज्यते स चेन्महान् महावाक्यम्। विस्तरस्तु मम महावाक्य–विचारे द्रष्टव्यः। प्रत्यगात्मनि अतिव्याप्तिवारणाय महावाक्यार्थे वाक्यशब्दप्रयोग इति न्यायवार्तिकतात्पर्यपरिशुद्धौ। वाक्यमहावाक्ययोश्च तन्त्रेण निर्वचनं द्वादशलक्षण्यां जैमिनेः 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति'। योग्यतासत्तेः नोक्तेः गमकत्वात्। सूत्रे च पदशब्दः नोपात्तः अत एव वाक्यमहावाक्यसाधारणं सूत्रमिति। परिशुद्धिवाक्ये प्रत्यगात्मनीत्यस्य प्रत्यगात्मबोधके तत्त्वमसीत्यादिमहावाक्ये इत्यौपचारिकोऽर्थः। तृतीया–ध्याये च अभिज्ञावचने लृट्, न यदि, विभाषा साकाङ्क्षे इति सूत्रत्रयेण पाणिनिः स्मरसि कृष्ण गोकुले वत्स्यामः। अभिजानासि कृष्ण यद्वने अभुञ्ज्महि इत्यादि महावाक्यानां साधुत्वं प्रार्थयामास। बहुषु बहुवचनम्, णेरणौ इत्यादिसूत्रेषु प्रदीपोद्योतयोः प्रकरणस्य नैक सूत्रसमुदायरूपस्य महावाक्यरूपेण लक्ष्यसंस्कारकत्वं प्रत्यपादि। तथा च पारिभाषिकेन महावाक्येन भाषां संचस्कार पाणिनिः। तृतीये च तंत्रवार्तिके कुमारिलेन प्रत्ययविधिं स्वीकृत्य 'विशेषेण तु व्याकरणैः' यथा एकवाक्यता तथा समुदीरितम्। तौवोक्तम्—

सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैस्सह।
एकवाक्यतया युक्तमुपदेशं प्रतन्वते।।

इत्यादि। शास्त्रम् सूत्रम्। एकवाक्यतया वाक्यैकवाक्यतया। हरिरपि वाक्यकाण्डे विधेर्नियमनिषेधयोश्च शेषशेषिभावं न्यगादीत्—

नियमः प्रतिषेधश्च विधिशेषस्तया सति।
द्वितीये यो लुगाख्यातस्तच्छेषमलुकं बिदुः।।

(वाक्य.३४९, वाक्य)

लौकिकं महावाक्यलक्षणं जैमिनिमनुसृत्य हरिणैवमभाणि—

साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।
कर्मप्रधानं गुणवदेकार्थं वाक्यमिष्यते।। (वाक्य.४, वाक्य)

वाक्यानां समुदायश्च य एकार्थप्रसिद्धये।
साकांक्षावयवः....(७६, वाक्य. वाक्य)

इति च। एतेन शब्दशास्त्रे महावाक्यरूपंशब्देन महावाक्यरूपशब्दस्यान्वाख्यानं स्पष्टमुपलभ्यते।

रमणीयार्थप्रतिपादकशब्द: काव्यमित्यत्र शब्दशब्दस्य महावाक्यमित्यर्थ:। महाकाव्यम् महावाक्यमिति चानर्थान्तरम्। पस्पशायां, समर्थ: पदविधि: इत्यादिषु "शब्दप्रमाणका वयं, यच्छब्द आह तदस्माकं प्रमाणम्" इति वदता पतञ्जलिना शब्दानुशासने शब्दप्रमाणस्य प्राधान्यमुपदर्शितम्।

पस्पशायां व्याकरणप्रयोजनपरिगणनसन्दर्भे चत्वारीत्यादि ऋचमुपादाय चत्वारि शङ्गा: पदजातानीति व्याख्यायि भाष्यकारेण। तने परा–पश्यन्ती–मध्यमा–वैखरीणां ग्रहणमिति व्याख्यातार:। प्राह च हरिर्ब्रह्मकाण्डे–

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्
अनेकतीर्थभेदायास्त्रय्या वाच: परं पदम्।।

(ब्रह्म. १४३, वाक्य)

ऋषीणां पुन: पश्यन्तीशब्देऽपि प्रकृतिप्रत्ययज्ञानं भवति। शास्त्राविषयत्वात् परा नोक्ता। तस्य ब्रह्मरूपत्वं तु वर्णयांचकार हरिरिति मञ्जूषायां नागेश:–

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यत:।।

(ब्रह्म. १, वाक्य)

मध्यमाशब्द एव स्फोट इति निगद्यते। द्रव्यादीनां शब्दत्वं निराकुर्वता पतञ्जलिना "येनोच्चारितेन सास्नालांगूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्द:" इति राद्धान्त: कृत: पस्पशायाम्। स्फोटस्य च स्वरूपं समग्रतया वाक्यपदीये व्यवस्थापितम्, भूषणमञ्जूषादिषूपवर्णितं च। तत्र वाक्यस्फोट एव मुख्य:, इतरे तु शास्त्रप्रक्रियोपयोगिन इति विवेक:।

तत्रैव भाष्ये "अथवा प्रतीतपदार्थको लोके ध्वनिश्शब्द इत्युच्यते, तस्माद्ध्वनिश्शब्द" इत्यप्यभ्यधायि। "तर्हि स्फोटश्शब्द: ध्वनिशब्दगुण" इत्यन्यत्र च। धातुर्वै शब्द (परोक्षे लिट्) इत्यादिरूपेण धात्वादीनामपि शब्दशब्देन व्यवहारो महाभाष्ये। शब्दं करोति प्रकृतिप्रत्ययविभागद्वारा व्युत्पादयतीति "शाब्दिक इति शब्ददर्दुरं करोतीति" सूत्रे व्याख्यातार:।

सन्दर्भाः

१. व्याकरणमहाभाष्यम् (प्रदीपोद्योतसहितम्)
२. वाक्यपदीयम्
३. काशिकाविवरणपञ्जिका (न्यासः)
४. पदमञ्जरी
५. वैयाकरणभूषणम्
६. शब्दकौस्तुभः
७. वैयाकरणसिद्धान्तमञ्जूषा
८. स्फोटवादः
९. पूर्वमीमांसादर्शनम्
१०. तन्त्रवार्तिकम्
११. न्यायवार्तिकतात्पर्यपरिशुद्धिः
१२. तर्कसंग्रहः
१३. वैयाकरणसिद्धान्तकौमुदी
१४. लघुशब्देन्दुशेखरः
१५. रसगंगाधरः
१६. वाक्यपदीयम्— ब्रह्मकाण्डः (आंग्लकानुवादः, व्यासकर्तुः)
१७. महावाक्यविचारः (प्रबन्धकर्तुः)



# फलव्यापारयोर्धातुः

राधामाधवो दाशः

## ०.० उपक्रमणिका

व्याकरणसिद्धान्तभूतवाक्यस्फोटान्तर्गतसकलशब्दकारणीभूतधात्वर्थस्य प्राथम्यात् भट्टोजिसंकलितवैयाकरणसिद्धान्तकारिकासु मौलिकसिद्धान्तरूपेण समुपन्यस्ताऽस्ति कारिका–

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।।[1] इति

सेयं कारिका कौण्डभट्टेन वैयाकरणमौलिमुकुटेन वैयाकरणभूषणसाराख्ये ग्रन्थे काममालोचिता, तदीयमेतत्सान्दर्भिकमालोचनं परवर्त्तिव्याकरण–न्याय–मीमांसादिरचनासु प्रमाणत्वेनाऽङ्गीकृतमस्ति। बहुतत्त्वगर्भिताया अस्याः कारिकायाः प्रथमपादोऽस्ति 'फलव्यापारयोर्धातु'रिति, यत्र केवलं धात्वर्थतत्वानुसन्धानं नव्यव्याकरणदर्शनाभिमुख्या–नुकूलतया सुविहितम्। प्रस्तुतलेखे तामेव शीर्षिकामङ्गीकृत्य भारतीयशब्दशास्त्रपरम्परा–धारेण धात्वर्थविचारः सविनीतमुद्याम्यते।

## ०.१ आख्यातांशाः

संस्कृताख्यातपदेषु (परिनिष्ठतक्रियापदेषु) अस्त्यर्थवदेककद्वयम्धातुः प्रथममेककं तिङ्कृत्प्रत्ययनिचयश्चेतरम्। धातुरस्ति प्रकृतिः। अत एव धातुविशेषसंयोगेन निर्मितानि क्रियापदानि तत्तद्धातुविशेषाणां स्वीयमर्थमादधति। किन्तु समेषु क्रियापदेषु चकास्ति धातुसामान्योऽर्थोऽथवा धातुजातित्वभावना।[2] तथैव तिङ्कृत्सु च सामान्यविशेषौ चार्थौ प्रवर्त्तमानौ दृश्येते।

प्रस्तुतलेखे केवलंमाख्यातांशधातुरेव विचारपरिसरीभूतोऽस्ति। अतो धात्वर्थ–विचारात्पूर्व धातुस्वरज्ञानमावश्यकम्। 'भूवादयो धातवः' (पा.१.३.१) इति धातुसंज्ञाविधायकसूत्रोपरि व्याख्याक्रमेण 'क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युरिति' सिद्धान्तकौमुदींवृत्तिः। प्राचीनकाशिकावृत्तावपि 'भू इत्येवमादयः शब्दाः क्रियावाचिना धातुसंज्ञा भवन्तीति व्याख्यातम्। पाणिनीयव्याकरणस्य परिशिष्टकल्पेषु धातुपाठ–गणपाठ–

लिङ्गानुशासनादिष्वन्यतमे धातुपाठे १९४४ परिमिता धातवः संकलिताः। रूपनिर्माणस्वातन्त्र्यमाविष्कृत्य तत्तत्स्वातन्त्र्याधारेण भ्वादि–अदादि–जुहोत्यादि–दिवादि–स्वादि–तुदादि–रूधादि–तनादि–क्र्यादि–चुराद्याख्येषु ते दशसु स्थूलविभागेषु संकलिताश्च सन्ति। एतेषां प्रतिनिधित्वं कुर्वत्सु भवति–अत्ति–जुहोति–दीव्यति–सुनोति–तुदति–रूणद्धि–तनोति–क्रीणाति–चोरयत्याकृतिमत्सु यथासंख्यं पारिभाषिकरीत्या[3] शप् (गुणकारक–अः)–लुक् (शून्यम्)–श्लु (धातुद्वित्वकारकः)–श्यन् (यः)–श्नु (नुः)–श (गुणनिरोधक–अः) श्नम् (धातुगतस्वरोत्तर–नः)–श्ना(ना)–णिच्पूर्वक– शप् (अय) इत्येतेषां प्रकृतिप्रत्ययान्तरालयोगविशेषा स्तत्तद्धातुप्रकाराणां रूपविकारकतत्त्वानि सन्ति। अतएव एतानि विकरणान्युच्यन्ते। एतेषु गणेष्वनन्तर्भाविताः पाणिनीयसूत्रेषु सुलभा धातवः सौत्रधातुनाम्ना प्रोक्ताः।[4] एतद्व्यतिरिक्तं कानिचन नामानि कण्ड्वादिगणे संकलितानि येभ्यः परं 'यक्' योगं कृत्वा क्रियारूपाणिनिष्पादयितुं शक्यन्ते।[5] अत्रान्तर्गताः षष्ठिसंख्याका धातवस्तत्पार्यायवाचिनोऽपि धातवो नामधातव इत्युच्यन्ते। अपरं च भवतिभ्य औपदेशिकीभ्यो धातुभ्यः परं नामधातुभ्यश्च परं यथानयिमं विहिताः सन् (स)–क्यङ्(य)–क्यष् (य)–णिङ्(इ)–णिच्(इ)–यङ्(य)–आय–इयङ्(इय) प्रत्ययावुभूष–पुत्रीयादि–धातून् जनयन्ति। ते च अतिदिष्टा धातव इति परम्परा।[6] मौलिकरूपेण भूवादिष्वथवा भूप्रभृति वा–सदृशेषु क्रियावाचिषु रूपेषु यदस्ति तत्त्वं तद्व्याकरणदर्शनगुन्थेषु विशेषतो वाक्यपदीय–भूषण–मञ्जूषाग्रन्थेषु समुदाहृतैर्नैयायिकमीमांसकादीनां तत्तुल्यमतैः सह तौलनिक–खण्डन–मण्डन–गहन–विपिनेषु भ्राजतेतराम्।

## १.० धातूनां फलव्यापारवाचकता

'फलव्यापारयोर्धातु'रित्युक्तेऽभिप्रेतोऽस्ति यदाख्याततांशो धातुः फलस्य व्यापारस्य च वाचकोऽस्ति। कारिकाया अवशिष्टपादानामर्था यद्यपि प्रबन्धस्य परिसरे नान्तर्भावितास्तथापि सामान्येन तत्कारिकार्थसूचनेन कारिकाकृतो विवक्षापरिष्कारः स्यादिति धिया कारिकावशिष्टभागस्य संक्षेपार्थः प्रस्तूयते। 'आश्रये तु तिङः स्मृता', इति तिङ्प्रत्ययाः फलाश्रयस्य कर्मणो व्यापाराश्रयस्य कर्तुश्च वाचकाः सन्तीति आशयः। 'फले प्रधानं व्यापार' इति पादेनोच्यते आख्यातांशफलव्यापारयोर्मध्ये फलं प्रति व्यापारः प्रधानोऽथवा फलस्य विशेष्योऽस्ति व्यापारः, फलं, तु व्यापारदृष्ट्या गौणमथवाऽस्य विशेषणं भवति। अन्तिमपादस्योपदेशो वर्तते। तिङर्थाः कर्तृ–कर्म–संख्या–काला विशेषणरूपाः सन्ति।

तिङ्प्रत्यया: कर्त्तरि वाच्ये कर्त्तारमभिदधति कर्मणि च कर्माभिदधति। तथैव तिङर्थसंख्या कर्त्तृप्रधानवाक्ये कर्त्रा सहाऽन्विता कर्मप्रधानवाक्ये कर्मणा चान्विताऽस्ति। तिङर्थकालस्तु व्यापारस्य विशेषणं भवतीत्यनुभवसिद्ध:। कर्तृकर्मक्रियापदसमवेतवाक्यार्थबोधनाय परिकल्पित: कर्त्तृवाच्यपरको वैयाकरणशाब्दबोधप्रकारो व्यापारविशेष्यकोऽस्ति। 'देवदत्त ओदनं पचति' इति वाक्यस्य शाब्दबोधोऽस्ति देवदत्ताभिन्नैककर्तृक ओदनकर्मको वर्त्तमानकालिको विक्लित्त्यनुकूलो व्यापार:। सोऽयं विचार: खण्डशो व्यस्ततयैवमस्ति यत्पचति नाम पाकक्रियापर्यायवाचिव्यापारोऽस्ति य: कठोरधान्यादीनामवयवानां शिथिलीकरणस्य (विक्लित्त:) जनको वर्तते, स व्यापार, पुनर्वर्तमानकाले घटितो वर्तते (वर्त्तमानकालिक:), यस्य व्यापारस्येप्सिततमं लक्ष्यमस्ति ओदन: (ओदनकर्मक:), कर्त्ता चास्ति संख्यया एक: पुरुषविशेषो य: परिचिताद् देवदत्ताद् भिन्नो नास्ति (देवदत्ता–भिन्नैककर्तृक:)। तथैव 'देवदत्तेन ओदन: पच्यते' इति वाक्यस्य फलविशेष्यकतया शाब्दबोधोऽस्ति देवदत्तवृत्ति–वर्त्तमानकालिका व्यापारजन्या ओदननिष्ठा विक्लित्तिरिति।

१.०.१ धात्वर्थत्वे प्राचीनाऽर्वाचीनवैयाकरणानां मतभेद:

(क)प्राचीना वैयाकरणा: 'फलविशिष्टव्यापारे' 'फलानुकूलयत्न–सहितव्यापारे' वा धातो, शक्तिं मन्यन्ते। (ख) अपि च क्रिया कर्तृवाच्ये कर्मवाच्ये वाऽस्तु उभयत्र शाब्दबोधस्तु व्यापारप्रधानो भवति इति तेषां मति:।[3] अत एव 'पचति' पदार्थोऽस्ति 'एककर्तृनिष्ठ–पाकानुकूल–व्यापार:'। 'पच्यते' पदार्थस्तु'एककर्मनिष्ठ–विक्लित्त्यनुकूल–व्यापार:। 'देवदत्त ओदनं पचति' इत्यादि उपरिनिर्दिष्ट–शाब्दबोधप्रकारौ नवीनवैयाकरणमता–नुकूलकाविति। फले व्यापारे चं पृथक् खण्डशश्च शक्तिं स्वीकुर्वन्ति नवीना:।[4] तत्र फलव्यापारयोरिति द्विवचनप्रयोगो फल–व्यापारयो: पृथक्शक्तिमत्तासूचने मानम्। सहाभाष्यकारोऽपि 'द्व्यर्थ: पचि:' इत्युक्त्या तत्संकेतयति। भूवादयो धातव: (पा.१.३.१) इति सूत्रव्याख्यायां व्यापारो फलं च धातुवाच्ये इति भाष्यकारस्य सम्मति।[5] नागेशस्य केवले व्यापारे धात्वर्थत्वस्वीकारे भर्तृहरि–भट्टोजिदीक्षितौ दीक्षितानुगामिकौण्डभट्टोपि फले व्यापारे च पृथक्शक्तिं स्वीकुर्वन्ति। वस्तुतो नागेश: फले व्यापारे च पृथक्तया धात्वर्थमस्वीकृत्य फलानुकूलव्यापारूपार्थं मन्यते। तस्मात् पाकानुकूलव्यापार: पच्धातोरर्थ इति निष्कर्ष:। सोऽयं व्यापारो 'यत्नसहित' इति विशेषणेन विशेषितोऽस्ति। पाकानुकूलो

व्यापारः सयत्नश्चेत् क्रियेत पच्धात्वर्थो भवेत्, नान्यथा। पचनव्यापारे पाचकस्य यत्नाभावश्चेत् 'अयं न पचति' इति प्रयोगो न त्वयं पचतीति। एतदुद्दिश्य नागेशेनाऽभिहित–मस्ति –'फलानुकूलो यत्नसहितव्यापारो धात्वर्थ' इति।[१०]

फलव्यापारयोः पृथक्शक्तिकल्पने नागेशेन काश्चनाऽऽपत्तयः प्रदर्शिताः। ता भवन्ति–(क) यथा 'नीलो घटः' इति प्रयोगवद् उद्देश्यविधेयभावेन तयोः स्वाभाविकी–अन्वयापत्तिः। अत्र कदाचित् नीलशब्द उद्देश्यो भवेत् कदाचित् घटः, कदाचित् तद्वैपरीत्यम्। तद्वदत्रापि व्यापार उद्देश्यः फलं विधेयं कदा फलमुद्देश्यं व्यापारो विधेयः सम्भाव्येत(ख) व्युत्पत्तिद्वयकल्पने कार्यकारणभावकल्पनागौरवमापद्येत। यदि व्यापारो मुख्यत्वेन फलं च गौणत्वेन बोध्येते तदा तद्बोधनरूपं कार्यं प्रति धातुसंबद्धकर्तृवाचि प्रत्ययः कारणरूपं भवेत्। तथैव फलस्य प्राधान्ये कल्पिते व्यापारस्य गौणत्वे तद्बोधनकार्यं प्रति धातु–सम्बन्धानां कर्मवाचिप्रत्ययानां कारणत्वप्रसङ्गः। (ग) तृतीयापत्तिस्तु यदि धातो द्वौ भिन्नार्थौ फलव्यापाररूपौ स्तः, धातूनां द्विविधवाचकशक्तेः कल्पनं सम्भाव्येत। (घ) अन्तिमापत्तिर्भवति – प्राचीनविदुपां मतानुगुणं फलव्यापारयोर्द्विविधबोधनजनकताशक्तेः कल्पनमवश्यंभावि।

एतासामापत्तीनां निराकरणाय फलविशिष्टे व्यापारे तथा व्यापारविशिष्टे फले धातोः शक्तिः परिकल्पनीया। फलविशिष्टव्यापारस्याभिप्रायोऽस्ति फलानुकूलो व्यापारः फलोत्पादको व्यापारो वा। व्यापारविशिष्टफलस्याभि–प्रायोऽस्ति व्यापारजन्यं फलम्। कर्त्तरि प्रयोगे फलानुकूलव्यापारस्य प्रतीतिः। कर्मणि प्रयोगे व्यापारजन्यफलस्य च प्रतीतिः। कर्त्तृवाच्ये प्रयुक्ताः प्रत्ययाः फलानुकूलव्यापारे तात्पर्यं ज्ञापयति। कर्मवाच्य–प्रयोगे कर्मणि प्रत्यया व्यापारजन्यफलं बोधयन्ति। अनया रीत्या दोषाणां परिहारो भवति।[११]

## १.१. धात्वर्थः फलम्

फलशब्दोऽत्र पारिभापिकः। स च धात्वर्थव्यापारजन्य–धात्वर्थफलस्य बोधकः, यथा पचेर्विक्लित्तिः, गमेः संयोगः, त्यजेर्विभागः। प्रसिद्धप्रयोजनरूपं लौकिकफलं नात्राभिप्रेतम्। यथा 'स्वर्गकामो यजेत' इत्यादिवाक्येषु 'स्वर्गप्राप्तिरेव लोकप्रसिद्धं प्रयोजनम्, यथा वा वपनक्रियायाः फलमस्ति धान्यप्राप्तिः, पचति–क्रियाया मुख्यं फलं क्षुन्निवृत्तिः। आत्मनेपद–परस्मैपद–क्रियानिबन्धनं खलु लौकिकं मुख्यं प्रयोजनरूपफलम्। तथा भर्त्तृहरिः–

यस्थार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम्।।

(वा.प. ३.१२.१८)

अतएव परस्मैपदाऽऽत्मनेपदविचारे[२] लोकप्रसिद्धं फलमभिप्रेतम्, धात्वर्थफलविचारे धातूनां सकर्मकाऽकर्मकविचारे तु पारिभाषिकं फलं लक्ष्यमस्ति। अन्यथा लोकप्रसिद्ध–फलार्थताङ्गीकारे पाकसमाप्त्यनन्तरमपि क्षुन्निवृत्तेरभावात् अपाक्षीदिति प्रयोगाऽसम्भवः। अपरं च भोजनसमये क्षुन्निवृत्तौ 'पचति' शब्दस्य प्रयोगापत्तिः स्यात्।

### १.१.१ धात्वर्थफलस्य लक्षणम्

तद्धात्वर्थजन्यत्वे सति तद्धातुजन्योपस्थितिविषयत्वं फलत्वम्। धात्वर्थ–व्यापारजन्यमपि धातुजन्योपस्थितेश्च विषयो भवति फलम्। तथा च नागेशः[१३] – फलत्वं च तद्धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठ–विशेष्यता–निरूपितप्रकारत्वम्। यथा पचतिक्रियायाः कर्तृवाचि–ति–प्रत्यय–संबद्ध–पच्–धातुजन्यशाब्दबोधे विक्लित्यनुकूलव्यापाररूपेण संबद्धे धात्वर्थव्यापारे स्थिततया विशेष्यतया निरूपितायां विक्लित्तौ प्रकारताया आश्रयरूपा विक्लित्तिः पच्धातुवाच्या। अत एव विक्लित्तिरेव पच्धात्वर्थफलम्। तथैव देवदत्तो ग्रामं गच्छति इति वाक्ये गमेः शाब्द–बोधो भवति संयोगानुकूलो व्यापारः। संयोगोऽत्र फलम्। चलनादिसकलक्रिया व्यापारः। संयोगस्तु तज्जन्योऽस्ति।

### १.२ व्यापारलक्षणम्

कौण्डभट्टेन 'व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया' इत्युच्यते। कस्यापि फलस्य सिद्ध्यर्थं कार्यारम्भात् समाप्तिपर्यन्तं कृतानां निखिलयत्नानां समूह एव व्यापारः। सोऽपि क्रियेत्युच्यते। पचति–करोत्यादि–क्रियासु साध्यावस्थाया लक्षणं विद्यते। क्रियायाः साध्यावस्था सैव भवति यद्रूपं श्रुत्वा श्रोतुर्मनसि क्रियान्तराणामाकाङ्क्षा नोत्थिता भवति। तथा च निरुक्तकारः "पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्य–पवर्गपर्यन्तम्" (निरूक्तम् १.१.१)। पचति–पठति–वदतीत्यादि–क्रियापदानि, श्रुत्वा श्रोततृर्मनसि 'किं पाकः पाठः वादो वा प्रवर्त्तते नश्यति भविष्यति वेत्येवंरूपाणां

क्रियाणामाकाङ्क्षा उदियात्। तत्तदाकाङ्क्षाणां पूर्त्यर्थमेतासां साध्यावस्थाविशिष्टानां क्रियाणामुच्चारणमावयकम्। पाक–पाठ–वादरूपक्रियाशब्दाः सिद्धावस्थाया वाचकाः सन्ति। पचति = पाकं करोति = पाककृतिरिति तिङन्त–घञन्तशब्दयोः पार्थक्यं विवृण्वता कौण्डभट्टेनोच्यते उभयत्र धात्वर्थावगमाऽविशिष्टेऽपि क्रियान्तराऽऽकाङ्क्षाऽनाकाङ्क्षयोर्दर्शनात् तयोर्यथाक्रमं साध्यसिद्धावस्थात्वमनुभवसिद्धम्। क्रियायाः सिद्धावस्थालक्षणं निरूपयन् नागेशो ब्रवीति– 'सिद्धत्वम् क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकवैजात्यवत्त्वे सति कारकत्वेन क्रियान्वयित्वे सति कारकान्तराऽन्वयायोग्यत्वम्।'[४] साध्यावस्थाऽसत्त्वभूता। सिद्धावस्था सत्त्वरूपा अतएव नामवद् सुब्विभक्तिभिश्चोच्यते। यदुच्यते वाक्यपदीये (२.१९५)

असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते।
सत्त्वस्वभावमापन्ना व्यक्तिर्नामभिरुच्यते।।

पचत्यादिषु स्वाभाविकी साध्यावस्था तिङ्भिः पाकादिषु सिद्धावस्था च सुब्विभक्तिभिः प्रतिपाद्येते। पाकादिशब्दा घञादिकृत्प्रत्ययपरकाः। यदुक्तं भाष्ये 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति। तथैव कौण्डभट्टः

'साध्यत्वेन क्रिया यत्र धातुरूपनिबन्धना।
सिद्धभावस्तु यस्तस्याः स घञादि–निबन्धनः।।'

लिङ्ग–वचन–विभक्ति–समन्वयेन तस्याः क्रियायाः प्रयोगः – पाको जायते, पाकौ जायेते, पाका जायन्ते, पाकेन कार्यं सेत्स्यति, पाके प्रवर्त्तते सूदः इत्यादिवत्। किन्तु साध्यावस्थोपेतानां, पचत्यादीनां क्रियारूपाणामद्रव्यवद्व्यवहारे लिङ्ग–विभक्ति– वचनयोगो न भवति। पचत्यादीनां वचनसत्ता तु देवदत्तादिकर्तृसंबन्धजन्या। क्रिया अमूर्त्त्वत्वाद–निर्वचनीयास्ति। एतदर्थं भाववाच्ये वचनविचारवेलायाम् 'एकवचनमुत्सर्गतः करिष्यते' इति क्रियाणामौत्सर्गिकमेकवचननियमः।

### १.२.१ व्यांपारलक्षणान्तरेषु दोषाः

क. फलप्रयोजनक्रियात्वं व्यापारत्वम् इति लक्षणेन करणस्यापि फलप्रयोजकत्वेन व्यापारत्वापत्तिः। अतो व्यापाराश्रय करणस्य कर्तृसंज्ञात्वे – 'बालको दण्डेन क्रीडति' इति वाक्ये करणरूपदण्डः 'दण्डः क्रीडति' इति कर्तृरूपत्वं लभेत। लक्षणमेतदतिव्याप्तिदोषदुष्टम्।

ख. 'तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारवत्त्वम्' अर्थात् स एव व्यापारो भवति य कर्तृजन्योऽपि कर्तृजन्यफलस्यापि जनकोऽस्ति। व्यापारस्यैतल्लक्षणस्वीकारे साक्षाद्विक्लित्तेर्जनकरूपोऽन्तिमाग्निसंयोग एव व्यापारत्त्वापत्तिः। तथा सति पचति पदेनान्तिमाग्निसंयोगव्यापार एव गम्यमानः स्यात्। चूल्लिकोपरि पात्राधिश्रयणवेलायां पचति–पदस्य प्रयोगासंगतौ पक्ष्यतीति प्रयोगो युज्येत इत्यत्राव्याप्तिदोषः।

एतादृशदोषप्रकाराणां निराकरणाय फलसिद्धयर्थमा कार्यारम्भादा समाप्तिं सकलानां यत्नानां नामास्ति व्यापारः। अत एव ''पदान्तरसमभिहाराप्रयोज्यसाध्यत्वप्रकार–प्रतीतिविषयत्वं व्यापारत्वमित्यर्थः। अभिधानस्य प्रकारतावत्त्वं विषयतानिरूपकत्वं वा चौपचारिकम्। तादृशसाध्यत्वप्रकारकप्रतीतिरेव विषयत्वम्। 'घटं करोति' इत्यादौ कृञसमभिहारे घटादीनामपि साध्यत्वेन प्रतीतेरतिप्रसङ्गभङ्गाय पदान्तरसमभिव्याहार–प्रयोज्येति प्रतीतिविशेषणम्, तदसमभिव्याहारे तेषां तत्त्वेनाप्रतीतेः। अधिश्रयणाद्य–धः–श्रयणपर्यन्तक्रियाकलापस्य पदान्तरसमभिव्याहारमन्तरेणापि साध्यत्वेन प्रतीयमान–त्वादुक्तव्यापरत्वमविकलमिति तदवच्छिन्ने पच्यादिधातुवाच्यता नानुपपन्नेति भावः।'' [१६]

ग. व्यापारलक्षणमभिदधद् नागेशो वदति– व्यापारत्वं च–'धात्वर्थफल–जनकत्वे सति धातुवाच्यत्वम्'। 'फलानुकूलो यत्नसहितो व्यापारः' धात्वर्थः। अत्र 'अनुकूलत्वम्' संसर्गः, 'अनुकूलत्वं च फलनिष्ठजन्यतानिरूपितजनकत्वम्। पच्धा–त्वर्थफलविक्लित्तिनिष्ठजन्यतानिरूपितोत्पादकता चूल्लिकोपरि पात्राधिश्रयणाग्नि–संयोगादिव्यापारजन्या सोऽयं व्यापारकलाप एव पचधात्वर्थोऽस्ति। एवंभूते लक्षणे कल्पिते प्रथमधात्वंशस्य कारणं फलं, व्यापारो नैव भवति। यतोहि फलं नित्यं जन्यतानिष्ठम्। नात्र जन्यतानिरूपितजनकता विद्यते। द्वितीयधात्वंशो व्यापारो धातुवाच्यः। देवदत्तः स्थाल्यां तण्डुलान्पचति इत्यादिवाक्ये स्थालीतण्डुलानां व्यापारो धात्वर्थव्यापारो न भवति। स्थालीतण्डुलानां स्वव्यापारसत्त्वेऽपि पच्धातुव्यापारात्तत्र भिन्नताऽस्ति। पच्धातुवाच्य–व्यापारो देवदत्तरूपकर्तृनिष्ठो न तु स्थालीरूपाधिकरणनिष्ठो नापि कर्मरूपतण्डुलनिष्ठः। कर्त्तरि 'स्थाली पचति' अथवा कर्मकर्त्तरि'–'पच्यते ओदनेन'–सदृशप्रयोगेषु स्थालीनिष्ठ–व्यापार ओदननिष्ठव्यापारो वा धात्वर्थत्वेनागम्यते, एतादृशेषु प्रयोगेष्वितरकारकाणाम–विवक्षाकारणात्। प्रथमवाक्ये व्यापाराश्रयत्वे स्थाली कर्त्ताऽस्ति तत्र कर्त्तरि प्रथमा युक्ता, द्वितीयवाक्ये कर्मणि प्रत्ययविधाने कर्तुरनभिधाने तृतीया।

### १.२.२ अवान्तरक्रियाणां समाहारो व्यापारः

यथाऽन्यत्रोल्लिखितमस्ति फलसिद्ध्यर्थमा कार्यारम्भादा कार्यसमाप्तिं सकलयत्नानां नामास्ति व्यापारः। भर्तृहरिवचनं चात्र प्रमाणमस्ति–

गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पितभेदः क्रियेति व्यपदिश्यते॥ (वा.प.३.८.४)

कौण्डभट्टोऽपि "अयं च व्यापारः फूत्कारत्वाऽधःसन्तापनत्वयत्नत्वादितत्तद्रूपेण वाच्यः। पचतीत्यादौ तत्तत्प्रकारकबोधस्यानुभवसिद्धत्वात्। न च नानार्थतापत्तिः। 'तदादि'न्यायेन बुद्धिविशेषणादेः शक्यतावच्छेदकानामनुगमकस्य सत्त्वात्। आख्याते क्रियैकत्वव्यवस्थाऽपि अवच्छेदकबुद्धिविशेषैक्यमादायैव" इति विचारयन्नस्ति। पच्धात्वर्थो व्यापारः सर्वासां फूत्करणाधिश्रयणाधः–सन्तापन–विविधयत्न–परीक्षणाऽधःस्थापनादीनां संबद्धानामेकबुद्धि–विशिष्टानामवान्तरक्रियाणां समष्टिरेव। अत एतासु कस्याश्चिदपि क्रियायाः सम्पादनावसरे पचतीति आख्यातस्य प्रयोगः संगच्छते। अवान्तरक्रियाणां वैविध्येऽपि अनेकार्थक–हरिशब्दवत्पच्धातोरनेकार्थता न शङ्कनीया। विष्णवहीन्द्रादिष्वर्थेषु हरिशब्दस्यानेकार्थता। तथा च पर्यायः

हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ।
चन्द्रे कोले प्लवङ्गे च यमे वाते च कीर्त्तितः॥

तथा नात्र संकल्पना। अपि तु पुष्पमालायां पुष्पवैविध्येऽपि 'माला' इति यथैकबुद्धिः सञ्जायते तथैव समासामवान्तरक्रियाणामेकमुद्देश्यं भवति विक्लित्तिरूपं फलोत्पादनम्। यथा वा तदिदमादयः सर्वनामशब्दाः। स वानरः, सा लता, तत्कुलम्, अयं घटः, इयं बाला, इदं फलमित्यादिप्रयोगेषु पदार्थवैविध्यं बोधयन्तोऽपि नानार्थका न भवन्ति तद्वदत्रापि समानता। अवान्तरक्रियाणां वैविध्येन न धातुभेदः। 'आख्यातेन एका किया प्रत्याय्यंते' इति न्यायः। सहबद्धानां नैकासां क्रियाणामुद्देश्यैकत्वने परस्परमनुपूरकत्वम्। ता अवान्तरक्रियाः समकालमेव न जायन्ते। ताः क्षणस्थायिन्यः प्रत्येकं क्रमपूर्विकया सम्भवन्ति। अग्रिमक्रियोत्थानात्पूर्वं तत्पूर्वक्रियाया विनाशोऽवश्यं भवति। सर्वासां पूर्वपूर्वसंघटितानां क्रियाणां विनाशेऽपि बुद्धिस्थया अभेदकल्पनया तासामेकरूपत्वं धातोश्चैकार्थत्वं निर्विवादम्।

### १.३.० भाव–क्रियाऽऽख्यात–व्यापारविषयणिी ऐतिहासिकी दृष्टिः

'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' (निरुक्तम् १.१.१) इति यास्कोक्तलक्षणं संक्षिप्तं दुरूहं च। पतञ्जलितो भर्त्तृहरिपर्यन्तं वैयाकरणैः प्रभावितेन दुर्गाचार्येणास्य व्याख्यानं कुर्वता पक्षद्वयमुपन्यस्तम्।

(क) क्रियया भावस्योत्पत्तिर्भवतीति क्रिया नाम व्यापारविशेषो भावोऽस्ति तस्या अन्तिमपरिणतिः फलरूपः। क्रियापदेन भावव्यापारौ बोध्यौ किन्तु फलरूपभावो मुख्यार्थोऽस्ति।[१८]

(ख) अन्ये फलव्यापारौ भावान्तर्गतौ मन्यन्ते। फलव्यापारौ धात्वर्थौ, प्रत्ययार्थस्तयो वैशिष्ट्यं प्रकटयतः। क्रियापदं धातु–तिङां च समूहो यत्र प्रकृत्यर्थस्य प्राधान्यं प्रत्ययार्थस्य विशेषणता। 'भावप्रधानमाख्यातम्' इत्युक्तेः स्वारस्यमिदम्।[१९] नागेशस्तु 'भावप्रधानमाख्यातम्' इत्यस्य स्थाने 'क्रियाप्रधानमाख्यातमिति पाठं साधीयांसं मन्यते। 'क्रियते अनया' इति करणव्युत्पत्त्या क्रियाशब्दो व्यपारार्थस्य बोधको व्यापारेणैव क्रियासम्पादनात्। 'क्रियते इयमिति' क्रिया कर्मव्युत्पत्त्या क्रियापदस्यार्थः स्यात्फलमिति, व्यापारेणैव फलस्य सिद्धेः। अतो यास्कप्रयुक्तः क्रियाशब्दः (भावः) फलव्यापारयोर्बोधको भवति।[२०] वस्तुतः क्रिया व्यापारो वा भावोऽस्तीति यास्कीया मान्यता। अतः पूर्वापरीभूतभावप्रतीतिराख्यातेन भवतीति कथनं संगच्छते। पूर्वापरीभावत्वे व्यापारकलाप एव सम्भवति न फले।[२१] यास्कदृष्टया भावः सत्ताविशेषो यस्य षड्भावविकाराः सम्भवन्ति। एताः स्थितयो निखिलगुणक्रियाद्रव्याणामपि सम्भवन्ति। आचार्यवार्ष्यायणिरस्य मतस्य प्रवर्त्तकः।[२२] तत्राप्यस्ति पञ्तजलेः सम्मतिः।

यद्यपि पाणिनिनाऽऽख्यातस्याऽथवा क्रियायाः साक्षाल्लक्षणं न कुत्रापि प्रदत्तं तेन प्रयुक्तेभ्यः क्रियावाचिशब्देभ्यस्तथा क्रियास्वरूपबोधकशब्देभ्यश्च तदीयविचारस्य निष्कर्षः कलयितुं शक्यते। क्रियापदानि तिङन्तानि भवन्ति। तिङश्च धातोर्भवन्तीति तदीयाशयः[२३]। भूवादयो धातवः (पा. १.३.१) इति धातुसंज्ञाविधायकसूत्रबलेन भूप्रभृतीनां वा सदृशानां च धातुपाठगतक्रियावाचिशब्दानां धातुसंज्ञा विहिता।[२४] 'भुवं वदन्तीति भूवादय इति महाभाष्यम्।[२५] भूयते इति भावः स तु धात्वर्थोऽस्ति। भावार्थकप्रत्यय–विधानाज्ज्ञाप्यते एतत्। भावार्थकप्रत्ययाः क्रियाया भावसामान्यस्यैव बोधकाः सन्ति।[२६] भावस्तु द्विविधः सिद्धः साध्यश्च। सिद्धत्वबोधनं कृद्भिः साध्यत्वबोधनं तु तिङ्भिः सम्भवति। पाणिनिर्धातुं बोधयितुं भाव–क्रियाशब्दयोः प्रयोगं कृतवान्दृश्यते।[२७]

धातुस्वरूपविवेचने पञ्जलेर्विविधा दृष्टयः समवलोक्यन्ते। तन्मतेन सर्वेषु धातुषु क्रियात्वमथवा करोतिभावः सामान्येन स्थितोऽस्ति। 'क्रियावचनो धातुः' इति तदीयं धातुलक्षणम्। किं करोति? पचति, किं करिष्यति? पक्ष्यति, किमकार्षीत्? अपाक्षीत् इत्यादिप्रयोगेषु पच्–कृ–धातुद्वयस्य सामानाधिकरण्यं सिद्ध्यति। किन्तु अस्ति–भवति–विद्यते इत्यादिक्रियासु करोतेः सामानाधिकरण्याऽसम्भवात् पूर्वोक्तलक्षणसंगतौ 'भाववचनो धातुरिति' तेन लक्षणं निर्मितं येनास्त्यादीनां भावत्त्वं च स्वतो बुध्यते।[२८] ननु क्रिया–भावयोर्व्यापारसामान्यवाचित्वेऽपि पूर्वोक्तरीत्या लक्षणद्वयस्याऽनावश्यकतेति वाक्तव्ये सपरिस्पन्दाऽपरिस्पन्दभेदेन व्यापारप्रकारद्वयबोधनाय लक्षणद्वयं सगतमिति नागेशाशयः। सपरिस्पन्दव्यापारे शरीरचेष्टाया अवश्यं भावित्वमत एव करोतिक्रियायाः सामानाधि–करण्यम्। अपरिस्पन्दव्यापारे शरीरचेष्टाऽनिवार्या न भवतिं, भवत्यादिक्रिया अपरिस्पन्द–व्यापारबोधिका भवन्ति।[२९]

...वचनस्य सारस्त्रिधा एवं संकलयितव्यः १. पचत्यादयो व्यापारविशेषाणाम् २. करोति सपरिस्पन्दव्यापारसामान्यस्य ३. अस्ति–विद्यतेभवत्यादयोऽपरिस्पन्द–व्यापारसामान्यस्य च बोधकाः सन्ति। क्रियावचनो धातुरिति लक्षणं सपरिस्पन्द–व्यापारसामान्यबोधनधिया विहितम्। भाववचनो धातुरिति लक्षणं च सपरिस्पन्दाऽपरि–स्पन्दव्यापारसामान्यं बोधयितुमिष्टम्। अनेन लक्षणद्वयमपि संगच्छते। यथा क्रियारूप–व्यापारसामान्यबोधनात् पचत्यादीनां धातूनां करोतिना सह सामानाधिकरण्यं तथैव भावरूपव्यापारसामान्यबोधनात् भवतिना सह पचत्यादीनामपि सामानाधिकरण्यम्।[३०] एतावदेव पार्थक्यमुभयोः प्रकारयोर्यत्करोतेः सामानाधिकरण्ये सर्व–काल–पुरुष–वचनानि प्रयोज्यानि भवेयुः। किन्तु भवतेः सामानाधिकरण्ये केवलं भवतीति लट्–प्रथमैकवचनरूपविशेषस्य प्रयोगो भवति। अद्यतनसंस्कृते नैकक्रियासंवलितवाक्यानामभावात् 'पक्ष्यति भवति' 'अपाक्षीद् भवति'' इत्यादिवाक्येषु पचत्यादिक्रियाः कल्पाः सन्ति। कतृकर्मरूपेण क्रियाद्वयमन्वितं दृश्यते नैकेषु स्थलेषु। यथा 'पश्य मृगो धावति' इति वाक्ये धावतिक्रिया पश्यतिक्रियायाः कर्माऽस्ति।[३२] यथाऽनेकसुबन्तमपरस्य सुबन्तस्य विशेषकं भवति तथैवाऽनेकतिङन्तमपि तिङन्तस्यापरस्य विशेषकं भवितुमर्हतीति भर्त्तृहरेराशयः।[३३]

कारकाणां प्रवृत्तिविशेषः क्रियेति पुनः क्रियायास्तात्पर्यं व्यापार इति व्यपदिष्टः। प्रवृत्तिविशेषो नाम व्यापारविशेषः। प्रवृत्तयः परस्परं भिद्यन्ते। शुष्कौदने यथा प्रवृत्तिर्मांसौदने तद्भिन्ना प्रवृत्तिः कर्त्तरि दर्शनात्। अस्ति–म्रियते इत्यनयोस्तथैव प्रवृत्तिभिन्नता।

असृधातुना कर्त्तृव्यापारविशेषो बुध्यत एव।[34] प्रतिकारकस्य विशिष्टप्रवृत्तिः क्रिया। कस्मिंश्चिदपि वाक्ये कर्तृवाच्यपरको धातुः कर्त्तृजन्यं व्यापारं बोधयति। कर्मणि वाच्ये कर्मणो बोधनं भवति। कर्तृकर्मविहायेतरकारकाण्यपि कदाचित्स्वतन्त्रव्यापारवन्ति कर्त्तृत्वमापद्यन्ते। तदा तेषां प्रवृत्तिविशेषबोधो भवति। स्थाली पचतीतिवाक्येऽधिकरणत्वं परिहाय स्थाली स्वव्यापारे स्वतन्त्रा सती कर्त्तृत्वं भजते। तथैव सम्प्रदानापादानकारके विहाय कारकान्तराणि कर्त्तृत्वमापद्येरन्। अतः कारकाणां प्रवृत्तिविशेषः क्रियेति भाष्यवचनस्य सहेतुकता निःसन्दिग्धा। 'प्रवृत्तिविशेष' इत्यस्याशयं स्पष्टीकुर्वता हेलाराजेन मतत्रयं प्रस्तावितम्। (क) (यथोपरिविवेचितम्) एकेषामाचार्याणां मतेन प्रवृत्तिविशेषस्यार्थोऽस्ति व्यापारः, (ख) अन्ये प्रवृत्तिविशेषो विक्लित्त्यादि—फलरूपमिति मन्यन्ते।[35] (ग) अवशिष्टानामाचार्याणां मतेन प्रवृत्तिविशेषो नाम समेषां कारकाणां सामान्यव्यापार इति प्रवृत्तिसामान्यमिति वा न कस्यापि कारकविशेषस्य।[36] तथा सति प्रतिक्रियापदं धात्वंशो धातुसामान्यस्य तथा धातुविशेषस्य च बोधकस्तिष्ठति। यथा पचतिपदे पच्धातुर्धातुसामान्यरूपेण फलव्यापारयोर्धातुविशेषरूपेण विक्लित्तिफूत्कारादीनां च बोधको भवति।

### १.३.१ क्रियाया अप्रत्यक्षता

निरुक्तकारेण पूर्वापरीभूताभावबोधने क्रियात्वमभिप्रेतम्। सांशे सखण्डे च व्यापारे सति आदिमांशस्य समाप्त्यनन्तरं द्वितीयांशस्य पुनर्द्वितीयस्मात्परं तृतीयस्येतिक्रमेण क्रियोत्पत्तिर्भवति। निवृत्तिपर्यन्तं सोऽयं क्रियाक्रमश्चलति। क्षणस्थाय्यपि व्यापारः समेषामवान्तरक्रियाणां सामूहिकरूपत्वेन समकालमेव कदापि प्रत्यक्षतां न गच्छति। यथोक्तं भाष्यकारेण —'क्रिया नामेयमत्यन्तापरिदृष्टा। अशक्या क्रिया पिण्डीभूता निदर्शयितुम्। यथागर्भोऽनिर्लुण्ठितः।' (पा.१.३.१ सूत्रोपरि)। सोऽयं सिद्धान्तो भर्तृहरिणाऽतिरोचकतयोपन्यस्तोऽस्ति। यथा क्षणस्थायिनां ग्—औ—विसर्जनीयवर्णानां चरमप्रत्यक्षकाले एव गौरिति पदस्य बोधो भवति, यथा वा अलातचक्रस्य विविधज्वालानां घूर्णनहेतुकः प्रतीतिविशेषो भवति तद्वदवान्तराणां क्रियाणां समूहोऽखण्डकारेण प्रतिभासितो भवति।[37] न केवलमग्निप्रज्वालन—फूत्कारादयो नैके भागा भवन्ति पच्धातुनिष्ठव्यापारस्य नैकेऽपि उपभागाः समवलोक्यन्तेऽग्निप्रज्वालनस्य च यथा — इन्धनाहरणैकत्रीकरणाऽग्नौ संस्थापनादयः।[38] विघटनस्येयं प्रक्रिया तादृशीं स्थितिं भजमाना दृश्यते यत्र केवलमेको व्यापारोंऽवशिष्यते। तादृशे व्यापारान्तिमांशे क्रियेति व्यपदेशो नैव युज्यते नाऽपि पूर्णव्यापारे।[39]

अत एव क्रिया त्वप्रत्यक्षेति दार्शनिकैः सुतरां साधिता। अन्येषामाचार्याणां मतेन स एव चरमव्यापारः क्रिया भवेत् यस्या अव्यवहितोत्तरकालं फलं तु निष्पाद्यते। यद्यपि ताः सर्वाः क्रिया आनुपूर्विकया संघटिताः सन्त्यः फलनिष्पत्तौ युञ्जाना विचारितास्ताः सर्वाः स्वस्वोत्तरकालघटितानां क्रियाणामेवोत्पादिकाः सन्ति। केवलमन्तिमा क्रिया यदुत्पत्तेरव्यवहितोत्तरकालमेव फलोत्पत्तिर्जाता सैव क्रियापदवाच्या। तत्तत्पूर्वोत्थापिता निखिलाः क्रिया गौण्या लक्षणयैव क्रियासंज्ञात्वं भजन्ते।[60]

## १.३.२ क्रियाया अखण्डता

पचति–पचतः पचन्त्यादिक्रियापदेषु एकत्व–द्वित्व–बहुत्वादीनां बोधो न भवति, केवलं कर्त्तुः संख्याबोधनम्। नापि क्रियायां पुरुषभेदः। एकेन द्वाभ्यामथवा नैकैः कर्त्तृभिः सम्पादिता क्रियैकप्रकारिका भवति। तथैव पचति–पचसि–पचाम्यादिक्रियापदानि दृष्ट्वा क्रियाणां पुरुषबोधो भवति। कर्त्तृगतपुरुषभेदानुकारमेवैतेषु पुरुषभेदः।[61]

## १.३.३ निष्कर्षः

वस्तुतो व्याकरणदर्शनस्य प्रमुखप्राचीनतत्त्वज्ञानां भाव–क्रियाऽऽख्यात–व्यापारादिशब्दस्वरूपविवेचने मतपार्थक्यं सुतरां चकास्ति। व्यक्तिपक्षे भावो व्यापारो वा क्रिया, जातिपक्षे सत्ताऽथवा स्थितिः क्रियेति विचारयन्त्येके। सैव सत्ता जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते नश्यतीति षड्भावविकारैर्विवर्त्तिता भवति। सूक्ष्मदृष्ट्या एते सर्वे विकाराः सामान्येनाऽऽविर्भाव–तिरोभावात्मक–तयाऽथवा जन्मनाशरूपतया द्वयोरेव भावविकारविभागयोरन्तर्भाविताः स्युः। वस्तुत एतेषु कोऽपि विकारविशेष आविर्भाव–तिरोभावयोरन्यतरस्थितौ वर्तमानोऽनुभूयते। नात्राविर्भावतिरोभाववेव सत्ताया विकारोऽस्ति। अन्तिसत्ताऽविनश्वरा, सैव क्रियावाच्या।[62] आख्यातशब्दविषयेऽपि मतवैविध्यं विद्यते। कदाचिद् धातुं कदाचिन्न क्रियापदं बोधयितुं प्रयुक्तः स शब्दो यास्केन।[63] भावशब्दस्य प्रयोगः क्रियां व्यापारं वाऽभिप्रैति।[64] दुर्गाचार्यस्य मतानुसारं भावशब्दः फलार्थस्यापि वाचकोऽस्ति।[65] पाणिनिस्तु धात्वर्थबोधनाय कदाचित्क्रियाशब्दस्य कदाचिद्भावशब्दस्य च प्रयोगः कृतो दृश्यते।[66] क्रियाभावशब्दयोः प्रयोगे पाणिनेरभिप्रायो महाभाष्यदिव्याख्याग्रन्थेषु परिष्कृतो दृश्यते। भाष्यकारः क्रियाशब्दमाह।[67] भट्टोजि–कौण्डभट्ट–नागेशभट्टादीनामर्वाचीनानां वैयाकरणानां पूर्वोक्तपारिभाषिकशब्देषु मतद्वैधं सांकर्यं वा न दृश्यते। विषयप्रतिपादने

तेषां कृतिषु समानशब्दानां प्रयोगो विहितः। एतेषां मतानुसारम् आख्यातादीनामर्थ–विशेषास्त्वेवंभूताः[४९]–.

आख्यातम् = क्रियापदम् (धातु–तिङ्–योगजन्यं परिनिष्ठितरूपम्)

धातुः = क्रियापदानां प्रकृतिः

फलं व्यापारश्च = धात्वर्थः

तिङः = क्रियापदेषु विहिताः प्रत्ययाः

## १.४ फलव्यापारसन्दर्भे नैयायिकमीमांसकानां विचारः

नैयायिका वैयाकरणा इव फलव्यापारौ धात्वर्थं मन्यन्ते किन्तु (क) कर्तु–कर्म–संख्या–कालरूपे तिङर्थे तेषां विमतिः। (ख) तन्मतेनाऽऽख्यातार्थः (तिङर्थः) भवति यत्नपर्यायवाचिकृतिः (ग) पुनः शाब्दबोधः प्रथमान्त–विशेष्यस्तिष्ठति। यथा 'देवदत्त ओदनं पचति' इति वाक्यस्य शाब्दबोधोऽस्ति ओदनकर्मकविक्लित्त्यनुकूल–व्यापारनुकूलकृतिमान् देवदत्तः। अत एवाऽऽख्यातार्थकृतिप्रथमान्ततार्थमुख्यतादृष्ट्या वैयाकरणनैयायिकानां परस्परं विरोधः।

मीमांसकानां मतेन फलमेव धात्वर्थः। व्यापारस्तु आख्यातार्थः (तिङर्थः)। व्यापाराश्रयकर्तृकर्मणी लक्षणयाऽऽक्षिप्ते मते। वैयाकरणानां शाब्दबोध इवैषामपि व्यापार–प्रधानकोऽस्ति। 'देवदत्तः पचति' इति वाक्यस्य 'देवदत्ताभिन्नैककर्तृकवर्त्तमानकालिक–विक्लित्त्यनुकूलो व्यापार', इति। विस्तारभिया सारांशत एवायं विचारोऽत्रोपन्यस्तोऽस्ति।

## १.५ सकर्मकाऽकर्मकत्वनिरूपणे धात्वर्थविचारस्य सहेतुकता

फलव्यापारयोर्धातुरिति लक्षणं धातूनां सकर्मकाऽकर्मकत्वविचारे सुतरां सहयोगं करोति। (क) येषां धातूनां फलव्यापारौ समानाधिकरणकौ ते सन्ति धातवोऽकर्मकाः।[५०] 'देवदत्तः शेते' इति वाक्ये निद्रारूपं फलं तदनुकुलव्यापारश्च देवदत्तनिष्ठौ। अत एव शीधातुरकर्मकः। (ख) नितान्तवर्जितफलांशका धातवोऽपि अकर्मकाः। अस्ति–विद्यते–वर्तत–आदीनां धातूनां फलांशप्रतीतिः सूक्ष्यतयाऽपि सम्भवति।[५१] यास्कस्यापि मतमस्ति यदस्त्यां क्रियायामुत्पन्नसत्त्वस्वरूपधारणरूपसत्तैवार्थः।[५२] भर्तृहरिमतेन –

आत्मानमात्मना विभ्रदस्तीति व्यपदिश्यते।
अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः।।

(वाक्यप. ३.३.४७)

अस्तिक्रियायाः प्रयोग आत्मनाऽऽत्मानं विभ्रद् इत्यर्थे भवति। तस्य मतेनाऽऽत्म–रूपकर्मणो धात्वर्थेऽन्तर्भावात् स धातुरकर्मको विविच्यते। भर्त्तृहरिणाऽपिधातूनामकर्मकत्वं विमृशतोच्यते।

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया।।

(वाक्यप. ३.७.८८)

कारिकायास्तात्पर्यमिदम् (क) सकर्मकधातुर्यद्यकर्मकधात्वर्थे प्रयुज्यते तर्हि सोऽवश्यमकर्मकतां याति यथा 'दासी भारं वहति'– प्रयोगे 'वहति' सकर्मकः। किन्तु स्यन्दनार्थेऽकर्मको–वहति' 'नदी वहति' इत्यादौ, (ख) यदि कर्म धात्वर्थेऽन्तर्भुक्तं भवेदककर्मकताप्ति'– 'जीवति' नाम प्राणानां धारणां करोति यत्र प्राणरूपकर्मणो जीवधातावन्तर्भावः। तथैव 'नृत्यति' 'गात्रं' विक्षपति' इत्यर्थे गात्ररूपकर्मणो नृत्धा–तावन्तर्भावः। पूर्वालोचितभूधातुरपि आत्मानमात्मना विभ्रदर्थे 'आत्मरूपं' कर्म धात्वर्थेऽन्तर्भुक्तम्, (ग) प्रसिद्धिवशात् सकर्मकधातूनामकर्मकत्वावाप्तिर्यथा 'मेघो वर्षति' यत्र वर्षतिक्रिया जलवर्षणेऽर्थे प्रसिद्धाऽत एव जलरूपकर्मणोऽनावश्यकता, (घ) कदाचिद् विवक्षातः सकर्मकधातुरकर्मकत्वं भजते। सकर्मकोऽपिधातुर्यत्राऽकर्मकवद् व्यवह्रियते– 'हितान्न यः संशृणुते स किं प्रभुः' (किरात. २.७) इत्यादि।

नन्वात्मानं जानाति, इच्छत्यादिवाक्येषु ज्ञाधातोः फलज्ञानस्य ज्ञानानुकूलव्यापारस्य च कर्त्तृनिष्ठतया ज्ञाधातोरकर्मकत्वमिति चेत् समाधनमत्र भाष्यरीत्यैवं भवति– 'द्वावात्मानौशरीरात्मा अन्तरात्मा च। अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुखेऽनु–भवति'। अत एव ज्ञाधातोर्ज्ञानरूपफलं विषयतासम्बन्धेन शरीरात्मनिष्ठं तदनुकूलक्रिया–रूपभावनाऽन्तरात्मनिष्ठा येन योरसामानाधिकरण्यम्। तयोर्भिन्नाधिकरणवृत्तित्वे ज्ञाधातुः सकर्मकः। तथा च भर्त्तृहरिः–

एकस्य बुद्‌ध्यवस्थाभिर्भेदे च परिकल्पिते।
कर्मत्वं करणत्वं च कर्तृत्वं चोपजायते।।

(वाक्यप. ३.७.१०४)

धातूनामकर्मकत्वे नियामकतत्त्वानि तत्तद्विशिष्टार्थत्पराणि सन्ति यथा–

लज्जा–सत्ता–स्थिति–जागरणं वृद्धि–क्षय–जीवितमरणम्।
शयन–क्रीडा–रुचि–दीप्त्यर्थं धातुगणं तमकर्मकमाहुः।।[13]

लज्जादित्रयोदशधातूनां तत्पर्यायवाचिनां चाकर्मकत्वं स्वतः सिद्धमिति शास्त्रकाराः।

सकर्मकत्वं नाम फलव्यधिकरणव्यापारवाचकत्वम्। देवदत्तस्तण्डुलान् पचतीति वाक्ये पचतिधात्वर्थं फलं विक्लित्तिस्तण्डुलनिष्ठा, विक्लित्त्यनुकूलव्यापारः फूत्कारादिः कर्तृदेवदत्तनिष्ठः। अत एव तयोर्भिन्नाधिकरणत्वे पच्धातुः सकर्मकः। तथैवोत्तरदेश–संयोगानुकूलव्यापरो गच्छत्यर्थः। अत्र संयोगरूपफलं समवायसम्बन्धेनोभयग्रामदेवदत्तनिष्ठम्। तथा सति उत्तरदेशसंयोगरूपफल   दनुकूलव्यापारस्य च कर्त्तरि देवदत्ताधिकरणे सत्त्वात् फलव्यापारयोरेकाधिकरणत्वे पूर्वप्रतिपादनानुसारं गम्धातोरकर्मकताप्तिः। किन्तु कौण्डभट्टेनात्र[14] सयुक्तिकं गम्धातोः सकर्मकत्वं प्रतिष्ठापितम्। पूर्वोद्धृतायां सिद्धान्त–कारिकायाम्[15] 'एकनिष्ठतायाम्' इति पदमेकमात्रनिष्ठतायामित्यर्थं व्यनक्ति। गम्धातोः प्रसङ्गे यद्यपि व्यापारः केवलकर्त्तृनिष्ठोऽस्ति संयोगरूपफलं तु ग्रामदेवदत्तयोरुभय–योस्तिष्ठति। फलस्योभयनिष्ठत्वादेकाधिकरणमात्रनिष्ठताया अभावात्तस्याऽकर्मकत्व–लक्षणाऽसंगतिरत एव गम्धातुः सकर्मकः।[16]

किन्तु नागेशभट्टेन कौण्डभट्टीयः परामर्शः पूर्णतया निर्दुष्ट इति न स्वीकृतः। 'अधिशीङ्स्थासां कर्म' (पा. १.४.४६) इति सूत्रबलेन भूमिमधिशेते अधितिष्ठति–अध्यास्त आदिक्रियासु नायं संगच्छते नियमः। शब्दशास्त्रीयमर्यादाबलेनैतेषां सकर्मकत्वं केषां नानुमतम्। अपि चैतेषां सकर्मकत्वप्राप्तिबलेन 'अध्यासिताभूमयः' इति कर्मवाच्ये आधारस्यापि भूमेः कर्मप्रयोगो युज्यते'। कर्मत्वान्वयबलेन आसधातुः सकर्मकः सिद्ध्यति, न तु पूर्वालोचितसकर्मकत्वनिरूपफलक्षणबलेन। अत एव व्याकरणशास्त्रे येषां सकर्मकत्वमुपदिष्टं एव धातवः सकर्मकास्तदितरेऽकर्मका इति नागेशस्य मतिः।[17]

अन्ततो गत्वा लक्षणीयमिदं यत् प्राचीनभारतीयमनीषिणः पदपदार्थसमीक्षणे अतिगूढं तलस्पर्शि च विचारमन्थनं कृतवन्तो दृश्यन्ते। फलव्यापारात्मकधात्वर्थविवेचनं तृपलक्षणमेव। इति शम्।।

संदर्भाः

१.. द्रष्टव्याः द्र. वैयाकरणभूषणसारः, दर्पणसंस्कृतव्याख्यया सुबोधिनीहिन्दी–व्याख्यया च समलङ्कृतः, चन्द्रिकाप्रसादद्विवेदि–संपादित, चौखम्बा सुरभारती प्रतिष्ठानम्, दिल्ली, १९८९, पृ. ६

२१. द्र. जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम्।
असाध्या व्यक्तिरूपेण स साध्येवोपलभ्यते। ३.८ *वाक्यपदीयम्* क्रियासमुद्देश (क्रि.स.) २१, पृ. १४ (के.भि.आभ्यङ्कर–भि.पि. लिमायेसंपादितम्, पुना–विश्वविद्यालय–प्रकाशितम् १९६५–संस्करणमत्रानुसृतम्)।

३३. द्र. कर्तरि शप् – पा. ३.१.६८, अदिप्रभृतिभ्यः शपः –पा. २.४.७२ जुहो–त्यादिभ्यःश्लुः' पा. २.४.७५, दिवादिभ्यः श्यन्–पा. ३.१.६९, स्वादिभ्यः श्नुः– पा. ३.१.७३, तुदादिभ्यः शः–पाः ३.१.७७, रुधादिभ्यः,श्नम् पा. ३.१.७८, तनादिकृञ्भ्य उः–पाः ३.१.७९, क्र्यादिभ्यःश्ना–पा. ३.१. ८१, सत्यापपाश, ... चुरादिभ्योणिच्, पा.३.१.२५।

४४. द्र. तु–रु–स्तु–शम्यमः...। तु इति सौत्रोऽयं धातुः। पा. ७.३.९५ उपरि काशिकावृत्तिः, स्तम्भु–स्तुम्भु–स्कम्भु–स्कुम्भुस्कुञ्भ्यः श्नुश्च। (पा.३.१.८२) काशिकायामुच्यते–'आद्याश्चत्वारो धातवः सौत्राः' इति।

५५. द्र. कण्ड्वादिभ्यो यक्–पा.३.१.२७ : कड्वादिराकृतिगणः, एकादशगणः खलु।

१६. द्र. सनाद्यन्ता धातवः –पा. ३.१.३२, पा. ३.१.५ इति आरम्भ्यः पा.३.१.३२ सूत्रावधि सर्वे सनाद्यन्ता धातव इति अतिदेशेन धातुसंज्ञका भवन्ति।

७. द्र. वैयाकरणभूषणसारः पूर्वोल्लिखित, हिन्दीव्याख्या, पृ.७।

८. तत्रैव

९. द्र. *महाभाष्यम्* पा.१.३.१ सूत्रोपरि–'क्रियोवचनो धातुः। का पुनः क्रिया? ईहा। का पुनरीहा? चेष्टा। का पुनश्चेष्टा? व्यापारः। कथं पुनर्जायन्ते क्रियावचनाः पचादय इति। यदेतेषां करोतिना सामानाधिकरण्यम्। किं करोति? पचति। इह पचतीत्युक्ते कश्चित्शब्दः श्रूयते पच्शब्दश्चकारान्तः, अतिशब्दश्च प्रत्ययः अर्थोऽपि कश्चिद् गम्यते–विक्लित्तिः कर्तृत्वमेकत्वं च।

१०. द्र. *वैयाकरणसिद्धान्तपरमलघुमञ्जूषा*, 'धात्वर्थनिर्णयः', (संपादनम्), कपिलदेव–शास्त्री, कुरुक्षेत्र–विश्वविद्यालयः, १९७५, पृ. १२६।

११. तत्रैव पृ. १३१ : परे तु फलव्यापारयोर्धातोः पृथक् शक्तावुद्देश्यविधेयभावेन अन्वयापत्तिस्तयोः स्यात्। पृथगुपस्थितयोस्तथाऽन्वयस्य औत्सर्गिकत्वात्। किञ्चैकपदे व्युत्पत्तिद्वयकल्पनेऽतिगौरवम्। तथाहि फलविशेषणकव्यापारबोधे कर्तृप्रत्यय–समभिव्याहृत–धातुजन्योपस्थितिः कारणम्। व्यापारविशेषणक–फलबोधे कर्मप्रत्ययसमभिव्याहृत धातुजन्योपस्थितिः कारणमिति कार्यकारण–द्वयकल्पनम्, धातोरर्थद्वये शक्तिद्वयकल्पनं, धातोर्बाधजनकत्वसम्बन्धद्वयकल्पनं चातिगौरवम्। तस्मात्फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च धातूनां शक्तिः। कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहाराच्च तत्तद्बोधे नियामकः–इत्याहुः।

१२. द्र. स्वरितञितः कर्त्रभिप्राये क्रियाफले—पा. १.३.७२ शेषात्कर्तरि परस्मैपदम्–पा. १.३.७८

१३. द्र. *परमलघुमञ्जूषा,* पूर्वोल्लिखिता, पृ. २७

१४. तत्रैव, पृ. ४३–१४४

१५. द्र. *वैयाकरणभूषणसारः*, दर्पणसंवलित, पूर्वोल्लिखितः पृ. १२

१६. तत्रैव, पृ.११

१७. द्र. *परमलघुमञ्जूषा,* पूर्वोल्लिखता, पृ. १२९

१८. द्र. नामपदवाच्यार्थाश्रयक्रियाव्यंग्यो भावः पाकरागत्यागाख्यः। स यत्र प्रधानं गुणभूता क्रिया तदिदं भावप्रधानम्। किं पुनस्तदिति? आख्यातम् आख्यातेनानेन गुणभावेन वर्त्तमाना अनेककारकप्रविभक्ता स्फुरमाणेव प्रधानद्रव्यभावा–भिव्यक्त्युन्मुखीभूता क्रिया। तस्याश्च प्राधान्येन वर्त्तमानो भावः स्वात्मलाभ–प्रधान इत्याख्यातम्। दुर्गस्य निरुक्तव्याख्या १.१.१. उपरि।

१९. द्र. एके पुनर्भावप्रधानमाख्यातमिति प्रकृत्यर्थप्रधानमिति मन्यन्ते। प्रकृत्यर्थ–विशेषणं हि प्रत्ययार्थादय इति। भावः कर्म, क्रिया धात्वर्थ इत्यनर्थान्तरम्। स यत्र प्रधानं गुणभूतानि साधनानि, तदिदं भावप्रधानम्। किं पुनस्तत्? आख्यातम्। पूर्वत्रैव।

२०. द्र. क्रियाप्रधानमाख्यातम्– इति यास्कोक्तौ क्रियापदं करणव्युत्पत्त्या व्यापारपरं कर्मव्युत्पत्त्या फलपरमिति बोध्यम्। तथा च 'ग्रामं गच्छति चैत्रः' इत्यत्र 'एकत्वावच्छिन्न–चैत्राभिन्नकर्तृको वर्त्तमानकालिको ग्रामाभिन्नकर्मनिष्ठो यः संयोगानुकूलो व्यापारः। 'ग्रामो गम्यते मैत्रेण' इत्यत्र तु मैत्रकर्तृकवर्तमान–कालिकव्यापारजन्यो ग्रामाभिन्नकर्मनिष्ठः संयोगः इति बोधः *परमलघुमञ्जूषा*, पूर्वोल्लिखिता, पृ. २४५।

२१. द्र. पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्। निरुक्तम् १.१.१

२२. द्र. 'षड्भावविकारा भवन्तीति वार्ष्यायणिः – जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति। *महाभाष्यम्* १.३.१उपरि।

२३. द्र. सुप्तिङन्तं पदम्–पा. १.४.४, धातोः –पा ३.१.९१ अस्य सूत्रस्योपरि काशिका : धातोरित्ययमधिकारो वेदितव्य आतृतीयाध्यायपरिसमाप्तेः।

२४. द्र. बालमनोरमाटीका, पा. १.३.१ सूत्रोपरि, *वैयाकरण–सिद्धान्त–कौमुदी*। चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, १९६९, पृ.२४।

२५. द्र. *महाभाष्यम्*, १.३.१ उपरि

२६. द्र. 'सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ्स्यात्', – *सि.कौ.* ३१८४ सूत्रोपरि।

२७. द्र. क्रियार्थोपपदस्य च कर्मणि स्थानिनः पा. २.३.१४, तुमर्थाच्च भाववचनात्– पा. २.३.१५, तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् पा. ३.३.१०, भाववचनाश्च– पा ३.३.११, भावे – पा. ३.३.१८, क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः – पा. ३. ४.२ इत्यादीनि।

२८. द्र. *महाभाष्यम्* पा. १.३.१ उपरि।

२९. द्र. क्रियाशब्दः सपरिस्पन्दसाधनसाध्यार्थरूढो भावशब्दः सपरिस्पन्दाऽपरिस्पन्दा–ऽन्यतरसाध्य इति भावः। *उद्योत*: १.३.१ उपरि, 'किं च परिस्पन्दस्वभावा लोके क्रिया प्रसिद्धा–'हेलाराजव्याख्या, *वाक्यपदीयम्* ३.८ (क्रियासमुद्देशः) १ कारिकोपरि'

३०. द्र. कथं पुनर्ज्ञायते भाववचनाः पचादय इति। यदेषां भवतिना सामाना–धिकरण्यम्, भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीदिति *महाभाष्य* १.३.१. उपरि।

३१. द्र. क्रिया क्रियया समवायं न गच्छति, पचति पठतीति। महा. ३.१.६७ उपरि।

३२. द्र. 'ननु साध्यत्वात् क्रियायाः कथं क्रियान्तरं प्रति कर्मकर्त्तृभावः?

(क) विषयभेदादेकस्याप्यर्थस्य साध्यसाधनभावसम्बन्धसंभवाददोषः। कैयट प्रदीपः पा. ३.१.६७ उपरि।

(ख) यत्र यं प्रति साध्यत्वमसिद्धा तं प्रति क्रिया।
सिद्धा तु यस्मिन्साध्यत्वं न तमेव पुनः प्रति।।

*वाक्यप* ३.८.५०

मृगो धावति पश्येति साध्यसाधनरूपता।
यथा विषयभेदेन सरणस्योपपद्यते।। *वाक्यप* २.६

३३. सुबन्तं हि यथानेकं सुबन्तस्य विशेषकम्।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषकम्।। *वाक्यप* २.६

३४. द्र. कारकाणां प्रवृत्तिविशेषः क्रिया:। अन्यथा कारकाणि शुष्कौदने प्रवर्त्तन्ते, अन्यथा च मांसौदने—अन्यथा हि कारकाणि अस्तौ प्रवर्त्तन्ते, अन्यथा म्रियतौ।' *महाभाष्यम्* पा. १.३.१ उपरि।

३५. द्र. 'अन्ये तु विशेषपदे भरं कृत्वा प्रवृत्तीनां विशेषः प्रवृत्तिविशेष इति सकलकारकजन्या विक्लित्त्यादिरूपा भूतिः फलभूता कारकप्रवृत्तेः क्रियेति व्याचक्षते'। हेलाराजव्याख्या, *वाक्यप*. ३.८.१ उपरि।

३६. द्र. नव्या हि फलजननैव साधारणत्मिका क्रिया प्रवृत्तिविशेष इत्युच्यते। प्रवृत्तिश्चार्थविशेषश्चेति। विशेषोऽस्याः फलजननरूपम् न पुनरधिश्रयणादि—रूपतैव। तेन जननाख्यो विशेषः प्रवृत्तीनां क्रिया। हेलाराजव्याख्या *वाक्यप*. ३.८.१ उपरि।

३७. द्र. यथा गौरिति संघातः सर्वो नेन्द्रियगोचरः।
भागशस्तूपलब्धस्य बुद्धौ रूपं निरूप्यते।।
इन्द्रियैरन्यथाप्राप्तौ भेदांशोपनिपातिभिः।
अलातचक्रवद्रूपं क्रियाणां परिकल्पते।।

*वाक्यप*. ३.८.७–८

३८. द्र. यथा च भागाः पचनेरुदकासेचनादयः।
उदकासेचनादीनां ज्ञेयां भागास्तथापरे।। *वाक्यप*. ३.८.९

३९. द्र. यश्चापकर्षपर्यन्तमनुप्राप्तः प्रतीयते।
तत्रैकस्मिन् क्रियाशब्दः केवले न प्रयुज्यते।। *वाक्यप.* ३.८.१०

४०. अनन्तरं फलं यस्याः कल्पते तां क्रियां विदुः।
प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्याता। *वाक्यप.* ३.८.१७

४१. द्र. (क) न तिङन्तान्येकशेषारम्भं प्रयोजयन्ति। किं कारणम्? यथा जातीयानां द्वितीयस्य पदस्य प्रयोगे सामर्थ्यमस्ति तथाजातीयकानामेकशेषः। न च तिङन्तानां द्वितीयस्य पदस्य प्रयोगे सामर्थ्यमस्ति। किं कारणम्? एका हि क्रिया। एकत्वेनोक्तत्वात् तस्यार्थस्य द्वितीयस्य पदस्य प्रयोगेण न भवितव्यम्। उक्तार्थानामप्रयोग इति— *महाभाष्यम्* पा. १.२.६४ उपरि।
ख. आख्यातवाच्या क्रिया सर्वत्र निर्वृत्तभेदा प्रतीयते। भवद्भिरास्यते इत्यादौ वस्तुस्थित्या कर्तृभेदादभेदेऽपि तिङन्ताद् भेदस्यानवगमात्। कैयट— *प्रदीप* पा. १.२.६४ उपरि।

४२. द्र. (क) अन्तरात्मनि या सत्ता सा क्रिया कैश्चिदुच्यते।
भाव एव हि धात्वर्थ इत्यवच्छिन्न आगमः।।
*वाक्यप.* ३.८२४

(ख) आविर्भावतिरोभावौ जन्मनाशौ तथापरे।
षट्सु भावविकारेषु कल्पितौ व्यावहारिकौ।।
*वाक्यप.* ३.८.२६

(ग) जायमानात्र जन्मान्यद्विनाशेऽप्यपदार्थता।
अतो भावविकारेषु सत्तैका व्यवतिष्ठते।। *वाक्यप.* ३.८२८

४३. द्र. (क) नामाख्यातजानीति शाकटायनो नैरुक्तसमयश्च,
(ख) भावप्रधानमाख्यतं सत्त्वप्रधानानि नामानि। *निरुक्तम्* १.१.१

४४. द्र. पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति, पचति इति।
*निरुक्तम्* १.१.१

४५. द्र. क्रियाव्यङ्ग्यो भावः पाकरागत्यागाख्यः। दुर्गाचार्यः, *निरुक्तम्* १.१.१ उपरि

४६. द्र. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्। पा. ३.३.१०, भावकर्मणोः। पा. १.३.१३

४७. द्र. *महाभाष्यम्* पा. ३.१.१. उपरि (क) धातुरेव क्रियामाह। अर्थोऽपि कैश्चिदवगम्यते विक्लित्तिः। (ख)कारकाणां प्रवृत्तिविशेषः क्रिया। (ग) भवनं भावः। भाव्यते यः स भावः। भाववचनो धातुः।

४८. द्र. यावन्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेतत्यभिधीयते।। *वाक्यप.* ३.८.१
गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्धया प्रकल्पितभेदः क्रियेति व्यपदिश्यते।। *वाक्यप.* ३.८.४

४९. द्र. बलदेव सिंहः, *पदपदार्थसमीक्षा* (हिन्दीभाषायाम्), कुरुक्षेत्रविश्वविद्यालय, १९६९, पृ. ७६

५०. द्र. भूषणसारिका १३ – 'फलव्यापारयोरेकनिष्ठतायामकर्मकः।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः।।
अपि च 'फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम्, *परमलघुमञ्जूषा*, पूर्वोदाहृता, 'धात्वर्थनिर्णयः, पृ. १४८

५१. द्र. क्वचित्तु फलांशाभावादकर्मकत्वम्। यथाऽस्त्यादौ केवलं सत्तादिरर्थः। फलांशस्य सूक्ष्मतयाप्यप्रतीतेः। उत्पन्नस्य सत्त्वस्य स्वरूपधारणरूपां सत्तामाचष्टेऽस्त्यादि'। तत्रैव।

५२. द्र. अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम्। *निरुक्तम्* १.१.३

५३. द्र. *परमलघुमञ्जूषा*, पृ. १४८

५४. द्र. टिप्पणी ७०।

५५. तत्रैव

५६. *भूषणसारः* पूर्वोदाहृतः पृ. ८९

५७. द्र. वस्तुतस्तु शब्दशास्त्रीय–कर्मसंज्ञाकार्थान्वय्यर्थकत्वं 'सकर्मकत्वम्'। तदनन्वय्यर्थकत्व'मकर्मकत्वम्'। 'अधिशीङ्स्थाऽऽसां (पा. १.४.४६) इत्यनेन भूमय इत्याधारस्य 'कर्मत्वम्'। *परमलघुमञ्जूषा*, पृ. ४५।



# किमिदं धातूनां सकर्मकत्वम्?

सच्चिदानन्दो मिश्रः

धातवस्तावद् द्विविधाः सकर्मका अकर्मकाश्च। सकर्मकाकर्मकपदयोर्यथा बोधो जायते तावता त्वेतदेवाभाति यत् यः कर्मणा समन्वितो भवति धातुः स सकर्मकः यश्च तद्रहितो भवति सोऽकर्मकः। किन्तु व्याकरणे न्यायसम्प्रदाये च सकर्मकाकर्मक–पदयोर्व्युत्पत्तिः स्वरूपनिरूपणञ्च काञ्चिदन्यां विचारसरिणमाश्रित्य क्रियते। अस्मिन्निबन्धे इममेवार्थं निरूपयितुं प्रयासोऽयं मामकः।

व्याकरणसम्प्रदाये फले व्यापारे च धातोः शक्तिः एकवृन्तगतफलद्वयन्यायेन स्वीक्रियते, किंवा फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले च शक्तिः स्वीक्रियते। सर्वोऽपि धातुः फलस्यापि वाचको भवति व्यापारस्यापि। न हि कश्चन धातुः केवलस्य फलस्य न वा केवलस्य व्यापारस्य भवति वाचकः। अकर्मको वा भवतु सकर्मको वा भवेद्धातुः फलव्यापारयोरुभयोरपि भवति वाचकः। क्रियाजन्यफलाश्रयत्वमेव कर्मत्वं भवति, अनया रीत्या क्रियाजन्यफला कर्मेत्युच्यते, यदि सर्वोऽपि धातुः फलव्यापारयोरुभयोरपि भवति स्तर्हि क्रियाजन्यफलाश्रयीभूतेन कर्मणा सर्वोपि धातुः सहितो भविष्यति। अतः सर्वैरपि धातुभिः सकर्मकैर्भवितव्यम्। किन्तु नैवं भवति, कश्चिदेव धातुः सकर्मको भवति कश्चन चाकर्मकः। तर्हि किं कारणमस्ति यस्माद् भवति सकर्मकाकर्मकव्यवहारः? अत्र समाधीयते वैयाकरणैः यदेतत् सत्यमस्ति यत् सर्वत्रैव क्रियाजन्यफलाश्रयो भवति किन्तु यत्र फल व्यापारयोर्वैयधिकरण्यं भवति तत्र भवति सकर्मकत्वं धातोर्यत्र च फलव्यापरयोः सामानाधिकरण्यं भवति तत्र भवति धातोरकर्मकत्वम्। उक्तञ्चैतत् 'वैयाकरणमतोन्मज्जने''—

'फलव्यापारयोरेकनिष्ठतायामकर्मकः।
धातोस्तयोर्धर्मिभेदे सकर्मक उदाहृतः। का.५

यद्यपि गम्यादावपि फलस्य उत्तरदेशसंयोगाद्यात्मकस्य द्विष्ठतया व्यापारस्य फलस्य च कर्तृनिष्ठतया विद्यत एवैकनिष्ठता, अतः सकर्मकाणां गम्यादीनामपि

भवत्यापन्नमकर्मकत्वम्, तथापि फलव्यापारयोरेकमात्रनिष्ठतायां धातोरकर्मकत्वव्यवहारो भवति कदाचनापि धर्मिभेदे भवति सकर्मकत्वव्यवहार:।[2] भ्वादीनामस्त्यादीनां हि स्वीक्रियतेऽकर्मकत्वं तेषामपि धातूनामपि फलव्यापारोभयवाचकत्वं विद्यते। प्रतिपादितं चैतत् भर्तृहरिणा 'वाक्यपदीये'—

'आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते'[3]।

न्यायसम्प्रदाये धातो: क: अर्थ:? इति प्रश्ने त्रीण्युत्तराणि मतभेदेन दीयन्ते। एकं मतमस्ति धातो: केवलं व्यापार एवार्थ:; द्वितीयं मतमस्ति फलावच्छिन्नव्यापारोऽर्थ:; तृतीयं मतं विद्यते धातो: फले व्यापारे च शक्ति द्वयम्। विवृतञ्चैतत् विस्तरशो: व्युत्पत्तिवादे द्वितीयाकारके धातुप्रत्ययप्रकरणे च। तत्र यदि तावद् धातोरर्थ: व्यापारमात्रं तर्हि सकर्मकत्वमन्यविधं भवति, द्वितीयतृतीयमतयोश्चान्यविधम्। प्रथमपक्षे फलं नास्ति धातोरर्थ: तद्भवति द्वितीया अर्थ: सति चैवं गमिस्पन्द्यादीनां धातूनां क्रियामात्रवाचकतया पर्यायत्वं भवति तर्हि कुतो गम्यादे: सकर्मकत्वं स्पन्द्यादीनाञ्चाकर्मकत्वं भवति? अत्र समाधीयते यत् द्वितीयादेर्गम्यादिसमभिव्याहार एव फलबलादन्वयबोधौपयिकोभवति न तु स्पन्द्यादिसमभिव्याहार इति पक्षेऽस्मिन् फलान्वितव्यापारबोधक धातुत्वमेव सकर्मकत्वं भवति, फलानन्वितव्यापारबोधकधातुत्वञ्चाकर्मकत्वं भवति[4]।

द्वितीयपक्षे फलावच्छिन्नव्यापारवाचकत्वं हि सकर्मकत्वं फलानवच्छिन्नव्यापार-वाचकत्वञ्चाकर्मकत्वम्। प्रथमकल्पादत्रायं विशेषो यदत्र कल्पे सकर्मकाणां धातूनां व्यापारमात्रं नार्थ: केवलानामकर्मकाणामेव व्यापारमात्रमर्थ:। प्रथमे कल्पे तु सर्वेषामेव धातूनां व्यापारमात्रमेवार्थ:। तथाहि गम्यादीनां उत्तरदेशसंयोगावच्छिन्नबोधकतया अस्त्यादीनाञ्च सत्तामात्रबोधकतया (व्यापारमात्रबोधकतया) सकर्मकाकर्मकत्वव्यवहारौ सम्भवत:। किन्तु प्रश्नोऽत्र भवति यत् पत्धातोरप्यनया रीत्या सकर्मकत्वमापन्नं भवति, यतोहि अध: संयोगावच्छिन्नव्यापार: पतेरर्थ: इति फलावच्छिन्नव्यापारवाचकत्वं तस्य भवत्येव? अत्र समाधीयते यत् विद्यत एव पतेरपि सकर्मकत्वम्[5]। अपरमपि दीयते समाधानं यदाश्रया-नवच्छिन्नफलावच्छिन्न'व्यापारवाचकत्वं हि सकर्मकत्वं भवति। पतधात्वर्थतावच्छेदकीभूतं फलं त्वाश्रयेणाधोदेशेन भवत्यवच्छिन्नमिति न तस्य सकर्मकत्वं भवति।[6]

अत्रायमपरोऽपि प्रश्न: समुदेति यदनया रीत्या कथंकारं ज्ञादीनां धातूनां सकर्मकत्वं भविष्यति, ज्ञाधातोर्ज्ञानमात्रमर्थ: नास्त्येव फलावच्छिन्नव्यापारवाचकत्वं ज्ञादी-

धातूनाम्? अत्रोच्यते यद् भाक्त एव जानात्यादेः सकर्मकत्वव्यवहारो न तु मुख्यः। उक्तं हि रघुनाथशिरोमणिनाख्यातवादे–'फलावच्छिन्नव्यापारबोधकत्वादेव च धातूनां सकर्मकत्वव्यवहारः, भाक्तस्तु जानात्यादेः' तर्हि किमिदं भाक्तं सकर्मकत्वमिति प्रश्ने दीयते इदमुत्तरं यत् विषयित्वरूपविभक्त्यर्थद्वारानामार्थान्वयित्वमेव गौणं सकर्मकत्वं भवति अस्मादेव कारणाद् यतिधातोः कृधातोश्च समानार्थकत्वेऽपि यतिधात्वर्थे यत्ने नामार्थस्य विषयित्वरूपविभक्त्यर्थद्वाराऽन्वयाभावादेव यतिधातोः भवत्यकर्मकत्वं कृधातोश्च सकर्मकत्वम्। कृधातुना समुपस्थापिते यत्ने नामार्थस्य विषयितया यतधातुना समुपस्थापिते यत्ने नामार्थस्य उद्देश्यतयाऽन्वयो भवति।

तृतीयपक्षेऽपि दर्शितयैव सरण्या केवलव्यापारवाचकत्वमकर्मकत्वं धातोर्भवति फलव्यापारोभयवाचकत्वञ्च सकर्मकत्वं भवति। परिष्कारस्तु दर्शितयैव रीत्या।

वैयाकरणास्तावदिदं नैयायिकमतं नैव सहन्ते प्रथमपक्षे तैः दूषणं दीयते त्यजिगम्योः पर्यायतापत्तिः द्वयोरपि क्रियावाचकत्वाविशेषात्। सत्यमेवेदं दूषणम्। यद्यपि गदाधरभट्टाचार्येण 'व्युत्पत्तिवादे' दोषोऽयं दूरीकृतः स्वीयया [illegible]कारपद्धत्या किन्तु रघुनाथशिरोमणि–भवानन्द–सिद्धान्तवागीशप्रभृतयः पक्षेऽस्मिन् दोषमिमं स्वीकुर्वन्ति, अस्मादेव च कारणात् फलावच्छिन्नव्यापारस्य धात्वर्थतामङ्गीकुर्वन्ति। अत उचितमेवैतत् दोषप्रदर्शनम्। किन्तु द्वितीयतृतीयपक्षयोः कः दोषः? अत्र प्रतिपाद्यते यत् विद्यत एवाकर्मकाणामपि फलवाचकत्वं धातूनाम्। सत्तादिरूपोऽर्थः आत्मधारणात्मको भवति अत्रापि फलमन्तर्भूतमेव विद्यते। अत्र च 'द्व्यर्थः पचिः' इत्यादिकं भाष्यमपि प्रमाणं भवति।"

नागेशभट्टास्तु 'परलघुमञ्जूषायां' क्वचित् स्थले फलांशाभावादेव धातोरकर्मकत्वं भवति इति प्रतिपादयन्ति। तत्र पक्षे तर्कोऽपि दीयते यत् केषुचित् स्थलेषु फलांशस्य सूक्ष्मदृष्ट्यापि प्रतीतिर्न भवति। अतः सर्वस्यापि धातोर्फलव्यापारोभयवाचकत्वं भवतीति वैयाकरणोक्तं नैवादर्त्तुं शक्यत इति मामकीनोऽभिप्रायः।

कृञादौ सकर्मकत्वव्यवहारस्य भाक्तत्वनिराकरणाय वैयाकरणैरुच्यते यत् व्यवहारस्य भाक्तत्वे कर्मणि लकारो न स्यात्, न हि गङ्गापदस्य तीरे लक्षणायां सत्यामपि तेन स्नानादिकार्यं कर्तुं शक्यम्[3]। किन्त्वेतन्नैवाद्रियामहे। लक्षणया शब्दप्रयोगस्तु भवत्येव कर्मणि लकारोऽपि शब्दप्रयोगात्मक एवेति नानया रीत्या निराकर्तुं शक्यते।

वैयाकरणैस्तु नानया रीत्या सर्वत्र सकर्मकत्वव्यवहारो व्युपपादयितुं शक्यः 'अध्यासिता भूमयः' इत्यादौ फलव्यधिकरणव्यापारवाचकत्वात् सकर्मकत्वव्यवहाराऽसम्भव इति शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वमित्येव सिद्धान्तीक्रियते।

इयांस्तु विशेषः– नैयायिकैः फलावच्छिन्नव्यापारवाचकत्वं सकर्मकत्वं स्वीक्रियतेऽन्यत्र तु भाक्तमेव सकर्मकत्वं स्वीक्रियते। वैयाकरणैस्तु सर्वत्रानुगतमेकविधमेव सकर्मकत्वं शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वरूपं स्वीक्रियते।

सन्दर्भाः

१. भट्टोजिदीक्षितविरचितः कारिकामयः ग्रन्थः। उ. वैयाकरणमतोन्मज्जनटीका सं. ललितकुमार त्रिपाठी, भा.वि. संस्थान, वाराणसी, १९९८।
२. पृ.१०४ वैयाकरणभूषणसारः, प्रभादर्पणसहितः चौ.सं. सी.आ.वाराणसी, १९६९
३. उद्धृत पृ. १०५, तत्रैव
४. पृ. २८७ व्युत्पत्तिवादः (सुनन्दानामक हिन्दी व्याख्या सहितः) व्याख्याकारः सम्पादकश्च, डॉ. सच्चिदानन्द मिश्रः, भा.वि. प्रकाशन, वाराणसी, २००१।
५. पृ. ३३ कारकचक्रम् (भवानन्दसिद्धान्तवागीशस्य) प्रका. कलकत्ता, १९३७।
६. पृ. ३१९ व्युत्पत्तिवादः (पूर्वोक्त)
७. पृ. २५ आख्यातवादः सं. प्रबल कुमार सेन, सं. पु. भण्डार कलकत्ता १९७९।
८. पृ. ३५–३७ कारकचक्रम्
९. पृ. ८० वैयाकरणभूषणसारः
१०. द्र. व्युत्पत्तिवादः पृ.२८२–२९२, द्र. कारकचक्रम् पृ.३३, आख्यातवादः पृ.२४।
११. पृ. ८१ वैयाकरणभूषणसारः
१२. पृ. ९८ परमलघुमञ्जूषा सं. हिन्दीसंस्कृत व्याख्यासहित चौ.सं.सी.वाराणसी, १९७४।
१३. पृ. ७२–७३ वैयाकरणभूषणसारः
१४. पृ. ९८ परमलघुमञ्जूषा



# तुलनात्मकदृष्ट्या भवानन्दोक्त–कर्मभेदविवेचनम्

अच्युतानन्ददाश

यथा कर्मणः स्वरूपमधिकृत्य शास्त्रकाराणां मतभेद दृश्यते, तथैव तद्भेदानवलम्ब्य मतभेदोऽपि दृश्यत एव। त्रिमुनिकृतकर्मभेदविचारापेक्षया विस्तरशः कर्मभेदविवेचनं तावद् इदं प्रथमतया भर्तृहरिणा कृतमस्ति[1]। ततः परम् अर्वाचीनग्रन्थकृत्सु भवानन्द–कौण्डभट्ट–जगदीश–गदाधर–नागेश–प्रभृतयः सोपपत्तिकं कर्मभेदं निरूपितवन्तः। तत्राभवान् भवानन्दः यद्यपि प्रथमतः भर्तृहर्युक्तदिशा प्राप्य–विकार्य–निर्वर्त्य–भेदेन कर्मणः त्रैविध्यम् अङ्गीकृतवान्, तथापि स्वातन्त्र्येण कर्मणः स्वरूपं निरूप्य ततः धात्वर्थानवलम्ब्य कर्मभेदान् निरूपितवान्। तदितरे सर्वेऽपि शास्त्रकाराः भर्तृहरिमतमेव प्रामुख्येन प्रमाणयन्तः कर्मभेदान् विवेचितवन्तः। प्रथमतस्तावद् भवान्दोक्तकर्मभेदान् निरूप्य ततस्संक्षेपतः भर्तृहरिमतम् उपन्यस्य अन्येषां मतजातं सङ्क्षेपेण उपपाद्यते।

(1) प्राप्यं, (2) विकार्यं, (3) निर्वर्त्यञ्चेति कर्मणः त्रीन् भेदान् श्रीभवानन्दः प्रतिपादयाञ्चकार स्वीये कारकचक्राख्ये ग्रन्थे। तत्रादौ प्राप्यं निरूपयति ः–

'संयोगादिरूपक्रियाजन्यफलशालि प्राप्यम्'[2] इति। यथा 'ग्रामं गच्छति' इत्यादौ ग्रामादिः।

ततश्च विकार्यं निरूपयति ः– "क्रिया यद्धर्मनाशकं फलं जनयति तद्विकार्यम्"[3] इति। यथा 'काण्डं लुनाति' इति।

अयमाशयः। यस्य धर्मः यद्धर्मः इति विग्रहेण यद्वृत्तिधर्म इति लभ्यते। तथा च, आरम्भकसंयोगविरोधि–विभागहेतु–दात्रादिव्यापार एव लुनात्यर्थः। काण्डावयवानाम् आरम्भकसंयोगरूपो यो धर्मः तद् विरोधि यद् अवयवानां विभागरूपं फलं तज्जनको यः दात्रादिव्यापारः स एव लूञ्-धातोः अर्थः। तेन विभागरूपफलाश्रयत्वात् काण्डावयवानां कर्मत्वं स्यात्। तथा च 'काण्डं लुनाति' इत्यर्थे "काण्डावयवान् लुनाति' इति प्रयोगस्य प्रामाण्यापत्तिः।

अत्रोच्यते – 'काण्डं लुनाति' इत्यत्र काण्डपदेन लक्षणया काण्डावयवा उच्यन्ते। एवं च अवयवविश्लेशजनिका या क्रिया, सा काण्डस्य आरम्भकसंयोगविरोधि = तन्नाशकं यद् विभागरूपं फलं जनयति, तदाश्रयत्वेन काण्डस्य विकार्यकर्मत्वमुपपन्नम्। अत एव 'काण्डं लुनाति' इति वाक्यात् काण्डावयववृत्ति यः आरम्भकसंयोगविरोधी विभागः तदविच्छिन्नो यः दात्रादिव्यापारः, तदनुकूल–कृतिमान् इति वाक्यार्थबोधः।

एवं च प्राप्यकर्मणः विकार्यकर्मणश्च 'क्रियानिमित्तत्वे सति क्रियान्वयित्वं' कारकत्वम् उपपन्नम्। तथा च कारकत्वात्, क्रियाजन्यफलाश्रयत्वाच्च तयोः मुख्यं कर्मत्वम् एव।

इदमत्रावधेयम्। भवानन्दः यद्यपि प्रथमतः कर्मणः स्वरूपदृष्ट्या प्राप्य–विकार्य–निर्वर्त्य–भेदेन त्रैविध्यं वदति, तथापि धात्वर्थानुरोधेन कर्मणः द्वैविध्यं तस्य अभीप्सितम् इति भाति। तथा हि शास्त्रकाराः धात्वर्थानुरोधेन न केवलं कर्मण अपि तु सर्वेषां कारकाणां स्वरूपं प्रतिपद्यन्ते, इति

विश्रुतमेतम्। अत्रापि उक्तरीत्या धात्वर्थं पुरस्कृत्य कर्मभेदाः उच्यन्ते। तथा च धातुर्द्विविधः। (1) सकर्मकः, (2) अकर्मकश्चेति। सकर्मकाः पुनः धातवः द्विविधाः (1) क्रियाजन्यफलवाचकाः (2) केवलक्रियावाचकाश्चेति। यत्र धातूनां क्रिया फलं चार्थौ। तत्र तादृशफलश्रयेत्वेन मुख्यं कर्मत्वमुपपन्नम्। यत्र क्रियामात्रमर्थः तत्र धात्वर्थविषयताश्रयत्वेन कर्मत्वमुच्यते। तच्च गौणं कर्मत्वम् इति। अत एव भवानन्दोक्तदिशा धात्वर्थानुरोधेन कर्म द्विविधम् – (1) मुख्यं कर्म (2) गौणं कर्म चेति। मुख्यं कर्म पुनः द्विविधम् – (1) प्राप्यं कर्म, (2) विकार्यं कर्म चेति। गौणं कर्म तु निर्वर्त्यमेवेति।

भवानन्दोक्तदिशा कर्मभेदविवेचनं निम्नोक्तचित्राकृत्यापि प्रतिपादयितुं शक्यते।




(उभयत्रापि धात्वर्थतावच्छेदक किंचित् फलमस्ति तच्छालित्वेन कर्मत्वम् इत्यतः तस्य मुख्य कर्मत्वम्)

(अत्र धात्वर्थतावच्छेदक फल किमपि नास्ति, धात्वर्थतानिरूपितविषयताश्रयत्वात् गौणं कर्मत्वम्।)

इदमत्राकूतम्। कारकत्वं नाम 'क्रियान्वयित्वे सति क्रियानिमित्तत्वम्' इति। एतादृश-कारकत्वं क्रियातः पूर्वं सिद्धस्य प्राप्यकर्मणः विकार्यकर्मणश्च संभवति। निर्वर्त्यकर्मणस्तु कटादे व्यापारात्पूर्वम् असिद्धत्वेन तस्य क्रियानिमित्तत्वं न संभवतीति क्रियान्वयित्वमात्रं कारकत्वं तस्य वक्तव्यम्।

'कटं करोति' इत्यत्र धातोः फलावाचकत्वात् कटादेः धात्वर्थतावच्छेदकफलानाश्रयत्वेन मुख्यकर्ममध्ये अन्तर्भावो न संभवतीति तस्य गौणं कर्मत्वमुच्यते। तदेतदुपपादयितुं ब्रूते "निर्वर्त्यञ्च निष्पाद्यम्[4]" इति। निर्वर्त्यते निष्पाद्यते पूर्वमविद्यमानस्य उपादानेन इति व्युत्पत्त्या निष्पाद्यमेव निर्वर्त्यकर्म इत्युच्यते। तत्रोदाहरणम् – 'कटं करोति', 'घटं करोति' इति। 'कृञ्'–धातोः यत्नः अर्थः इति नैयायिकाः मन्यन्ते। तस्य फलावच्छिन्नव्यापाराबोधकत्वात् कटादेः तादृशफलानाश्रयत्वाच्च गौणं कर्मत्वम्। कृतिविषयत्वाश्रयत्वात् कटादेः कर्मत्वम्। 'कटं करोति' इत्यादौ साध्यत्वेन कृतिविषयत्वात् कटादीनां कर्मत्वम् उपपन्नम्। अत एव वीरणादेः उपादानत्वेन विषयत्वेऽपि * 'वीरणं करोति' इति न

प्रयोगः। तथा हि वीरणाः सिद्धाः एव सन्तः विलक्षणसंयोगविशिष्टाः असिद्धपूर्वं कटमुत्पादयन्ति। अत एव साध्यत्वाख्यविषयता कटे वर्तते इति तदाश्रयत्वेन कटस्य कर्मत्वम्[5]।

तत्रेयं शङ्का उत्पद्यते यद् – यदि धात्वर्थविधेयत्वेन = धात्वर्थसाध्यत्वेन यद्विषयत्वमस्ति तदाश्रयत्वेन निर्वर्त्यकर्मत्वमुच्यते, तर्हि 'घटं पश्यति' इत्यादौ साध्यत्वेन विषयत्वाभावात् अतिरिक्तं तुरीयकर्मत्वं वक्तव्यम्। न त्वेतद् युक्तम्। कर्मणो हि त्रैविध्यमुक्तं न तु चातुर्विध्यम् इति। अपरं च यदि धात्वर्थविषयताश्रयत्वेन निर्वर्त्यकर्मत्वम् उच्येत तर्हि 'कटं करोति' इत्यत्रापि *'वीरणं करोति' इति प्रयोगापत्तिः। वीरणादीनाम् उपादानत्वेन धात्वर्थविषयत्वात्। अत एव केवलं धात्वर्थविषयताश्रयत्वेन निर्वर्त्यकर्मत्वे उक्तदिशा तत्र अव्याप्त्यतिव्याप्तिदोषप्रसक्तिः।

तत्रोच्यते – "नैवम्। उद्देश्योपादानीयविषयतातिरिक्तविषयत्वेन धात्वर्थविषयस्यैव निर्वर्त्यत्वात्[6]" इति।

अयमाशयः। उद्देश्यताख्या या विषयता, उपादानताख्या या च विषयता, ताभ्याम् अतिरिक्ता या धात्वर्थनिरूपितविषयता, तदाश्रयत्वेन निर्वर्त्यकर्मत्वं वक्तव्यम्। 'घटं पश्यति' इत्यत्र दर्शनविषयता उद्देश्यताख्यविषयता उपादानाख्यविषयताभिन्ना वर्तते इत्यतः तादृशविषयताश्रयत्वात् घटस्य निर्वर्त्यकर्मत्वमुपपन्नम्।

इदमत्राकूतम्। सविषयकधातूनां योगे विषयताश्रयत्वेन कर्मत्वमुच्यते। सविषयकधातवश्च ज्ञानेच्छाकृत्याद्यर्थकाः। 'घटं पश्यति' इत्यादौ दृश्–धातुः ज्ञानार्थकः। 'घटम् इच्छति' इत्यादौ इच्छार्थकः, 'घटं करोति' इत्यादौ च कृत्यर्थकः धातुः। कृत्यर्थकधातुयोगे साध्यत्वेन कश्चिद् विषयो भवति, उपादानत्वेन च कश्चिद् विषयो भवति। प्रकृते 'कटं घटं वा करोति' इत्यादौ कटः घटो वा साध्यत्वेन कृतिविषयौ। वीरणाः मृत्तिकाश्च उपादानत्वेन विषयाः। *'वीरणं करोति' इति प्रयोगवारणाय उपादानीयविषयताऽन्यत्वं विषयतायाः विशेषणं दीयते।

तत्रायं प्रश्नः। उपादानाख्यविषयताभिन्ना या धात्वर्थविषयता, तादृशविषयताश्रयत्वं निर्वर्त्यकर्मत्वम् इति यद्युच्यते, तर्हि 'भोजनं करोति' इत्यर्थे *'तृप्तिं करोति' इति प्रयोगापत्तिः। तृप्तिरूपफले उपादानाख्यविषयताभिन्नायाः उद्देश्यत्वाख्यायाः धात्वर्थनिरूपितविषयतायाः सत्त्वात्। अतः उद्देश्यत्वाख्यविषयताभिन्ना उपादानीयविषयताभिन्ना च या धात्वर्थनिरूपितविषयता तदाश्रयत्वं निर्वर्त्यकर्मत्वमिति।

निर्वर्त्यकर्म अधिकृत्य प्राचां मतं त्वित्थं दृश्यते। प्राचीननैयायिकाः 'क्रियानिमित्तत्वम् एव कारकत्वम्' इति प्रतिपद्यन्ते। तथा सति 'कटं करोति' इत्यादौ कारकत्वं न स्यात्। कटस्य पूर्वमसिद्धत्वेन क्रियानिमित्तत्वाभावात्। अतः निर्वर्त्यकर्मणः कारकत्वोपपत्त्यर्थम् अवयवे लक्षणा वक्तव्या। एवं च 'कटं करोति' इत्यत्र कटपदेन कटावयवाः वीरणाः लक्ष्यन्ते इत्यतः कटावयवानां क्रियानिमित्तत्वात् कारकत्वमुपपन्नम्। अत्र धातोः किमपि फलं नास्तीत्यतः तदाश्रयत्वाभावात् गौणमेव कर्मत्वम्।'

तत्रायं प्रश्नः। यदि लक्षणया कटावयवानां क्रियानिमित्तत्वं स्वीकृत्य 'कटं करोति' इति प्रयोगः उपपाद्यते, तर्हि तथैव क्रियानिमित्तत्वात् कदाचित् *'वीरणं करोति' इति मुख्यप्रयोगः स्यात्। इमामापत्तिं परिहर्तुं 'करोति'–पदसमभिव्याहृत–कर्मवाचकपदस्य अवयवे निरूढलक्षणा स्वीकार्या। अतः 'कटं करोति' इत्यत्र 'करोति'पदसमभिव्याहृतकर्मवाचक... कटपदस्य वीरणरूप–अवयवे

निरूढलक्षणा एव। अत्र हि कटम् उद्दिश्य वीरणविषयिणी कृतिर्दृश्यते। अतः कटोद्देश्यक–वीरणविषयक–कृतिसमये 'वीरणं करोति' इति प्रयोगापादनं नैव सम्भवति।

अत्रेदं चिन्त्यम्। 'करोति'–पदसमभिव्याहृतकर्मवाचकपदस्य अवयवे निरूढलक्षणा इति नियमं यदि स्वीकुर्मः, तर्हि 'सुखं करोति', "शुभं करोति कल्याणं मङ्गलं पुष्टिवर्धनम्", 'युवराजः कृतः', 'करिष्ये वचनं तव', 'पाणिम् उरसि कृत्वा', 'नाधर्मे मनः कुरुते', 'गण्डं करोति' इत्यादिषु स्थलेषु सुख–शुभ–कल्याण–मङ्गलादीनां स्वावयवे निरूढलक्षणा वक्तव्या एव। न त्वेतेषाम् अवयवत्वेन किञ्चित् प्रसिद्धमस्ति। अत उक्तनियमाङ्गिकारे श्रीभवानन्दः प्राचां मते एतादृशम् अस्वारस्यं चिन्तयित्वा "आहुः" इति पदेन तत्सूचयतीति मन्यामहे।

श्रीभवानन्दः धात्वर्थं पुरस्कृत्य कर्मस्वरूपं विवेचयतीति स्पष्टमेतावता प्रबन्धेन। 'ओदनं पचति' इत्यत्रापि 'पच्'धात्वर्थमवलम्ब्य ओदनस्य विकार्यकर्मणि अथवा प्राप्यकर्मणि अन्तर्भावं दर्शयितुं शक्यते इत्यभिप्रैति। तथा हि 'पच्'धातोः रूपादिपरावृत्तिफलक–अधःसन्तापनादिः अर्थः। रूपादिपरावृत्तिर्नाम तण्डुलानां पूर्वरूपनाशः रूपान्तरोत्पत्तिश्च। तच्च धात्वर्थफलम्। तज्जनकः स्थाल्यधःसन्तापनादिव्यापारः। तेन व्यापारेण तण्डुले तदवयेव वा पूर्वरूपनाशः रूपान्तरोत्पत्तिश्च जायते। अतः 'ओदनं पचति' इति वाक्ये ओदनपदस्य तण्डुले तदवयवे वा लक्षणा कार्या। तथा च धात्वर्थतावच्छेदकरूपादिपरावृत्ति–रूपफलशालित्वात् ओदनस्य कर्मत्वम्। धात्वर्थानुरोधेन तण्डुलस्य पूर्वरूपनाशः रूपान्तरोत्पत्तिश्च यदि विकारस्तर्हि 'ओदनस्य' विकार्यकर्मणि अन्तर्भावः। अन्यथा पूर्वरूपनाशस्य रूपान्तरोत्पत्तेश्च धात्वर्थतानवच्छेदकत्वे पूर्वरूपनाशपूर्वक–रूपान्तरविशिष्टत्वेन ओदनस्य प्राप्यकर्मणि अन्तर्भावो बोध्य इति श्रीभवानन्दस्य आशयः।

अत्रेदं चिन्त्यम्। 'स्वरूपव्याक्रिया एवं पराक्रिया' इति न्यायेन भवानन्दप्रतिपादितः त्रिविधकर्मभेदः सर्वथा परित्याज्य एव। निर्वर्त्य–विकार्य–प्राप्यशब्दानां व्युत्पन्नमर्थं परित्यज्य स्वमतिविभवेन नूतनमर्थमभिधत्ते भवानन्दः। निर्वर्त्यशब्दस्य निष्पाद्यम् अर्थः इति यद्यपि सः अभिप्रैति तथापि 'घटं पश्यति' इत्यत्र घटस्य निष्पादकत्वाभावेन तस्य निर्वर्त्यकर्मत्वं न केनापि अङ्गीकृतम्। दृशेः ज्ञानसामान्यार्थकत्वे विषयतां विषयितां वा फलमाश्रित्य, ज्ञानविशेषार्थकत्वे तु चक्षुरिन्द्रिय–विषयसंयोगं फलं स्वीकृत्य घटस्य प्राप्यकर्मत्वं सूपपादम्। वस्तुतस्तु पाणिनिमतेन सर्वाणि कर्माणि प्राप्यकर्माण्येव। कर्मसंज्ञाविधायके सूत्रे (पा॰ 1.4.49.) आप्नोतेः सन्नन्तम् ईप्सितमिति शब्दं प्रयुङ्क्ते पाणिनिः। यद्यत्क्रिया प्रकर्षेण प्राप्नोति तत्तत्कर्मसंज्ञकं भवति। 'ओदनं पचति', 'काण्डं लुनाति', 'घटं पश्यति' इति सर्वेषूदाहरणेषु ओदन–काण्ड–घटादीनां सर्वेषां कर्मणां प्रकर्षेण क्रियासम्बन्धत्वात् पदार्थ–क्रियासम्बन्धे जायमाने कुत्रचित् नूतनस्य पदार्थस्य निष्पत्तिः कुत्रचित् विकारः कुत्रचिन्नैतत्किमपि इति त्वन्यदेतत्। सर्वत्र कर्मणः स्वरूपस्य एकत्वमेव आश्रयणीयम्। विषयविभागस्तु केवलं मन्दबुद्धीनां कृते एव।

न्यायतन्त्रमनुसृत्यैव धात्वर्थतावच्छेदकं फलं किं भवति किं च न भवतीति प्रायशः ब्रूते भवानन्दः। धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति लक्षणस्य प्रायः सर्वत्र अव्याप्त्यतिव्याप्ति–दोषपरिहारेण समन्वयं कर्तुं शक्यते। 'करोति'पदसमभिव्याहारे कर्मवाचकपदेऽवयवे लक्षणा, पतिधातोः अधःसंयोगावच्छिन्नव्यापारार्थकत्वं स्वीकृत्यापि तस्य अकर्मकत्वम् इत्यादि यद् भवानन्देन प्रतिपादितं तत्र कथंचित् विचारपथमारोहतीति तत्र श्रद्धेयम् इति अस्मद्गुरुचरणाः शि॰द॰ जोशीमहोदयाः।

## भर्तृहरिमतेन कर्मभेद–विवेचनम्

तत्रभगवान् भर्तृहरिः कर्माणि कल्पद्वयेन विभजते। प्रथमकल्पानुसारं कर्माणि प्राप्य–विकार्य–निर्वर्त्यभेदेन त्रिधा, द्वितीयकल्पानुसारं तु उदासीन–द्वेष्य–अकथित– अन्यपूर्वकमिति भेदेन चतुर्धा भवन्ति। एवं च आहत्य कर्माणि सप्तविधान्येव। तत्रेदं ज्ञातव्यम्। भगवतः पाणिनेः 'कर्तुरीप्सिततमं कर्म' (पा॰1॰4॰49) इति सूत्रोक्तं कर्म स्वरूपदृष्ट्या प्राप्य–विकार्य–निर्वर्त्य–भेदेन त्रिविधं भवति।

"तथायुक्तं चानीप्सितम्" (पा॰1॰4॰50) इति सूत्रोक्तं कर्म पुनः द्विविधम्, उदासीनं द्वेष्यं चेति। "अकथितं च" (पा॰1॰4॰51) इति सूत्रोक्तं कर्म तु "संज्ञान्तरैरनाख्यातम्" इत्यतः अकथितं कर्म इत्युच्यते। पा॰ 1॰4॰38, 43, 46, 47, 48 इत्यादिभिः सूत्रैः उक्तानि कर्माणि तु अन्य–(संज्ञा)–पूर्वकाणि इति भर्तृहरिः प्रतिपादयति। तथा च यत्र सूत्रकृन्मतानुसारं सम्प्रदानस्य कर्मसंज्ञा, करणस्य अधिकरणस्य वा कर्मसंज्ञा तत्र कर्मसंज्ञायाः करण–सम्प्रदान–अधिकरणसंज्ञा–पूर्वकत्वात् तादृशं कर्म अन्यपूर्वकमित्युच्यते। एवं च तद्रीत्या पाणिनीयसूत्रानुगुण्येन कर्माणि सप्तविधान्येव। तदेतत् सलक्षणं सोदाहरणं च इदानीं विविच्यतेऽधस्तात्।

| क्रमाङ्कः/ कर्मभेदश्च | अवान्तरभेदः | पाणिनीय सूत्रम् | तल्लक्षणम् | तदुदाहरणम् |
|---|---|---|---|---|
| 1. निर्वर्त्यम् | – | 1.4.49 | सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी। यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते।। अथवा यदसज्जायते सद्वा जन्मना यत्प्रकाश्यते तन्निर्वर्त्यम्। | कटं करोति। घटं करोति। पुत्रं प्रसूते। |
| 2. विकार्यम् | – | 1.4.49 | प्रकृतेस्तु (परिणामित्वेन) विवक्षाया विकार्यम् | मृदं घटं करोति। |
| | विकार्यम्(1) | 1.4.49 | प्रकृत्युच्छेदसम्भूतं किञ्चिद् | काष्ठं भस्म करोति। |
| | विकार्यम्(2) | 1.4.49 | (प्रकृतौ) किञ्चिद् गुणान्तरोत्पत्त्या | सुवर्णं कुण्डलं करोति। |
| 3. प्राप्यम् | - | 1.4.49 | क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते। दर्शनादनुमानाद् वा तत्प्राप्यमिति कथ्यते।। | आदित्यं पश्यति। नगरम् उपसर्पति। |
| 5. द्वेष्यम् | - | 1.4.50 | यच्च कर्तुरनीप्सितम्। | विषं भुङ्क्ते। चौरान् पश्यति। |

| | | | | |
|---|---|---|---|---|
| 6.अकथितम् | - | 1.4.51 | संज्ञान्तरैरनाख्यातम्। | गां दोग्धि पयः। अजां ग्रामं नयति। |
| 7.अन्यपूर्वकम् | - | 1.4.37 | यद्यच्चाप्यन्य(संज्ञा)पूर्वकम् (सम्प्रदानस्य कर्मसंज्ञा) | क्रूरम् अभिक्रुध्यति। |
| | | 1.4.43 | (करणस्य कर्मसंज्ञा) | अक्षान् दीव्यति। |
| | | 1.4.46 | (आधारस्य कर्मसंज्ञा) | ग्रामम् अधिशेते। |
| | | 1.4.47 | (आधारस्य कर्मसंज्ञा) | ग्राममभिनिविशते। |
| | | 1.4.48 | (आधारस्य कर्मसंज्ञा) | ग्रामम् उपवसति सेना। |

तथा च सर्वमेतद् भर्तृहरिकारिकासु द्रष्टव्यम्[8]।

आचार्यः कौण्डभट्टोऽपि[9] इमामेव भर्तृहरिप्रदर्शितां सरणीमवलम्ब्य कर्मणः सप्तविधतां प्रतिपादितवान्। इतश्च तत्र न कोऽपि विशेषः दृश्यते इति तदविस्तरं न विवृणुमः।

अत्रेदमवधेयम्। भवानन्दोक्तदिशा 'घटं पश्यति' इति निर्वर्त्यं कर्म। भर्तृहरिमतेन अन्येषां च मतेन एतत् 'प्राप्यं' कर्म एव। 'सुवर्णं कुण्डलं करोति' इत्यादौ भर्तृहरिमतानुसारं विकार्यं कर्म। भवानन्दोक्तरीत्या तु तत् निर्वर्त्यकर्मण्येव अन्तर्भवति।

भवानन्दीयं "क्रिया यद्धर्मनाशकं फलं जनयति तद् विकार्यम्" इति विकार्यकर्मणः लक्षणं तावद् भर्तृहरेः "प्रकृत्युच्छेदसंभूतं (विकार्यम्)" इत्यनेन लक्षणेन कथंचित् साम्यं वहतीति वक्तुं शक्नुमः न तु तत् "गुणान्तरोत्पत्तौ" इत्यनेन समम्। अतः 'सुवर्णं कुण्डलं करोति' इति भवानन्दमतानुसारं निर्वर्त्ये कर्मण्येव अन्तर्भवतीति स्वीकार्यम्।

## गदाधरोक्तदिशा कर्मभेदविवेचनम्

श्रीगदाधरभट्टाचार्यास्तु कर्मणः त्रैविध्यं प्रतिपादितवन्तः (1) प्राप्य, (2) प्रकृतिः, (3) विकृतिश्चेति[10]। (1) तत्र प्राप्यं कर्म तावत् 'क्रियाजन्यफलशालि'। यथा 'ग्रामं गच्छति' इत्यादौ ग्रामादिः। 'घटं पश्यति' इत्यादौ घटादिः[11]। (2) क्रियानिष्पाद्यं यत्तत् विकृतिकर्म इत्युच्यते। यथा 'ओदनं पचति', 'माल्यं करोति', 'कटं करोति' इत्यादौ ओदन–माल्य–कटादि विकृतिकर्म इत्युच्यते। तत्र 'ओदनं पचति' इत्यत्र ओदनस्य तण्डुलादिरूपं प्रकृतिभूतं द्रव्यं विनाश्य ओदनादेः निर्वर्तनम्। इत्यत्र माल्यस्य प्रकृतिभूतं कुसुमादिकम् अविनाश्यैव सन्दर्भादिरूपविशेषणनिष्पादनेन विशिष्टस्य माल्यादेः निर्वर्तनम्। 'कटं करोति' इत्यत्र कटस्य च काशादिरूपधर्मिणम् अविनाश्य तत्रैव कटादिरूपधर्मिनिष्पादनम्। क्रियायाः ईदृशं च कर्म प्रकृतेः असमभिव्याहारस्थले निर्वर्त्यम् इत्युच्यते।

तत्रेयं शङ्का। 'तण्डुलान् ओदनं पचति', 'कुसुमानि स्रजं करोति', 'काशान् कटं करोति' इत्यादौ प्रकृतिसमभिव्याहारस्थले निर्वर्त्यते निष्पाद्यते यदिति व्युत्पत्त्या, ओदनादेः यद्यपि निर्वर्त्यता अस्ति, तथापि तदव्यावृत्तमेव पारिभाषिकनिर्वर्त्यत्वम्।

तदेतद् –

"सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी।

यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते।।"

इति भर्तृहरिकारिकां प्रमाणयन्तः समर्थयन्ति गदाधरभट्टपादाः। एवं चोक्तेषु उदाहरणेषु ओदन-स्रक्-कटादेः प्रकृति–असमभिव्याहारस्थले विकारकर्मण्येव अन्तर्भावः।

प्रकृतिरूपं कर्म च क्रियया वस्त्वन्तरनिष्पत्तये पूर्वभावविशिष्टस्य यस्य असत्त्वरूपो विकारो निर्वाह्यते तत्. यथा 'तण्डुलान् ओदनं पचति', 'कुसुमानि स्रजं करोति', 'काशान् कटं करोति' इत्यादौ तण्डुल–कुसुम–काशाः प्रकृतिकर्माण्येव।

अयमभिप्रायः। क्रियया पूर्वभावविशिष्टस्य यस्य द्रव्यस्य असत्त्वं निर्वाह्यते तत्प्रकृतिकर्म इत्युच्यते। 'पूर्वभावविशिष्टम्' इत्यत्र पूर्वभावः = कार्यावस्थाविरहरूपः। 'तण्डुलान् ओदनं पचति' इत्यत्र पाकक्रियया पूर्वभावविशिष्टस्य तण्डुलस्य असत्त्वं सम्पाद्यते। यतः तण्डुलरूपद्रव्यनाशादेव ओदनरूपकार्यं निर्वर्त्यते। तथा च पूर्वभावविशिष्टस्य तण्डुलस्य असत्त्वसम्पादिका पाकक्रिया। काशकुसुमविषये तु पूर्वभावस्यैव विशेषणस्य क्रियया असत्त्वं सम्पाद्यते. विशेष्यभूत–काशकुसुमादिः तिष्ठत्येव। अथापि विशेषणस्य असत्त्वात् विशेषणविशिष्टस्य काशकुसुमादेः असत्त्वम्। अर्थात् सन्दर्भविरहरूपपूर्वभावविशिष्टकुसुमादेः कटावस्थाविरहरूपपूर्वभावविशिष्टस्य काशादेश्च प्रकृति–कर्मत्वमेव।

गदाधरोक्तदिशा प्रकृतिविकृतिकर्मणोः स्वरूपं सङ्क्षेपेण इत्थं भवति। 'कुसुमानि स्रजं करोति' इत्यादौ 'कुसुमं' प्रकृतिकर्म, 'स्रक्' च विकृतिकर्म एव। अस्मिन् प्रसङ्गे अधिकं तु व्युत्पत्तिवादे[12] एव द्रष्टव्यम्।

अयमत्र सङ्क्षेपः। प्रायः गदाधरभट्टः भर्तृहरिमतमेव अनुसरति, परं कर्मभेदसंज्ञाः भेदेनाभिधत्ते। भर्तृहरिमतेन 'काष्ठं भस्म करोति' इत्यत्र काष्ठं विकार्यकर्म, गदाधरमतेन तु प्रकृतिकर्म। 'मृदं घटं करोति' इत्यत्र भर्तृहरिमतेन 'घटः' निर्वर्त्यकर्म, गदाधरमतेन तु विकृतिकर्म। विकार्यनिर्वर्त्यकर्मणोः गदाधरमतेन एकैव विकृतिकर्म इति संज्ञा। भर्तृहरिमतेन प्रकृतिकर्मणः न स्वातन्त्र्येण किंचित्संज्ञा वर्तते इत्यलं पल्लवितेन।

---

[1] वाक्यपदीयम् (III). 7. 45-51

[2] कारकचक्रम्, श्रीभवानन्दसिद्धान्तवागीश, वाराणसी, 1942, पृ 35

[3] तत्रैव पृ 36

[4] तत्रैव पृ 36

[5] cf. "कटार्थेषु वीरणेषु व्यूह्यमानेष्विति भाष्यम्। 'कटं करोति' इति निर्वर्त्यस्य कटस्य कर्मत्वम् अनुपपन्नम्। कारकाधिकारीयत्वात् कर्मसंज्ञायाः। क्रियानिमित्तस्य च कारकत्वात्। असिद्धस्य च क्रियायाः पूर्वं निमित्तभावायोगात् तस्मात्तादर्थ्यनिमित्तादेव कटशब्दः कटार्थेषु वीरणेषु व्यूह्यमानेषु वर्तते। गुणानां वा रच्यमानानाम् अस्ति कटक्रियापूर्वभावित्वेन निमित्तभाव इति" न्यायवार्तिकतात्पर्यटीका वाचस्पतिमिश्रविरचिता, Vol I&II CSSO. VARANSI, 1925. p. 476

[6] कारकचक्रम्। तत्रैव पृ. 36

8 निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्।
तत्रेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम्।।
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम्।
सञ्ज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्।।
सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते।।
प्रकृतेस्तु विवक्षायां विकार्यं केश्चिदन्यथा।
निर्वर्त्यं च विकार्यं च कर्मशास्त्रे प्रदर्शितम्।।
यदसज्जायते सद्वा जन्मना यत्प्रकाशते।
तन्निर्वर्त्यं विकार्यं च कर्म द्वेधा व्यवस्थितम्।
प्रकृत्युच्छेदसम्भूतं किञ्चिद् काष्ठादिभस्मवत्।
किंचिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवद्।।
क्रियागतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद् वा तत्प्राप्यम् इति कथ्यते।।
(वा.प. III. 7. 45– 51)

9 द्र. वैयाकरणभूषणसारः. p. 159-165.

10 व्युत्पत्तिवादः, वाराणसी, 1976. पृ. 141.

11 'घट पश्यति' इत्यत्र दृश्–धातोः केवलज्ञानार्थकत्वेऽपि तज्जन्यफलस्य विषयतायाः आश्रयः 'घट' इति 'क्रियाजन्यफलशालित्वरूपं प्राप्यकर्मत्व' घटस्य अक्षतमेव'। व्युत्पत्तिवादः।

12 व्युत्पत्तिवादः, वाराणसी, 1976. पृ. 141–144.

द्र. विभक्त्यर्थनिर्णयः.पृ. 126 – 130. 153.

# वाक्यार्थमीमांसा

दशरथचौधरी

ननु किमिदं वाक्यं यदर्थमीमांसा सम्प्रति विवेचनीया वरीवर्ति। प्रश्नेऽत्र सर्वेषां शास्त्राणामैकमत्यमिदं यद् 'पदसमूहो वाक्यम्' इति। किन्तु वाक्यस्यैव लक्षणे क्रियमाणे "गौरश्वः पुरुषो हस्ती शकुनिर्मृगः" इति पदकदम्बकस्यापि वाक्यत्वं स्यात्। न चेष्टमिदं वाक्यलक्षणमत्रेति विभाव्य व्याहृतं विचक्षणैर्यत् "वाक्यं स्याद् योग्यताकांक्षासत्तियुक्तः पदोच्चयः" इति। न केवलं पदोच्चय एव वाक्यमपितु यत्र परस्परमन्वयस्य योग्यतादयोऽपि यदि स्युस्तदेव तत्र वाक्यत्वं शक्यते वक्तुं नान्यथेति।

भट्टनारायणेनापि एतदेव तथ्यमेवं व्याहृतम्—

अत्राकांक्षा च योग्यत्वं सन्निधिश्चेतितत् त्रयम्।
वाक्यार्थावगमे सर्वैः कारणत्वेन कल्प्यते।।

मानमेयोदयः१००/९२

शब्दैः सन्निहितत्वेन बोधितत्वं हि पदार्थानां सन्निधिरुच्यते। अतः सन्निहित–त्वाभावात् शब्दबोधितत्वाभावाच्च द्वेधा सन्निध्यभावो भवति। तत्र भिन्नकालोच्चारितयोः "गामानय" इति पदयोः सन्निहितत्वाभावात् अनन्वयः। 'गां बधान" इत्यत्र बन्धनापेक्षस्य दृश्यमानस्यापि अश्वस्य शब्दबोधितत्वाभावादेवानन्वयः। अतः शब्दप्रतिपन्नानामेवान्वय इति नियमः सिद्ध्यति। आकाङ्क्षा प्रतिपत्तुर्जिज्ञासारूपा। यद्यपीयमिच्छारूपत्वेनात्मनिष्ठैवेति शक्यते वक्तुं तथापि अस्याः पदोच्चयधर्मत्वमिति बोध्यम्। स्वनिष्ठविषयितानि–रूपितविषयतावत्वसम्बन्धेन इच्छायाः पदोच्चये वर्तनात्। पदार्थानां परस्परसम्बन्धे बाधाभावो योग्यता। सा चेयं योग्यता यद्यप्यर्थवर्तिनी वर्तते तथापि स्वनिष्ठवाच्यता–निरूपित– वाचकतासम्बन्धेन पदोच्चये उपचर्यते। अतः सिद्धमिदं यत् आकांक्षा योग्यता सन्निधियुक्तः पदोच्चय एव वाक्यम्।

उपर्युक्त विवेचनेन सिद्धमिदं यत् वाक्यं पदसमूहात्मकं भवति। अस्यां स्थितौ आवश्यकमिदं यत् वाक्यघटकानां प्रत्येकं पदानामर्थाः स्युर्विदिताः पूर्वं, तत एव वाक्यर्थबोधो नान्यथेति। कस्माच्चिदपि शब्दात् कस्याप्यर्थस्य बोधस्तावन्न भवति यावत् तदर्थस्योपस्थितिः तस्मात् शब्दात् न जायते। एवं तस्मात् शब्दात् तदर्थस्योपस्थितिरपि तावन्न जायते यावत् तदर्थनिरूपिता शक्तिः तस्मिन् पदे गृहीता न भवेत्। एवञ्च पूर्वं शक्तिग्रहस्ततः पदार्थोपस्थितिः, ततः शाब्दबोध इत्यस्ति शक्तिग्रहपदार्थोपस्थितिशाब्द–बोधानां पौर्वापर्यक्रमः। तत्र यत्प्रकारकः यद् विशेष्यकः शक्तिग्रहस्तादृशी एवोपस्थितिस्तथा शाब्दबोधोऽपि जायते तादृश एव। अत एव घटत्वप्रकारकघटविशेष्यकार्थनिरूपित–शक्तिं गृहीतवतो जनस्य ''अयं घटः' इति वाक्यात् घटत्वप्रकारकघटविशेष्यक एव शाब्दबोधो भवति। न भवति तत्र मनागपिव्यतिक्रमः। उपस्थितेः शक्तिज्ञानप्रयोज्यत्वेन घटपदं श्रुतवतो जनस्य एक सम्बन्धिज्ञानमपरसम्बधिस्मारकं भवतीति नियमाद् आकाशोपस्थितौ जातायामपि न भवति तत्राकाशविषयकः शाब्दबोधः। आकाशस्य वृत्यजन्योपस्थितिसत्वात्।

पदेन पदार्थस्योपस्थितिर्भवति अतएव जायते शाब्दबोधोऽपि। तेन परिकल्प्यते पदपदार्थयोरस्ति कश्चन सम्बन्धो यद् वशात् उपस्थितो भवति पदार्थस्तत् पदनिष्ठशक्तिस्य। स च पदपदार्थयोः कीदृशः? तत् स्वरूपञ्च किमिति विषये वर्तते मतभेदो विवेचकानाम्। तत्र नैयायिकमतानुसारम् 'इदं पदमेतदर्थविषयकबोधजनकं भवतु'' इत्याकारिका अथवा 'अयमर्थः एतद् पदजन्यबोधविषयो भवतु' इत्याकारिका वा पदविशेषिका: अर्थविशेषिका वा इच्छा एव पदपदार्थयोः सम्बन्धः। किन्तु इच्छा तु आत्मनिष्ठो धर्मो न तु पदपदार्थयोः धर्म इति नायं धर्मः पदपदार्थयोः सम्बन्ध इति कृत्वा वैयाकरणाः तादात्म्यमेव पदपदार्थयोः सम्बन्ध इति प्रत्यपीपदन्। तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्। भेदसहिष्णुरभेद एव तादात्म्यम्। अत एव अग्निशब्दोच्चारणे न मुखदाहापत्तिः, न वा गुड उत्युक्ते मुखे माधुर्यापत्तिरपि। एतत् सम्बन्धानुसारमेव पदं श्रुतवतो भवति समुपस्थितिरर्थस्य।

यत्र शब्दार्थयोः सम्बन्धोऽयं कार्यकारी न भवति, तत्र शब्दार्थयोर्लक्षणा नामकं सम्बन्धान्तरं परिकल्प्यते। गंगायां घोषः इत्यादौ लक्षणाप्रभा वा विदितचर एव स्थित। लक्षणास्वरूपेऽपि विदुषां मतभेदः। नैयायिकास्तु शक्यसम्बन्धमेव लक्षणां प्राहुः। गंगायां घोषः इत्यत्र शक्यप्रवाहसमीपस्तीरो बुध्यते लक्षणयेति। तीरे घोष इत्यर्थः सम्पद्यते तत्र।

वैयाकरणाश्च तात्स्थ्यात् ताद्धर्म्यात्' तत् साहचर्यात्, तत् सामीप्याच्च अतस्मिन् तद्धर्मारोप एव लक्षणेति वदन्ति। अत एव गंगात्वाभाववति तीरे गंगात्वारोपं विधाय क्रियते तत्र शाब्दबोधः। मीमांसकाश्च–

मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे।
अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।।

इत्युक्त्यनुसारं प्रतीनिर्ज्ञानमेव लक्षणेति वदन्ति। अभिधालक्षणाभ्यामतिरिक्ता व्यङ्ग्यार्थबोधिका व्यञ्जनावृत्तिरपि स्वीकृतास्ति। अनया रीत्या शब्दशक्तिं स्वीकृत्य तत्तदर्थबोधः क्रियते शास्त्रलोकयोः। स च शब्दार्थः कः? इति प्रश्नेऽपि मतभेदो दृश्यते शास्त्रेषु वैयाकरणाश्च जातिव्यक्तिलिंगसंख्याकारकाणि पदार्था इति वदन्तः पञ्चकं प्रातिपदिकार्थं स्वीकुर्वन्ति। नैयायिकाश्च "व्यक्त्याकृतिजातयः पदार्थाः" इति सूत्रानुसारं व्यक्तिं जातिम् आकृतिञ्च पदार्थान् वदन्ति। मीमांसकाश्चजातिरेव पदार्थः इति स्वीकुर्वन्ति। आलंकारीकाश्च संकेतो गृह्यते जातौ गुणद्रव्यक्रियासु चेति वदन्तो जातिशब्दाः गुणशब्दाः क्रियाशब्दाः यदुच्छाशब्दाश्चेति चतुष्टयी शब्दानां प्रवृत्तिरिति वदन्ति।

महता वैयाकरणेन भर्तृहरिणा वाक्यपदीये कृतो गरीयान् विचारः शब्दार्थविषये। अस्मिन् लघुकलेवरके निबन्धे तत्सर्वस्योपरिविचारो नास्ति संभव इति भर्तृहरिकृतः शब्दार्थसम्बन्धविचारोऽत्र संक्षेपतः प्रस्तूयते। वाक्यपदीयस्य द्वितीयकाण्डे चतुर्विंशतिपञ्च–वंशतिषड्विंशतिश्लोकेषु पदार्थस्य द्वैविध्यम् अपोद्धारपदार्थः स्थितलक्षणपदार्थश्च, अन्वाख्येयशब्दः प्रतिपादकशब्दश्च, एषां कार्यकारणभावसम्बन्धः योग्यभावश्च सम्बन्धस्तत्र प्रतिपादितः। तत्र अपोद्धारपदार्थः शब्दस्य योगार्थः पाचकपाठकादयः। स्थितलक्षणपदार्थः रूढ्यर्थः मणिनुपूरादयः। तत्रापोद्धारपदार्थेन सह पदस्य कार्यकारणभाव–सम्बन्धः। स्थितलक्षणपदार्थेन प्रतिपादकशब्दस्य योग्यतालक्षणः सम्बन्धः। एषां सम्यग् ज्ञानेन धर्मपुरस्सरं बोधो भवतीति तत्र प्रतिपादितम्।

एतावता विवेचने पदपदार्थसम्बन्धांश्च संक्षेपतः प्रस्तुत्य सम्प्रति वाक्यार्थोपरि क्रियते विचारः। तत्र वाक्यमनेकपदघटितं भवतीति पूर्वमेवोक्तम्। यथा चैत्रो ग्रामं गच्छति इति एकं वाक्यम्। अपरमनेकपदघटितः समासोऽपि भवति। यथा राज्ञः पुरुष' इति विग्रहे निष्पन्नो 'राजपुरुषः' इत्येकं पदम्। इदमेकमपि पदं पदद्वयघटितमस्ति। तत्र भवतीयं जिज्ञासा यत् वाक्ये पदशक्त्यतिरिक्ता काचित् शक्तिस्तत्र वर्तते न वा? पदार्थातिरिक्तोऽन्योऽप्यर्थः

कश्चन तत्र भासते न वा? अस्यां स्थितौ तत्र तावन्नैयायिका वदन्ति यत् वाक्ये नास्ति पदशक्त्यतिरिक्ता काचिदपि शक्तिः। अर्थनिरूपिता शक्तिः पदे एव। पदमेव शक्तम्। वाक्यघटकानि निखिलपदानि सन्ति सार्थकानि। एवञ्च पदशक्त्यैव निर्वाहे वाक्ये समासे वा न स्वीकरणीया काचित् शक्तिः। तदुक्तं – वाक्ये शक्तेरभावात् शक्यसम्बन्धरूपा लक्षणापि नास्ति। न चैवं 'राजपुरुषः' इति समासे प्रतीतिपथमवतीर्णस्य सम्बन्धस्य बोधः कथं स्यात् विना समुदायशक्तिमिति चेत् – पदार्थद्वयसंसर्गस्य आकांक्षाभास्यत्वेन तत्राकांक्षाभास्य स्वत्वसम्बन्धेन राजवान् पुरुषः इत्येव तत्र बोधः। तथा च स्वत्व-सम्बन्धावच्छिन्न–राजत्वावच्छिन्न–प्रकारतानिरूपित–पुरुषत्वावच्छिन्न–विशेष्यताक एव शाब्दबोधः। न च येषां मते संसर्गस्य प्रकारत्वं तदनुसारं कथं निर्वाहः पदशक्तिं विनैति वाच्यम्? तत्र राजपदस्य राजसम्बन्धिनि लक्षणया तेन पुरुषस्याभेदान्वये राजसम्बन्ध्य-भिन्नः पुरुषः इत्येव तत्र बोधः।

न च समासघटकपदानां सार्थकत्वे 'राजपुरुषः' इत्यत्र राजपदार्थस्य बाही-केन गोसम्बद्धस्येति पदार्थेन सहान्वयो दुर्वार इति वाच्यम्। सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति सिद्धान्तस्य स्वीकारेणादोषात्। एतेन सिद्ध्यति यत् संसर्ग एव वाक्यार्थः। तस्य च भानमाकांक्षाभास्यम्।

वाक्यार्थविषये इयमेव प्रणाली स्वीकृता अभिहितान्वयवादिना कुमारील-भट्टेनापि। किन्तु एतन्नये पदार्थद्वयस्य संसर्गबोधनार्थ तात्पर्यानामिका वृत्तिः स्वीकृताऽस्ति। इयं वृत्तिः वाक्यनिष्ठा/ तदुक्तं विश्वनाथेन दर्पणे–

तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।
तात्पर्यार्थं तदर्थन्तु वाक्यं तद्बोधकं परे।।

एतन्नये च वाक्यार्थस्तात्पर्यार्थः। तदुपस्थापिका च तात्पर्या वृत्तिः। अयमेव वादः अभिहितान्वयवाद नाम्ना ख्यातः। अयमेवार्थो भट्टनारायणेन मानमेयोदये एवं व्यलेखि–

वाक्यार्थं हि गुरुः कार्यमखण्डं शङ्करोऽब्रवीत्।
संसर्गापरपर्यायं विशिष्टं ब्रूमहे वयम्।। मानमेयोदय १९२/२४

गुरुः प्रभाकरोऽन्विताभिधानं मन्यमानो वाक्यार्थं कार्यरूपं मन्यते। आचार्यः शङ्करः अखण्डार्थ एव वाक्यार्थ इति मनुते। वयं भाट्टास्तु संसर्ग एव वाक्यार्थ इति ब्रूमहे।

अयमत्राभिप्रायः प्रभाकरः प्रत्येकं पदस्य शक्तिं कार्यान्विते पदार्थे एव स्वीकरोति। कार्यताबोधस्तु लिङ्गादिसमभिव्यवहार एव। 'गामानय' इत्युक्ते सति इदमेव प्रतीयते यत् अत्रत्यं गोपदं तस्यैव गोः वाचकं यत् आनयनान्वितमानीयमानं वा वर्तते। एवमानयपदमपि तस्या एव आनयनक्रियाया वाचकं या सम्पाद्यते।। "अश्वमानय" इत्यादावावापोद्वापाभ्यां यः खलु प्रत्येकं पदार्थबोधः सम्पद्यते सोऽपि अन्वयं परित्यज्य नैव भवति। अतोऽन्वयांशं परित्यक्तुं नैव शक्यते। न चैवं पदेभ्यः शुद्धपदार्थबोधो नैव स्यात् इति वाच्यम्? पदेन पूर्वं शुद्धार्थस्य स्मरणं भवति। ततः स्मारितोऽर्थः इतरान्वितो भूत्वा पदैरभिधीयते। अतः पदाभिधेय एव अन्वितरूपो वाक्यार्थो न तु पदगम्यः। वाक्यार्थो लक्षणवेद्यो न भवतीति भावः। यदि वक्यार्थो लक्ष्यो भवेत् तदा प्रमाणान्तरोपस्थापितार्थस्यापि वाक्यार्थेऽन्वयः स्यात्। किन्तु न भवति एवं कदाचित्।

किन्तु गुरुमतानुसारं कार्यान्विते शक्तिस्वीकारे कार्यताबोधकलिङ्गादावभावस्थले 'नीलो घटः' सदृशे वाक्ये बोधो नैव स्यात्। तस्मान्नेदं मतं समीचीनम्।

आचार्यशङ्करः अखण्डार्थ एव वाक्यार्थः इति स्वीकुरुते। "विज्ञानमानन्दं ब्रह्म" इत्यत्र त्रयाणमपि पदानामेकस्मिन् अखण्डब्रह्मणि एव तात्पर्यमिति तदभिमतम्। किन्तु एतदपि न युक्तं, यतो हि "आनन्दं ब्रह्मणो विद्वान्" "स एको ब्रह्मण आनन्द" इत्यादि श्रुतिभिः भिन्नविभक्तिघटिताभिर्भेदस्यैव प्रतिपादनं क्रियते न तु एकस्याखण्डार्थस्य। सुषुप्तौ विज्ञानाभावो विज्ञानस्य नित्यतां निराकुरुते। अत्र च श्रुतिः प्रमाणम् 'अवेदयन्नेवाहमियन्तं कालमस्वापरम्' एवञ्चाखण्डवाक्यार्थोऽपि नोपपादयितुं शक्यते।



# महीयते व्याकरणदर्शनप्रभा

श्रीकरुणासिन्धुदास:

विगते अब्दशतके संस्कृतव्याकरणदर्शनं भूरिश: समृद्धिमगादित्यत्र नास्ति संशयलेश:। इयं सा शताब्दी यत्र पाश्चात्त्यदर्शनसंसर्गात् संस्कृतवाङ्गमयनिहिता तत्त्वमुक्तावली विभातितरां लोकेषु। स्पर्धमाने पाश्चात्त्यवाग्दर्शने भातरवाग्दर्शनं स्वे महिम्नि राजते वर्धते च विजयेन। आङ्ग्ल–शर्मण्यादिभाषानिबद्धानि निबन्धानां शतानि ग्रन्थाश्च प्रमाणयन्ति तद्वैभवम्, स्थापयन्ति च भर्तृहरिवचनम् –

प्रज्ञा विवेकं लभते भिन्नैरागमदर्शनै:।
कियद्वा शक्यमुन्नेतुं स्वतर्कमनुधावता ।। इति।।

Encyclopaedia of Indian Philosophies इति महाग्रन्थस्य Harold G. Coward तथा K.Kunjunni Raja इति आचार्यवर्यसम्पादिते पञ्चमे खण्डे (खी.१९९१) तत्रभवतां George Cardona महोदयानां कृतौ Recent Researches in Pāṇinian Studies इति ग्रन्थे (खी. १९९९) Saroja Bhate तथा Johannes Bronkhorst इति सम्पादकद्वयेन उपस्थापितस्य Bhartṛhari Philosopher and Grammarian इति ग्रन्थस्य (खी. १९९४) अन्ते Yves Ramseier कृत– Bibliography of Bhartṛhari इति पञ्जीसंकलने च सर्वेषामेषामभिसन्दर्भाणां समुल्लेख उपलभ्यते। विशिष्यन्ते चात्र निबन्धकारा गौरीनाथशास्त्री, विष्णुपदभट्टाचार्य:, Harold G. Coward, शिवरामदत्तात्रेय जोशी, विमलकृष्णमतिलाल:, वशिष्ठनारायणझा, माधव– देशपाण्डे:, रामाज्ञा पाण्डेय:, Jan E. M. Houben, अशोक आक्लुजकर: तन्द्रा पट्टनायक इत्यादय:। ग्रन्थपाठपर्यायलोचने च यत् नितरां सौष्ठवमासादितम् तत्र रघुनाथशर्मकृतो वाक्यपदीयपाठभेदनिर्णय इति भागद्वयात्मको ग्रन्थो (खी. १९८०, खी. १९९१) मानम्। अपि च सन्ति मूलग्रन्थानां नूतनानि संस्करणानि।

यथाहि वाक्यपदीय–द्वितीयकाण्डम् आङ्गलानुवादेन (खी.१९७७) टिप्पण्या च सह के.ए. सुब्रह्मण्य आयारमहोदयेन सम्पादितमुपलभ्यते। समग्रं वाक्यपदीयं च जयदेवभाईशुक्लमहाभागेन गुर्जरभाषानुवादटिप्पणसहितम् (खी.१९८४) प्रकाशमयात्। वैयाकरणभूषणस्य समासशक्तिनिर्णयं सम्प्रति (खी.१९९५) वनमाली विश्वालमहाभागो विस्तरशः पर्यालोच्य अनूदितवान्। भूषणसारस्य स्फोटनिर्णयः जोशीमहोदयेन, नामार्थनिर्णयो माधवदेशपाण्डेमहोदयेन लकारार्थनिर्णयश्च जयश्रीगुणेमहोयया आङ्गलभाषयानूद्य सविमर्शमालोचिताः। प्राचीनाश्च टीकादयः प्रकाशं लभन्ते स्म।

तथाहि भूषणसारस्य ब्रह्मदत्तद्विवेदिकृते संस्करणे (खी. १९८५) दर्पणटीका स्थापिता। वाक्यपदीयद्वितीयकाण्डस्य सुब्रह्मण्यआयारकृते संस्करणे (खी. १९८३) पुण्यराजकृता टीका अपरा च वृत्तिः सन्निवेशमलभताम्।

तदिदं सर्वं वैयाकरणसिद्धान्तमूलस्य दाढ़र्याय प्रकल्पते। अल्पेष्वपि मूलग्रन्थेषु सारतस्तत्त्वभूयस्त्वं विलसति। लभते च प्रतिष्ठां व्याकरणदर्शनम्।

इह खलु भारते यथा व्याकरणं तथा न्यायमीमांसादिशास्त्राण्यपि शब्दप्रमाण–पदवी–समालम्बनमुखेन स्व–स्वं–वाग्दर्शनं प्रस्तुवन्ति। वरीवर्ति च सर्वत्र खण्डनमण्डन–शैलीति किमप्येकमाश्रित्य सर्वेषां सिद्धान्ताः सविमर्शम् अवबोद्धुं शक्यन्ते। तदेवं संस्कृतव्याकरणदर्शनं प्राचीनकालादारभ्य भारतीयवाग्दर्शनप्रतिमास्वरूपं बिभर्ति। महाभाष्ये खलु तत्कालीनवाक्तत्त्वम् निःशेषम् पदमलभत। वाक्यपदीयं च वागर्थतत्त्वरत्नाकर इत्यलं विस्तरेण। कथमन्यथा द्वितीयकाण्डस्यादौ वाक्यस्य कृते अष्टौ लक्षणानि तत्र प्रसरेयुः। "वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायदर्शिनामि"ति साधूक्तं नाम। ततः फणिभाषितभाष्याब्धेर्यः शब्दकौस्तुभ उद्धृतस्तदनुयायिनी वैयाकरणमतोन्मज्जनीति कारिकावलीं व्याख्याया कौण्डभट्टेन वैयाकरणभूषणं सारश्चेति द्वयम् उपनिबद्धम्। न्यायवेदान्त मीमांसामतोद्धारमार्गेण। नागेशकृतिषु वैयाकरणसिद्धान्तमञ्जूषा–लघुमञ्जूषा–परमलघुमञ्जूषा–ग्रन्थेषु मतान्तरनिरासेन व्याकरणपक्षस्थापनायां नव्यन्यायपरिगृहीता वाक्परिभाषाशैली चकास्ति इति तु अन्यदेतत्। जगदीशभट्टाचार्यकृता शब्दशक्तिप्रकाशिका, गदाधरकृतौ शक्तिवाद–व्युत्पत्तिवादौ यदा न्यायपक्षं बिभ्रति, भवानन्दकृतं कारकचक्रं जयकृष्णकृता शब्दार्थसारमञ्जरी चेति द्वयं तु खण्डशो न्यायालम्बि सदपि अन्ततो व्याकरणपक्षमध्यास्ते।

परं तारानाथतर्कवाचस्पतिकृता शब्दार्थरत्नावली तावत् पाणिनीयदर्शनमेवा–धिकरोति स्म।

सत्सु एतादृशेषु आकरसदृशवागदर्शनग्रन्थेषु टीकाटिप्पणीव्याख्यानसमारोहो न कथं पदं कुर्वीत? तथाहि ख्रष्ठीयविंशशताब्द्यां नोपलभ्यते यद्यपि भूरिशः मूलरचना, टीकादिकं तु अविरलमस्ति। तत्र पूर्ववत् संस्कृतमयी टीका यथा रचितास्ति, हिन्दीवांला-प्रभृतिभाषानिबद्धं विवरणम् अपि वर्तते। तथाहि—

क. महाभाष्यपस्पशाव्याख्यानाय समजनि

१. सुरेन्द्रनाथदाशगुप्तकृता आङ्गलानुवादसहिता विवृतिः,

२. दण्डिस्वामिदामोदराश्रमरचितं वङ्गभाषामयं व्याख्यानम्,

३. दाशगुप्तोनामकसंघमित्रया कृतं वङ्गभाषया विवरणमेकम् इत्यादि।

ख. वाक्यपदीयमधिकृत्य कृता व्याख्याग्रन्थास्त्वेवम् —

१. समग्रं वाक्यपदीयं व्याख्यातुं रघुनाथशर्मणा रचिता अम्बाकर्त्री व्याख्या (प्रथमकाण्डे ख्री. १९७६, द्वितीय ख्री. १९८०, तृतीये वृत्तिसमुद्देशभागे ख्री. १९७७, भागान्तरे च ख्री. १९९७), प्रथम काण्डे

२. सूर्यनारायणशुक्लकृते भावप्रदीपः संस्कृतमयः रामगोविन्दशुक्लकृता हिन्दीव्याख्या च (ख्री. १९८४)

३. शिवशङ्करेण अवस्थीत्युपनामकेन कृतं हिन्दीविवरणम्,

४. विष्णुपदभट्टाचार्यविरचिता वङ्गभाषामयी विवृतिरनुवादश्च।

ग. वैयाकरणभूषणस्य कृते मनुदेवभट्टाचार्यकृता रूपालीति टिप्पणी। भूषणसारे —

१. दर्पणटीकामतिरिच्य ब्रह्मदत्तद्विवेदिकृता हिन्दीभाषमयी व्याख्या (ख्री. १९९५),

२. प्रभाकरमिश्रकृता संस्कृतेन प्रभाकरी टीका, हिन्दीव्याख्या च प्राभाकरी (ख्री. १९८२)

३. आद्याप्रसादमिश्रकृता हिन्दीव्याख्या सावित्री च (ख्री. १९८८)।

घ. लघुमञ्जूषाग्रन्थस्य कृते संस्कृतमय्या दुर्बलाचार्यकृत-कुञ्जिकया सह रामप्रसादत्रिपाठिकृता हिन्दीव्याख्या सरला इति (ख्री.१९९०)।

परमलघुमञ्जूषार्थं तु

१. जयशंकरलालत्रिपाठिकृता भावप्रकाशिकेति संस्कृतटीका, बाल–बोधिनीति हिन्दीव्याख्या च

२. वंशीधरमिश्रकृता संस्कृतमयी वंशीव्याख्या, हिन्दीभाषामयं विवरणश्च (खी. १९५७)

३. जयकृष्णरचितसारमञ्जरीप्रकटनाय कालीपदतर्काचार्यप्रणीता संस्कृत–मयी सारदीपिका व्याख्या (खी. १९२१)

न केवलमिदं व्याख्यावाङ्मयं मूलभावप्रकाशनम् अपि तु आगन्तुकभावानां संगत्या पक्षान्तरनिरासेन च सुतरां तत्पोषकम्। तत्र अम्बाकर्त्री खलु प्रकाशमात्रमेव कृतयं कृतिरुत्तमा.. स्थेयादाचन्द्रतारकम् इति यशोऽलभत। भर्तृहरिहेलाराजपुण्यराजवचांसि अनया सविमर्शम् विशदीकृतानि। तद् यथा, आख्यातशब्दः, वाक्यमिति प्रसङ्गे एवमत्र निर्णीतम्।

'आख्यातशब्दो वाक्यमिति वादिनाम् आख्यातशब्द एव वाक्यमिति नाभिप्रायः.. सुप्तिङन्तचये वाक्यत्वव्यवहारस्य सर्वजनीनस्यापलापप्रसङ्गात्। किन्तु क्वचित् आख्यातशब्दोऽपि वाक्यम्, यत्र कारकशब्दप्रयोगं विना केवलाख्यातशब्दप्रयोगेऽपि वाक्यार्थवगतिः। यथा पिधेहीति। (पृ.२) इति।

अभिहितान्वयवादमधिकृत्य अत्रैवमुक्तम्–

'पदमेव शक्तं, न तु वाक्यम्। वाक्यार्थभूतः पदार्थानां संसर्गस्तु आकाङ्क्षाभास्यः। आकाङ्क्षा च तत्तच्छाब्दबोधं प्रति नियतः, पदानां समभिव्याहारविशेषः। अभिहितयोः शक्त्योपस्थापितयोः पदार्थयोरन्वय आकाङ्क्षाभास्य इति ये वदन्ति तेऽभिहितान्वयवादिनः। .... एवं चाभिहितान्वयवादो नैयायिकानाम्। तत्र च संसर्गस्याकाङ्क्षाभास्यत्वं व्युत्पत्तिवादादौ, प्रपञ्चितम्।' इति (पृ.३)

अन्विताभिधाने पुनः कार्यान्विते इतरपदार्थान्विते वा स्वार्थे पदानां शक्तिरित्य–न्वयरूपः संसर्गोऽपि शक्तिभास्य एव। तत्र अन्वयत्वेनान्वयसामान्यं शक्तिभास्यम्, तादात्म्या–दिरूपः सम्बन्धविशेषस्तु वाक्यलक्षणया। विशेषेण चावधेयमिह अम्बाकर्त्रीवचनम्–

'ये तु वदन्ति न भाट्टा अन्विताभिधानवादिन इति तेषां मते 'संसृष्टे क्रियायां चान्विताभिधानम्', 'यस्माद् भावनाक्रिययोः पर्यायता प्रायशो लभ्यते' इति हरिवाक्ययोः का गतिः, भावना लिङर्थत्वेन वाक्यार्थ इति भट्टाभिप्रायात्। इत्यादि।

वाक्यप्रसंगे 'आख्यातं साव्ययकारकविशेषणं वाक्यम्' (महाभाष्ये २/२/१ सूत्रीय वार्तिकम् ९) इति 'एकतिङ् वाक्यम्' (तत्रैव वार्तिकम् १०) इति च वार्तिककारीयं

शास्त्रमात्रोपयोगि पारिभाषिकं लक्षणद्वयं, तथा 'अर्थैकत्वादेकं वाक्यम्–(जै. २/१/४६) इत्यादि लौकिकलक्षणमुल्लिख्य सर्वमेतत् पदसङ्घातपक्षे अन्तर्भवतीति दर्शितम्। अपि चोक्तम्– 'यत् पुनर्भवता भर्तृहरिणा स्वोपज्ञवृत्तावुक्तम्– 'उदाहरणमात्रमेतत्, अन्यान्यपि वाक्यलक्षणानि दर्शयिष्यति इति, तद् वार्तिककारीयवाक्यलक्षणादेरष्वष्टसु सम्भवन्नम-प्यन्तर्भावं स्फुटतयाऽनपेक्ष्येति मन्तव्यम्' इति। अम्बाकर्त्रीमते वाक्यपदीये 'अत्रादिष्टा वाक्यविकल्पा अव्याकृतस्वरूपा न सुबोधाः। अत्र च ग्रन्थेऽग्रे तेषां व्याकृतिर्व्यवहिता विप्रकृष्टा नैकत्र सुलभा च।' (पृ.६) अतएव 'वाक्यविकल्पानां स्वरूपमात्रप्रतिपादनपरः संक्षिप्तः स्याद्वादरत्नाकरग्रन्थः संगृह्यते' रघुनाथशर्मणा।

वाक्यार्थमाश्रित्य यत् पक्षषट्कं प्रदर्शितं वाक्यपदीये प्रतिभा, संसर्गः, संसर्ग-वशान्निराकाङ्क्षो विशेषावस्थितः पदार्थः, संसृष्ट एवार्थः, क्रिया, प्रयोजनं चेति, तत्र विधिनियोगभावनास्तु न गृहीताः। भट्टमते तु वाक्यार्थः भावना। सा च क्रिया इति तत्रैवान्तर्भावसम्भवः। 'विधिनियोगौ तु लिङ्लोट्कृत्यान्तेषु एव वाक्येषु अर्थौ इति सर्ववाक्यविषयत्वादिह... अनादृतौ।' एवं समाधाय अम्बाकर्त्रीकारेण ततः विज्ञानवादिबौद्ध-मतेन व्याकरणमतस्य तुलनं कृतम्। तथाहि 'शाक्याभिमतस्य वाक्यार्थस्य प्रतिभायां तदभिमतस्य वाक्यस्य च बुद्ध्यनुसंहृतावन्तर्भावेण न तदभिमतयोस्तयोरसंग्रहोऽत्र वेदितव्यः।' (पृ.१५) इति। 'अयन्तु विशेषः – प्रतिभाया गोचरो वाक्यार्थो बहिरस्ति वस्तुभूतः, विज्ञानाकारविशेषस्तु वाक्यार्थो नास्ति बहिर्वस्तुभूत इति। अतएव प्रतिभासंदरत्व-मुक्तम्' (पृत्र.१५)। वाक्यवाक्यार्थयोरध्यास–वाच्यवाचकभाव–कार्यकारणभाव-संकेतलक्षणाः सम्बन्धाः सम्प्रदायेषु सिद्धा इति उल्लिख्य तावद् अभिहितम्– 'वाक्यकाण्डे अध्यास– मेव वाक्यवाक्यार्थयोः सम्बन्धं दर्शयिष्यति। पदकाण्डे तु तृतीयं सर्वनिवा-भिधास्यति' (पृ. १७) इति।

तदेवं प्रतिविषयम् आभाति यद् अम्बाकर्त्रीसौष्ठवम् स्थालीपुलाकन्यायेन तत् परीक्ष्य निरूपितम् विष्णुपदभट्टाचार्येण। अतएव तदीयवाक्यपदीयब्रह्मकाण्डविवरणे बहुत्र सा सबहुमानमुद्धृता राजते।

भूषणमधिकृत्य मनुदेवभट्टाचार्यकृता रूपालीति टिप्पणी विशेषवैशिष्ट्यभाक् प्रतीयते। तथाहि भूषणे व्याख्यातानां कारिकाणां किं नामधेयं कश्च कर्तेति प्रश्ने एषा टिप्पणी सयुक्तिन्यासं सिद्धान्तमुपस्थापयति वैयाकरणमतोन्मज्जनम् इति कारिकात्मकग्रन्थस्य नाम, तत्कर्ता च श्रीभट्टोजिदीक्षितः इति। श्रीवनमालिमिश्रकृतो यो ग्रन्थः समाननामा क्वचिदुल्लिख्यते, स तु 'बृहद्वैयाकरणभूषणसारस्य भूषणस्य वा व्याख्यानं मात्रमेव।

तेनेह 'मूलस्य कारिकामयग्रन्थस्य तट्टीकाटीकायाश्च भिन्नकर्तृत्वेऽपि समानं नाम इति।' (पृ.३३१) समञ्जसं पश्यति रूपालीकृत्। तृतीया कर्मणि (पा.६/२/४८) इति सूत्रार्थनिर्णयावसरे अवधातोरर्थानुल्लिख्य तत्रभवतो वोपदेवस्य मतं तेनाङ्गीकृतम् व्याजहार खलु तत्रभवान् वोपदेव इति। अप्रथमाविभक्त्यर्थे बहुव्रीहेर्व्याख्यायां जगदीशभट्टाचार्यस्य मतमेवमुद्धृतम्—

'बहुव्रीहिः स्वगर्भार्थसम्बन्धित्वेन द्योतकः।
निरूढया लक्षणया स्वांशज्ञापकशब्दवान्।।
अस्यैकं प्रथमान्तं सत् सुबन्तैरितरैः सह।
यदाभेदसुबन्तेन साकाङ्क्षं नाम विग्रहः।। (पृ. २०३)

इति। नञर्थनिर्णयावसरे 'नोपेयात्' इत्यादिषु 'नञ्सहितेषु... निवर्तना—निवारणा—निषेधप्रतिषेधाः लिङ्र्थः' इति सुष्ठु निर्णीतम्। अनेकशब्दे न नञर्थो बहुत्र विचार्य मल्लिनाथदिशा (पृ.२२७—२३१) सिद्धान्तितः। सिद्धान्तस्त्वेवम्— 'अनेके इति बहुवचनम् असाध्वेवेति तत्रत्यप्रदीपोद्द्योतसारः' इति। उपपदविभक्तेः कारकविभक्तिर्बलीयसीति परिभाषार्थं निर्णीय अत्र उक्तम् परिभाषा एषा अन्तरङ्गन्यायमूला स्वतन्त्रा वेत्यन्यत् इति। तत्र 'द्वितीयादयः सर्वा अपि विभक्तयः कारकोपपदभेदेन द्विविधा। प्रथमा तु कारकविभक्तिरेव' इति। (पृ. १९८)। कारकविभक्तित्वं चेह क्रियाजनकार्थकविभक्तित्वमेवाङ्गीकृतम्।

को नाम भाव इति प्रश्ने बहवः पक्षाः सम्भवन्ति। भावः अभिप्रायः, पदार्थः, धात्वर्थः। भवः = विद्यमानः। भवने = उत्पत्तौ। इत्थम्भूतः = कञ्चित् प्रकारं प्राप्तः। भूष्णुः = एधमानः। भूतिः = समृद्धिः इति। नामालिङ्गानुशासने 'भावः सत्तास्वभावभिप्राय—चेष्टात्मजन्तुषु' इति, नानार्थरत्नमालायां च —

'भावः पदार्थसत्तायां क्रियाचेष्टात्मयोनिषु।
विद्वल्लीलास्वभावेषु भूत्यभिप्रायजन्तुषु।।'

इति। चात्र मानम् आकलितम्। (पृ. २५५—७) स्फोटविषये चैवमाह रूपालीकृत्—वाक्यश्चासौ स्फोटश्चेति वाक्यस्फोटः। स्फोटः वाचकः। वाक्यस्फोटः = वाक्यं वाचकम् इत्यर्थः।... स्फुटत्यर्थोऽस्माद् अनेन वेति स्फोटः वाचकः।.. ते चाष्टौ।' इति।

निपातानां द्योतकत्वविचारे श्रीविश्वेश्वरसूरीकृतेर्व्याकरणसिद्धान्तसुधानिधेर्मतं सबहुमानमत्र उद्धृतमस्ति। शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव इत्यादौ ऊस्रसदृशैः शरैरिति बोधो द्योतकत्वपक्षे एव सम्भवतीति असत् मन्यते तत्र। 'सादृश्यस्य एव आश्रयत्व—

सम्बन्धेन शरेषु प्रकारत्वात्। अन्यथा इवादिपदोपादाने श्रौती उपमा, सदृशादिपदप्रयोगे तु आर्थी इति काव्यमीमांसकसिद्धान्तविरोधात्। तत्र 'चादयो वाचका:, प्रादयस्तु द्योतक इति मिश्रमतम् इतरेषाञ्च मतमुल्लिख्य शाकटायन–गार्ग्य–यास्कादिवचनं पर्यालोच्य उपसर्गाणां स्वसम्बन्धेनार्थबोधकत्वम् निपातानां तद्वैपरीत्यम् उदाहृतम् (पृ. २५१–२५३)। निपातार्थनिर्णये रूपालीकृतां प्रयासोऽयम् सश्रद्धमुल्लेखमर्हति।

वंशीधरमिश्रकृता वंशीव्याख्या न केवलं परमलघुमञ्जूषाबोधे नितरां सहायकं सम्पादयति, लघुमञ्जूषापरमलघुमञ्जूषयोर्मते पार्थक्यञ्च दर्शयति। तथाहि वृत्तिनिरूपणे 'पदपदार्थयो: सम्बन्धान्तरमेव शक्ति: वाच्यवाचकभावापरर्याया। तद्ग्राहकञ्च इतरेत-राध्यासमूलकं तादात्म्यं, तदेव सम्बन्ध:' इति परमलघुमञ्जूषा। लघुमञ्जूषायान्तु तदेव सम्बन्ध: इति नास्ति, परन्तु 'तच्च सङ्केत इत्युक्तम्। इह वंशीवचनं प्रतीयते– 'अत्रापि सम्बन्ध इत्यस्य स्थाने सङ्केत इत्येव पाठ्यम्।... अथवा मदुक्तार्थ एव कार्य:। मञ्जूषायां सुबर्थवादे क्वचित्तादात्म्यस्य सम्बन्धत्वं परमतवासनयोक्तम्। सम्बन्धत्वाभावेऽपि तादात्म्यस्य सम्बन्धग्राहकत्वं नानुपपन्नं वृद्धव्यवहारादिवद् इति दिक्।' इति

अपाणिनीयव्याकरणसम्प्रदायेषु वाग्दर्शनमधिकृत्य जयकृष्णविरचिता शब्दार्थसार-मञ्जरी परां ख्यातिमगात्। खृष्टीय १९२१ तमे अब्दे।

'श्रीकालीपदशर्मायं तर्काचार्योपनामक:।
व्याख्यां प्रतनुते सारमञ्जर्या: सारदीपिकाम्।।'

वाक्यार्थबोधपर्यालोचने एषा व्याख्या विशिष्यते नाम। तन्मते 'तात्पर्यन्तु वक्तुरिच्छा एव। तज्ज्ञानस्य कारणत्वे वक्ता यमर्थम् उद्दिश्य शब्दं प्रयुक्तवान् तदर्थस्यैव बोध इति नानियम:। तात्पर्यग्राहकप्रकरणादीनां तत्तदर्थप्रतिपत्तिहेतुत्वकल्पनन्तु अननुगमदोषमेव निरस्तम् इति। नैयायिकास्तु तात्पर्यज्ञानार्थम् अवश्यं प्रकरणादिज्ञानस्यापेक्षणेन प्रकरणादिज्ञानमेव प्रयोजकमाहुरिति संक्षेप:।' (पृ.२३–२४)।

कारकविचारे क्वचित् न्यायमतं क्वचिच्च व्याकरणमतं सारमञ्जर्यामालम्बित-मस्ति। तथाहि कर्मत्वं नाम परसमवेतक्रियाजन्यफलशालित्वमङ्गीकृतम्, करणत्वं तु साधकतमत्वमेव। कारकत्वं च क्रियानिमित्तत्वम्। तर्काचार्यस्त्वेवं व्याख्याति– 'करोति साक्षात् परम्पराया वा क्रियामनुकूलयति इति कारकम्। .... कारकपदमत्र न क्रियानिमित्तमात्रपरं किन्तु कारकपदप्रतिपाद्यपरम्।... तदुक्तं कौमारे क्रियानिमित्तं कारकं लोकत: सिद्धम् इति'। निमित्तमिह प्रयोजकं जनकं वा भवितुमर्हति। तद् यथा कार्याव्यवहितप्राक्क्षणे सत्त्वाभावात् कर्मण: क्रियाकारणत्वनिर्वाहो यद्यपि न स्यात् तथापि 'उद्देश्यत्वमात्रेण

प्रयोजकत्वरूपमिति निमित्तपदस्य प्रयोजकमात्रपरता'। 'करणस्य तु संयोगादिव्यापारं द्वारीकृत्य कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तित्वात् मुख्यमेव जनकत्वलक्षणं निमित्तत्वम्। सम्प्रदानस्य अनुमत्यादिप्रकाशनद्वारा क्रियां प्रति निमित्तत्वं, तदपि जनकत्व–लक्षणमेव। ..... अपादानस्यापि तथात्वं, वृक्षादेः स्वसत्त्वेनैव क्रियां प्रत्यनुकूलत्वात्, यदि वृक्षादयो न स्युस्तदा कुतो वा पर्णादिकं विभज्येत। एवमधिकरणमपि। देवदत्तः कटे आस्ते इत्यादौ देवदत्तादेः स्थितिं प्रति कारणीभवत् कारकसंज्ञां भजते।' इति।

तदेवं तर्काचार्यदृष्ट्या 'वैयाकरणोक्तं कारकलक्षणं सर्वत्र सोपपत्तिकम्' स्थितम्। क्रियानिमित्तस्य कारकत्वे अङ्गीकृते फलात्मकक्रियायां मुख्यतयां निमित्तभूता व्यापाररूप–क्रियापि कारकेषु गण्येत इत्याशङ्क्य तत्रभवता सारदीपिकाकृता एवं समाहितम्– 'तत्तत्क्रियाभिन्नत्वे सति क्रियानिमित्तत्वं कारकत्वमिति वाच्यम्' इति। कारकेषु सर्वत्र प्रयोजकश्च अवान्तरव्यापार अतएव तत्र निर्णीतः। तथाहि–

'कारकान्तरप्रवर्तनव्यापारः कर्तृतायां प्रयोजकः, क्रियाजनकाव्यवहित–व्यापारः करणत्वप्रयोजकः क्रियाफलेनोद्देश्यत्वव्यापारः कर्मत्वे, कर्तृकर्मव्यवहितक्रिया–धारणव्यापारश्च अधिकरणत्वे, प्रेरणानुमत्यादिव्यापारः सम्प्रदानत्वे, अवधिभावोऽपगमव्यापारः अपादानत्वे प्रयोजक इति। (पृ.४०)।

पीठे स्थित्वा गृहे स्थाल्यामोदनं पचति इति स्थले अधिकरणानां तु एवं सङ्गतिः–

स्थितिक्रियायाः परम्परया कर्तृद्वारा आश्रयत्वेन पीठस्य, गेहस्य तु विक्लित्त्य–नुकूलव्यापाररूपक्रियायाः कर्तृद्वारा आश्रयत्वेन, स्थाल्यास्तु फलीभूतविक्लित्तिरूपक्रियायाः कर्मद्वारा आश्रयत्वेन अधिकरणत्वम् अनुसन्धेयम्' इति (पृ.५४)। 'औपचारिकस्थलेऽपि औपश्लेषिकेणैव अर्थसिद्धिस्तर्काचार्याणां सम्मता।

एवं विन्दुषु सिन्धुदर्शनन्यायेन विगतशताब्द्यां व्याकरणदिशा वागदर्शनचर्चायाः समुन्नतिः परीक्षितुम् शक्यते। हिन्दीवांलादिभाषाबद्धेषु व्याख्याग्रन्थेषु च तदभ्युपगमः सुगमः। किमिह वैशिष्ट्यमभिनवं किमपि उपलब्धमिति पृच्छा चेत् ब्रूमः– उक्तानुक्त–दुरुक्तार्थव्यक्तकारि यथेदं व्याख्यानवाङ्मयं, तथा संसर्गाद् भिन्नैर्देशीयैर्देशान्तरीयैश्चा–गमदर्शनैर्विभामयञ्च। केवलम् अबुधानां प्रबोधाय नायमुद्यमः प्रकल्पते, परन्तु शास्त्रतात्पर्य–निरूपणद्वारा शिवेतरक्षतये शास्त्रार्थप्रवृद्धये च। ध्रुव एवैष मार्गो येन महीयते व्याकरणदर्शनप्रभा।

सन्दर्भा:

१ Coward, Harold G. and K. Kunjunni Raja, Encyclopaedia of Indian Philosophies, Vol. V, First Edition, Delhi, 1990.

२. Bhate, Saroja and Johannes Bronkhorst (ed.)- Bhartṛhari Philosopher and Grammarian, First Indian Edition, Reprint, Delhi, 1997.

३. शुक्ल, सूर्यनारायण एवं रामगोविन्द शुक्ल (ed.) – महावैयाकरण-श्रीभर्तृहरिविरचितं वाक्यपदीयम् (ब्रह्मकाण्डम्), १९८४

४. अवस्थी, शिवशङ्कर – भगवद्भर्तृहरिविरचितं वाक्यपदीयम्.. (ब्रह्मकाण्डम्) वाराणसी, १९९०

५. खान्दुरी, सत्यनारयणशास्त्री (ed.) वाक्यपदीयम् (ब्रह्मकाण्डम्), १९८३

६. शर्मा, रघुनाथ – वाक्यपदीयम् (प्रथमकाण्डम्), १९७६

७. शर्मा, रघुनाथ – वाक्यपदीयम् (द्वितीयकाण्डम्), १९८०

८. शर्मा, रघुनाथ – वाक्यपदीयम् (वृत्तिसमुद्देशः), १९७७

९. शर्मा, रघुनाथ – वाक्यपदीयम् – १९६७

१०. भट्टाचार्य, मनुदेव (ed.) श्रीमत्कौण्डभट्टविरचितं बृहद्वैयाकरणभूषणम् वाराणसी, १९८५

११. द्विवेदी, ब्रह्मदत्त, (ed.) वैयाकरणभूषणसारः वाराणसी, १९८५

१२. मिश्रा, प्रभाकर (ed.) वैयाकरणभूषणसारः, वाराणसी, १९८२

१३. मिश्र, आद्याप्रसाद, वैयाकरणभूषणसारः, वाराणसी, १९८८.

१४. त्रिपाठी, रामप्रसाद, वैयाकरणसिद्धान्तमञ्जूषा, वाराणसी, १९९०

१५. त्रिपाठी, जयशङ्करलाल, (ed.) परमलघुमञ्जूषा, वाराणसी, १९८५

१६. मिश्र, वंशीधर, (ed.) वैयाकरणसिद्धान्तलघुमञ्जूषा, गया, १९५७

१७. तर्काचार्य, कालीपद (ed.) सारमञ्जरी, कलिकाता, १९२१



# व्याकरणप्रस्थाने बुद्धिसत्ख्यातिवादः

धर्मेन्द्रकुमारसिंहदेवः

## ख्यातिवादस्य परिचयः

'ख्या'—प्रकथने—धातोस्क्तिन्—प्रत्ययेन 'ख्याति'—शब्दो निष्पद्यते। कोश—ग्रन्थानुसारेण ख्यातिपदं प्रसिद्धिं, कीर्तिम्.... अर्थं ग्राहयति। परन्तु दर्शनशास्त्रेषु ख्यातिपदमिदं प्रमाप्रमारूपज्ञानमात्रस्य वाचकम्। अपि चेदं 'ख्याति'—पदं ख्यातिवादपरम्परासु सविकल्पक—प्रत्यक्षार्थेषु विचारणीयतामर्हति। अर्थात् विवेकपर्यायः ख्यातिशब्दो व्यवहारज्ञानपरिधिषु सविकल्पकं प्रत्यक्षरूपमर्थम् अर्पयति। सविकल्पकेनैव प्रत्यक्षेण प्रामाण्यं निश्चीयते। यतो निर्विकल्पकं ज्ञानं प्रमा वा अप्रमा वेति वक्तुं नैव शक्यते। यथा हि—

न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम्। (न्यासु. १३५)

अतः दर्शनशास्त्रेषु सविकल्पकं प्रत्यक्षम् आधारीकृत्य प्रचलितमतसमुदायः ख्यातिवाद इत्युच्यते। यत्रेन्द्रियजन्यभ्रमात्मकज्ञानस्य व्याख्या प्रामुख्यं भजति। यतो भ्रमनिरासेन हि प्रमात्वस्य निर्णयः सम्भवति।

अत्रेदं वक्तव्यमुचितम् — सर्वेष्वपि ख्यातिवादेषु प्रायो भ्रमस्यैव निरूपणं क्रियते येन सम्यक्ख्यातिः स्पष्टीभवति। परं नेदं मन्तव्यम् ख्यातिशब्दो भ्रमपर्याय इति। ख्यातिर्नाम सविकल्पक—प्रत्यक्षज्ञानमात्र—बोधिकेत्यर्थः।

## ख्यातिवादस्य प्रकाराः

दर्शनप्रस्थाने पञ्चख्यातिवादा अतिप्रसिद्धं गताः—

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा
तथाऽनिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम्॥
योगाचारा माध्यमिकास्तथा मीमांसका अपि।
नैयायिका मायिनश्च पञ्च ख्यातीः क्रमाज्जगुः॥ (न्यायकोशे)

अर्थात् योगाचारा आत्मख्यातिं, माध्यमिका असत्ख्यातिं, मीमांसका अख्यातिं नैयायिकाश्च अन्यथाख्यातिं मन्यन्ते। ननु अत्यल्पमिदमुच्यते. दर्शनेषु प्रसिद्धेषु ख्यातिवादप्रकारभेदेषु निम्नोक्तेषु पञ्चैव ख्यातिवादा इति वचनं चिन्त्यम्। तथाहि–

| दर्शनानि | | ख्यातिवादा: |
|---|---|---|
| चार्वाकदर्शने | | अख्यातिवाद: / निर्विषयख्यातिवाद: / निरालम्बनख्यातिवाद: |
| जैनदर्शने | | विपरीतख्यातिवाद: |
| बौद्धदर्शने | शून्यवादे | असत्ख्यातिवाद: |
| | विज्ञानवादे | आत्मख्यातिवाद: / स्वख्यातिवाद: / विज्ञानकारख्यातिवाद: |
| | सर्वास्तिवादे | अन्यथाख्यातिवाद: |
| न्यायदर्शने | | अन्यथाख्यातिवाद: |
| वैशेषिकदर्शने | | विपरीतख्यातिवाद: |
| सांख्यदर्शने | | सदसत्ख्यातिवाद: / प्रसिद्धार्थख्यातिवाद: |
| योगदर्शने | | सदसत्ख्यातिवाद: / प्रसिद्धार्थख्यातिवाद: |
| मीमांसादर्शने | (कुमारिले) | अन्यथाख्यातिवाद: / अलौकिकख्यातिवाद: / विवेकख्यातिवाद: |
| | (प्राभाकरे) | यथार्थख्यातिवाद: / अख्यातिवाद: |
| | (मण्डने) | अभेदख्यातिवाद: |
| वेदान्तदर्शने | अद्वैते | अनिर्वचनीयख्यातिवाद: |
| | द्वैते | अन्यथाख्यातिवाद: |
| | विशिष्टाद्वैते | सत्ख्यातिवाद: |
| | शुद्धाद्वैते | अन्यख्यातिवाद: |
| दाक्षिणात्य–शैवदर्शने | | अन्यथाख्यातिवाद: |
| प्रत्यभिज्ञा–शैवदर्शने | | संकुचितख्यातिवाद: (अख्याति+सत्ख्याति:) |
| व्याकरण–दर्शने | | बुद्धिसत्ख्यातिवाद: |

प्रस्तुतेऽस्मिन् शोधपत्रे वैयाकरणानां बुद्धिसत्ख्यातिवाद एव विषयत्वेन गृहीत:।

## बुद्धिसत्ख्यातिवादस्य परिचय:

कस्तावद् बुद्धिसत्ख्यातिवाद:? अत्रोच्यते – बुद्धौ सद् बुद्धिसत्। बुद्धिसत: ख्याति: बुद्धिसत्ख्याति:, तां वदति य: सिद्धान्त: सोऽयं बुद्धिसत्ख्यातिवाद:। अत्राय

सारः। बाह्यपदार्थोऽपि बुद्धौ सत्तावान् तिष्ठति। स एव बाह्यपदार्थो बुद्धौ सत्तावान् सदेव प्रत्यक्षीभवति। अर्थात् सर्वं घटपटादिकं वस्तुजातं पूर्वं बुद्धिसदेव पश्चाद् बहिः प्रतीयत इत्यर्थः। शशशृङ्गम् आकाशकुसुमम् .... आदिरसदेव बुद्धिसद् भवति, येन तस्य शाब्दव्यवहारः सम्भवति। कार्यमपि उत्पत्तेः प्राक् बुद्धिसद् भवति। भ्रमोऽपि नाम बुद्धिसदेव विषयीभवतीति वैयाकरणानां स्थापना।

## बुद्धिसत्ख्यातिवादस्य परम्परा प्रयोजनीयता च

यद्यप्ययं वैयाकरणानां सिद्धान्तस्तथापि उपनिषत्सु एतद्–विषयको विचार–श्चरितार्थतां भजति यत्र स्वप्नदृष्य वर्णनं मित्थं दृश्यते–

न तत्र रथा न रथयोगा भवन्ति। अथ रथान् रथयोगान् पथः सृजते। न तत्रानन्दा मुदः प्रमुदो भवन्ति। अथानन्दान् मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति। अथ वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते। त हि कर्ता।

(बृहदारण्यक. ३.४.३.१०)

अर्थात् बहिरविद्यमाना रथानन्दादयः स्वप्नसृष्टिकर्तारो भवन्ति। अत्रेदं ज्ञातव्यम्। स्वप्नसृष्टिः सर्वथा बुद्धिसत् भवति। अर्थात् स्वप्नस्य दृश्यता–भोग्यता–स्वरूपो बुद्धावेव घटते।

पाणिनीये वैयाकरणदर्शने बुद्धिसत्तां विहाय नान्या गतिः। सन्धि–कार्येषु वर्णानां पूर्वापरव्यवस्था बुद्धिसत्ताम् आश्रित्यैव सम्भवति, क्षणध्वंसिनां वर्णानां पौर्वापर्यानुपपत्तेः। नाटकादिषु कंसं हन्ति, हतवान्, हनिष्यतीति प्रयोगेष्वपि बुद्धिसत्ता प्रतीयते। बुद्धिसन्नेव कंसादयः कारकत्वं लभन्ते। अन्यथा अतीतानां कंसादीनां कारकत्वमपि विप्रतिसिद्धं स्यात्। तेन हि नाटकादिविषयेषु बुद्धिसत्ख्यातिं स्वीकुर्वता भगवता पतञ्जलिनोक्तम्–

"उत्पत्तिप्रभृति आ विनाशाद् ऋद्धर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति।

महाभाष्यम्, पासू. ३.१.२६

महाभाष्यीयं तथ्यमिदं कारिकाबद्धेन भर्तृहरिराह—

शब्दोपहितरूपांश्च बुद्धेर्विषतां गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यन्ते।।

(वाक्यपदीयम् ३.७.५)

अपि चात्र कार्यकारणसम्बन्धो बुद्धिसन्नेव व्यवहारभाग् भवति। शब्दार्थानां पौर्वापर-सम्बन्धोऽपि बुद्धिसन्नेव सम्भवति। यथाह पतञ्जलिः—

बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्वन्नीतिः।
शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात् पौर्वापर्य्यम्।।

(महाभाष्यम्, पासू. १.४.१०९)

भर्तृहरिणापि शब्दार्थसम्बन्धविषयिणी बुद्धिसत्ख्यातिः प्रस्तूयते—

नादैराहितबीजायामन्त्येन ध्वनिना सह।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते।।

(वाक्यपदीयम् १.८४)

सिद्धान्तमेनम् अग्रेसारयन् नव्यवैयाकरणो भट्टो नागेशो बुद्धिसत्ख्यातिं प्रस्तौति। शब्दार्थविवेचनं प्रक्रम्य भट्टनागेशः प्राह—

शक्योऽर्थोऽपि बुद्धिसत्तासमाविष्ट एव न तु बाह्यसत्ताविष्टः। बुद्धिसतो बाह्यसत्ता—तद्भाव—बोधनाय 'अस्ति नास्ति' इति प्रयोगः। किं च शशशृङ्गं नास्ति, अङ्कुरो जायते' इत्यतो.....बुद्धिसन्नङ्कुरा बाह्यरूपेण जायत इत्यर्थः।

(लघुमञ्जूषा, पृ.२०३)

शशशृङ्गमपि बुद्धिसत्तासमाविष्टं सद् बहिर्नास्तीति व्यवहारं प्रतिपद्यते। कार्यविपर्ययेऽपि—

कार्यमुत्पत्तेः प्राङ्नाशोत्तरं चासदपि बुद्धिविषयतयातु सिद्धम् ।

(तत्रैव, पृ. २०४)

अग्रे च भट्टनागेशेन नैयायिकानाम् अन्यथाख्यातेः अद्वैतिनाम् अनिर्वचनीय-ख्यातेश्च समालोचना कृता विद्यते। परमत्र विस्तरभिया तन्नोल्लेख एव श्रेयः। एवमेव एतत् सर्वं बुद्धिसत्ख्यातिवादस्यैव महिमानं व्यनक्तीति।

## बुद्धिसत्ख्यातिवादस्य विशेषार्थ:

वस्तुतो बुद्धिसत्ख्यातिवादस्य विशेषतया निरूपणं महाभाष्ये पतञ्जलिना कृतं वर्तते। यथा सूत्रस्य शाटकं वय – इति भाष्यकृताम् उपस्थापना एतद्विशदयति–

कश्चित् कञ्चित् तन्तुवायमाह– 'अस्य सूत्रस्य शाटकं वय' इति। स पश्यति, यदि शाटको न वातव्य:, अथ वातव्यो न शाटक:, शाटको वातव्यश्चेति विप्रतिपिद्धम्, भाविनी खल्वस्य संज्ञाभिप्रेता, स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद् भवतीति।

(महाभाष्यम्, पासू.१.१.४४)

अत्रायं निष्कर्ष:। कार्यकारणसम्बन्ध:, कार्यकारणस्य एकत्रावस्थिति:, कार्यकारण–सम्बन्धस्य प्रतीतिर्वा बुद्धावेव भवति। बुद्धावेव तस्य सत्ता भवति। सैव तस्य ख्यातिरिति।

अपि च, रज्जौ सर्पस्य भ्रमो जायते। परन्तु यो नाम सर्प न जानाति न बुध्यते, तस्य तद्विषयको भ्रमोऽपि न जायत इति। यस्य बुद्धौ प्रागेव सर्पस्य सत्ता भवति तस्यैव रज्जौ सर्प: प्रतीयते। अर्थात् प्रागेव बुद्धौ भ्रमविषयकपदार्थस्य सत्ता अपेक्षिता। सिद्धान्तमेनं विना न भ्रमस्य न प्रमाया: न कस्यापि प्रतीति: सम्भवतीति वैयाकरणानामुद्घोष:।

तथा च, यो नाम गां न जानाति, तस्य गौ: इति नाम्ना प्रमा नैव जायते। 'गौरयम्' इति सत्तानुबिद्धं ज्ञानं नैव सम्भवति। सविकल्पकं ज्ञानं नैव उत्पद्यते। सविकल्पकेन ज्ञानेनैव व्यवहारो जायते। तावता सविकल्पज्ञानस्य भानं न स्यात् यावता बुद्धौ गोत्वस्य गोश्च विद्यमानता न स्यात्। सर्वादौ विशेषणस्य ज्ञानं भवति। विना विशेषणं सविकल्पज्ञानस्य नैव सम्भव:। यथा चोच्यते–

'नागृहीतविशेषणा बुद्धिर्विशेष्यमवगाहते'– इति सिद्धान्त:।

प्रथमतया यदा बालो गां पश्यति। तदा स तं न जानाति, हस्तम् उत्थाप्य पृच्छति। कश्चन उत्तरयति – 'गौरयम्'। तत्र बालो गोव्यक्तिं पश्यति, गोव्यक्तिं जानातीति प्रतीयते, तन्न। इयं भ्रान्ति:। स बालो गोव्यक्तिना सह गोत्वं जातिमपि अवगच्छति। अत: अन्यत्र अपरां गां पश्यन् बालस्तामपि 'गौरयम्' इति वदति। यदि गोत्वजातिम् अजानन् बाल: अपरां गां कथं गौरिति वदेत। अपि च प्रथमं गोव्यक्तिं यावत् ज्ञानं सीमितं स्यात्। परन्तु सा गोत्वजातिरपि बुद्धौ निरूढा।

यदि गाम् अजानन् बालः अपरं पशुं जानाति तदा तस्य पशुत्वावच्छेदकं ज्ञानं भवेत्, न गोत्वम्। गोत्वं प्रति 'गौरयम्' इति शब्दशो ज्ञानम् अपेक्ष्यते। यावता शब्दतो ज्ञानं न स्यात् तावता सविकल्पकं ज्ञानमपि न सम्भवेत्। तत्सविकल्पकं ज्ञानं शब्दानुविद्धं भवति। अतः प्रागेव बुद्धिस्थाः शब्दार्थां भवति। अन्यथा प्रत्यभिज्ञा न स्यात्।

उपसंहारः

विंशशतकस्य मूर्धन्यो वैयाकरणो वच्चूलालोऽवस्थी 'वादत्रयी'– ग्रन्थे प्रथमतया 'बुद्धिसत्ख्यातिवाद' इति नाम्ना व्याकरणदर्शनस्य सिद्धान्तमेनं साङ्गोपाङ्गं विवेचनं कृत्वा प्रतिष्ठापयति। यद्यपि 'बुद्धिसत्ख्यातिवाद' इति नाम्ना वैयाकरणशास्त्रेषु कुत्रापि नायाति तथापि सम्पूर्णं तथ्यमिदं विमर्श्य बुद्धिसत्ख्यातिवादस्य प्रतिष्ठा करणीया इति अवस्थिपादाः। इत्थं वैयाकरणानां बुद्धिसत्ख्यातिवादः ख्यातिवादपरम्परायां महिमानं भजतीति।



# तदन्तविधिः

बालशास्त्री

ननु व्याकरणशास्त्रीयसंज्ञातिरिक्ताः सूत्रघटकाः शब्दाः स्वस्वरूपमात्रबोधका इत्यर्थकस्य 'स्वं रूपं शब्दस्याशब्दसंज्ञा' १.१.६८ इति सूत्रस्य विद्यमानत्वे 'सर्वादीनि सर्वनामानि' १.१.२७ इति सूत्रेण सर्वादिगणे अपठितानां परमसर्व–परमविश्वादि–शब्दानां सर्वनामसंज्ञाया अभावेन परमसर्वे, परमविश्वे इत्यादौ 'जशः शी' ७.१.१७ इति सूत्रेण कथं शीभावः, परमोच्चैः परमनीचैः इत्यादीनां स्वरादिगणे पाठाभावेन 'स्वरादिनिपातमव्ययम्' १.१.३७ इत्यव्ययत्वाभावाद् 'अव्ययादाप्सुपः' २.४.८२ इत्यनेन कथं सुपो लुक्, स्वाढ्यङ्करणम् इत्यत्र स्वाढ्योपपदे 'आढ्यसुभगस्थूल॰' ३.२.५६ इत्यनेन कथं कृञः ख्युन्प्रत्ययः, अभयङ्कर इत्यत्र 'मेघर्तिभयेषु कृञः' ३.२.४३ इत्यनेन अभयशब्दे उपपदे कथं खच्प्रत्ययः, एवम् 'अतिभवती' इत्यस्य उगिदरूपप्रातिपदिकत्वाभावाद् 'उगितश्च' ४.१.६ इत्यनेन कथं ङीप्, परमस्वसा, परमदुहिता इत्यादौ 'न षट्स्वस्रादिभ्यः' ४.१.१० इत्यनेन ङीपो निषेधश्च कथमिति चेत्, श्रूयताम्–

स्वं रूपं शब्दस्येत्यस्य बाधकेन 'येन विधिस्तदन्तस्य' १.१.७१ इति संज्ञासूत्रेण तत्र तत्र सूत्रेषु तदन्तविधिना तदन्तानामपि तेषां शब्दानां बोधसम्भवेन तत्तत्कार्याणां तत्र संभवात्।

ननु कः खल्वस्य सूत्रस्यार्थः? यदि 'यस्य विधिः स तदन्तस्य संज्ञा, अर्थात् बोधकः' इत्यर्थस्तर्हि 'इको यणचि' ६.१.७७ इति सूत्रे अनेन इकः इत्यस्य तदन्त–बोधकत्वप्राप्तौ इगन्तसमुदायस्य 'सुधी' इत्यादेः सम्पूर्णस्य स्थाने यणापत्तिः स्यात्। 'अलोन्त्यस्य' १.१.५२ इत्यनेन इक एव स्थाने यणादेशसम्पादनेनेष्टसिद्धावपि अनेकालादेशविधायके 'एचोयवायावः' ६.१.७८ इत्यादौ अलोन्त्यपरिभाषाया अप्रवृत्या सर्वादेशप्रसक्तेर्दुर्वारत्वेन दोषसद्भावात्। यदि व्याकरणस्मृतेः साधुत्वबोधनपरत्वाद् 'अयाद्यादेशघटितश्च प्रयोगः साधुः' इत्येवं साधुत्वबोधनपर्यन्तं सूत्रस्य व्यापारात् साधुत्वविधिमाश्रित्य अयाद्यादेशतोपि तदन्तविधौ, 'एजन्तस्य अयाद्यन्ता आदेशाः स्युरित्यर्थेन दोषा निवार्यन्ते, तर्हि 'आद्गुणः' ६.१.८७ इत्यत्र तदादितदन्तविध्योरुभयोरप्युपस्थितौ

'अकारान्तादजादौ परत: पूर्वपरयो स्थाने गुण:' इत्यर्थेन उपेन्द्र:, शीतोदकम् इत्यादौ अवर्णान्तसमुदायस्य अजादिसमुदायस्येति उभयो: स्थाने गुणापत्तौ प्रयोगविरूपतापत्ति-र्दुष्परिहारा स्यात्। न च निर्दिश्यमानपरिभाषया निस्तार:। स्थानषष्ठ्यनिर्देशात्तस्या अत्र प्रवृत्ते: सम्भवाभवात्। अत एव अलोन्त्यपरिभाषाया अपि नात्रावसर:। 'एक: पूर्वपरयो:' ६.१.८४ इत्यधिकारसूत्रस्थपूर्वपरपदोत्तरविद्यमानषष्ठ्या तु 'आद्गुण:' ६.१.८७ 'वृद्धिरेचि' ६.१.८८ इत्यादौ अवर्णस्य अवर्णान्तस्य चेत्युभयोर्बोधसम्भवेन तस्या: साधारणीत्वान्नात्र तद्बलाज् 'जराया जरस्' ७.२.१०१ इत्यादिवन्निर्दिश्यमानपरिभाषया अभिलषितरूपसिद्धे: सम्भावनापि।

किं च 'अलोन्त्यस्य' १.२.५२ इति सूत्रेऽपि तदन्तविधिप्रवृत्तौ 'पथिमथ्यृभुक्षामात्' ७.१.८५ इति सूत्रेण कदाचित् 'पथिन्' इति समुदायस्य कदाचिच्च 'थिन्' इत्यस्य अलन्तसमुदायस्य वा आकारादेशप्रसंगे अस्य आकारादेशस्य अल्मात्रस्थानिकत्वाभावाद् अनल्विधाविति स्थानिवद्भावनिषेधाप्रवृत्तौ 'स्थानिवदादेश:' १.१.५६ इति स्थानिवद्भावापत्तौ हलन्तबुध्या 'हल्ङ्याभ्यो दीर्घात्' ६.१.६८ इत्यनेन 'पन्था:', 'द्यौ:', 'स:' इत्यादौ सुलोपापत्ते:।

नन्वेवम् सर्वत्र 'अलोन्त्यस्य' १.२.५२ इति सूत्रेणैव सर्वेषामपि एकालनेकाला-देशानां सम्पूर्णस्थानिकत्वे सिद्धे 'अनेकाल्शित् सर्वस्य' १.१.५५ इति सूत्रारम्भसामर्थ्याना-त्रालोन्त्यसूत्रे तदन्तविधिरिति कल्पनेन नेमे पूर्वोक्ता दोषा: सम्भवन्तीति चेन्न। अनेकाल् आदेश: सम्पूर्णस्यैव स्थाने भवेदिति ज्ञापनार्थं तस्यावश्यकत्वात्। अन्यथा 'प्रशस्यस्य श्र:' ५.३.६० इति सूत्रेण विधीयमान: श्रादेश: कदाचित् शस्यस्थाने, कदाचित् स्यस्थानेऽपि स्यात्। एवमेव 'ज्य च' ५.३.६१ इति सूत्रेण 'वृद्धस्य च' ५.३.६२ इति सूत्रेणापि विधीयमानयोरादेशयोरनभीष्टस्थानिकत्वापत्या विभिन्नरूपतापत्तिर्दुष्परिहारा स्यात्।

'नच निजौ चत्वार एकाच:' इति 'एकाचो द्वे प्रथमस्य' ६.१.१ इति सूत्रस्थभाष्याभिप्रायानुसारं 'लिटि धातोरनभ्यासस्य' ६.१.८ इति सूत्रेण क्रमात् प्रत्येकमेकाचं प्राप्तस्य द्वित्वस्य वृक्षप्रचलनन्यायेन 'निज्' इति समुदाये एव प्रवृत्तिर्न तु 'नि'+'इज्'+'इ' इत्यादौ यथा, तथा श्र,ज्याद्यादेशानामपि वृक्षप्रचलनन्यायेन अलोन्त्यपरिभाषयापि समुदायस्यैवादेशसम्भवे 'अनेकाल्शित्सर्वस्य' इतिसूत्रीयवैयर्थ्यस्य स्थिरतया तत्सामर्थ्याना-लोन्त्सूत्र तदन्तविधिरिति सिद्धमिति न पूर्वोक्ता: सन्ति दोषा इति वाच्यम्।

अलोन्त्यस्येत्यत्र तदन्तविध्यप्रवृत्तावपि 'इको यणचि' ६.१.७७ इत्यादौ तदन्तविधिप्रसक्तौ अन्तरङ्गबहिरङ्गभाववैपरीत्यापत्या स्योनः, स्योना इत्यादिरूपाणामसिध्यापत्तेः। तथा हि तन्तुसन्तानार्थकात् षिवुधातोः औणादिके न प्रत्यये 'सिव् न' इत्यवस्थायां 'लोपो व्योर्वलि' ६.१.६६ इति प्राप्तं वलोपमपवादत्वात्, अङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रित्य प्रवर्त्तमानं 'पुगन्तलघूपधस्य च' ७.३.८६ इति इकारस्य गुणं च वकारान्ताङ्गानुनासिकप्रत्ययमात्रसापेक्षतया अन्तरङ्गत्वात् प्रबाध्य 'च्छ्वोः शूडनुनासिके च' ६.४.१९ इत्यनेन ऊठि, सिऊन, इत्यवस्थायां प्रकृतिप्रत्ययोभयसापेक्षलघूपधगुणापेक्षया सिऊ, इति प्रकृतिमात्रसापेक्षस्य यणोन्तरङ्गत्वाद् यणि, 'सार्वधातुकार्धधातुकयोः' ७.३.८४ इति गुणे, सुबन्तकार्ये च सति सिध्यति 'स्योनः' इति रूपम्। 'इको यणचि' ६.१.७७ इत्यत्र तदादि–तदन्तविध्योः, प्रवृत्तौ तु इकारान्तस्य 'सि' इत्यस्य अजादौ ऊन इति परे यण् भवतीत्यर्थेन ऊन इत्यस्य यणि निमित्तत्वं, गुणे तु न मात्रप्रत्ययस्य निमित्तत्वमिति यणपेक्षया गुणस्यान्तरङ्गत्वात् सि इति इकारस्य लघूपधगुणे स्योन इति इष्टरूपसिद्धिरिति भावः। तथा च महाभाष्यम् स्योनः, स्योना। (अत्र) 'अन्तरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधकः प्रसज्येत। ऊनशब्दमाश्रित्य यणादेशो न शब्दमाश्रित्य गुणः'। इति।

तथा च तदन्तविधिसूत्राभावे परमसर्वे, परमविश्वे, परमोच्चैः, परमनीचैः इत्यादि प्रयोगाणामसिद्धिः। तदन्तविधिस्वीकारे च उपेन्द्रः, ब्रह्मौदनः, स्योनः, इत्यादिप्रयोगाणां सिध्यभावः इति उभयतः पाशारज्जुरिति चेदत्रोच्यते–

येन विधिरिति सूत्रे विधीयते असौ विधिः इति 'उपसर्गे घोः किः' ३.३.९२ इति सूत्रेण कर्मणि किप्रत्ययः। येन इत्यत्र 'कर्त्तृकरणयोस्तृतीया' २.३.१८ इतिसूत्रेण करणेऽर्थे तृतीया, न तु कर्तरि, 'कर्तृकर्मणोः कृति' २.३.६५ इति षष्ठ्या बाधात्। नापि हेतौ, कारकविभक्तेर्ज्यायस्त्वात्। किप्रत्ययेन कर्मण उक्तत्वाच्च नात्र 'उभयप्राप्तौ कर्मणि' २.३.६६ इत्यस्यावकाश । कारकेषु कर्त्तृकारकं करणकारकम् इति द्वे एव कारके व्यापारवती भवतः, नान्यानि कारकाणि। तत्र कर्ता प्रकृतधात्वर्थप्रधानीभूतव्यापारवान् भवति, करणं च तृतीयावाच्यव्यापाराश्रय इति विवेकः। तथा हि रामो बाणेन रावणमवधीत् इत्यत्र हन्धात्वर्थप्राणवियोगानुकूलो व्यापारो रामे, तृतीयावाच्यवेगाख्यव्यापारो बाणे। तथाचोक्तमभियुक्तैः 'व्यापारवदसाधारणं कारणं करणम्' इति। स च तृतीयावाच्यो व्यापारः प्रकरणादिना यथायथं यथायोग तत्र तत्र निधार्यते।

तथा च येन इति करणतृतीयान्तेन गौणलक्षणया विशेषणमुच्यते। तृतीयया विशेषणं पारतन्त्र्यं वा लक्ष्यते इति दीक्षितोक्तिस्तु 'न विभक्तौ लक्षणा' इति सिद्धान्तनादर्तव्येति केचित्। विशेषणस्य इतरव्यावर्तनरूपो भवति व्यापारः। विशेष्ये सत्येव विशेषणं भवतीति विशेष्यविशेषणयोः समनियतत्वाद् विशेष्योऽप्यत्र सन्निधाप्यते। विशेष्यस्य सन्निधापनं क्वचित् साक्षान्निर्देशेन, यथा 'ईदूदेद्द्विवचनं प्रगृह्यम्' १.१.११ इत्यत्र द्विवचनमित्यस्य, क्वचिच्छब्दाधिकाराद् यथा 'एरच्' ३.३.५६ इत्यत्र 'धातोः' ३.१.९१ इत्यस्य, क्वचिच्च आक्षेपाद्यथा 'इको झल्' १.२.९ इन्यत्र सन्प्रत्ययेन धातोः इत्यस्येति त्रिभिः प्रकारैर्जायते। कर्त्ता चात्र प्रसिद्धत्वाद्याचार्यो भगवान् पाणिनिर्लभ्यते।

तदेवं आचार्यो येन करणभूतेन विशेषणशब्देन यस्य विशेष्यभूतस्य शब्दस्य कार्यं विधत्ते स विशेषणीभूतः शब्दः तदन्तस्य, अर्थात् स विशेषणीभूतः शब्दः अन्ते यस्य तादृशस्य विशेष्यान्तशब्दसमुदायस्य संज्ञा, नाम बोधको भवतीति सूत्रार्थः संवृत्तः। अत्र सूत्रे 'स्वं रूपं शब्दस्याशब्दसंज्ञा' १.१.६८ इति सूत्रात् 'स्वम्' इत्युवर्त्तते, इति स्वस्यापि बोधकः। तदेवं चेयम्, जेयम् केयम् इत्यादिषु एयम् इत्यत्र च 'अचो यत्' ३.१.९६ इति यत्प्रत्ययसिद्धिर्निर्बाधा। तथा च भाष्यम्– 'अन्येन चान्यस्य विधिर्भवति। तद्यथा देवदत्तस्य समाशं (भोजनं) शरावैरोदनेन च यज्ञदत्तः प्रतिविधत्ते। संग्रामं हस्त्यश्वरथ–पदातिभिः। एवम् इहाप्यचा धातोर्यतं विधत्ते।' 'अत इञ्' ४.१.९५ इत्यत्र 'अकारेण प्रातिपदिकस्य इञं विधत्ते'। इति।

सति गमके पूर्वोक्तप्रकारत्रयेणानुपस्थितमपि 'शब्दस्वरूपं' 'तदादिं' वा समाना–धिकरणं विशेष्यमादाय जायते तदन्तविधिर्यथा 'सर्वादीनि सर्वनामानि' १.१.२७, 'ष्यङः सम्प्रसारणम् पुत्रपत्योः' ६.१.१३ इत्यादौ। 'प्रयोजनं' सर्वनामाव्ययसंज्ञायामि'ति वार्त्तिकस्य गमकतया सर्वनामसंज्ञायाम्, अव्ययसंज्ञायां च शब्दादनुपस्थितमपि शब्दस्वरूपं विशेष्यमादाय तदन्तविधिसत्वेन सर्वादिगणपठितान्तशब्दस्वरूपाणां, स्वरादिगणपठितान्तशब्दस्वरूपाणां तत्तत्संज्ञासिद्ध्या परमविश्वे, परमसर्वे, परमोच्चैः परमनीचैः इत्यादिप्रयोगसिद्धौ नावशिष्यते कापि बाधा। एवमेव ष्यङः सम्प्रसारणमित्यत्रापि 'प्रत्ययग्रहणे यस्मात्सविहितस्तदादेः' इति परिभाषायाः गमकत्वेन तदादिपदोपस्थितौ तद्विशेष्यकत्वेन तदन्तविधौ ष्यङन्तं यत्तदादि इत्यर्थे सति पूर्वपदं विशेष्यमादाय पुनः तदन्तविधौ ष्यङन्तं यत्तदादि तदन्तं यत्पूर्वपदम् इत्युपसर्जनस्थले अर्थे जाते कौमुदगन्धीपुत्रः, कौमुदगन्धीपतिः इत्यादौ सम्प्रसारणसिद्धिः, अतिकारीषगन्ध्यपुत्रः इत्यत्र सम्प्रसारणाश्च सिध्यति। अनुपसर्जनस्थले तु 'स्त्रीप्रत्यये

चानुपसर्जनेन' इति तदादिनियमप्रतिषेधाद् परमकारीषगन्धीपुत्रः इत्यत्र सम्प्रसारणं भवत्येव, परमकारीषगन्ध्या इत्यस्य ष्यङन्तत्वस्य सर्वसम्मतत्वात्।

'इको यणचि' ७.१.७७, 'एचोयवायावः' ६.१.७८ इत्यादौ तु न कथंचिदपि विशेष्यस्य कस्यचिदपि सन्निधिरिति नास्य तदन्तविधिविधायकस्य 'येन विधिरिति' सूत्रस्यावसरः इति नात्र पूर्वोक्तानां दोषानामवकाशः इति सर्व निरवद्यम्।

'विशेषणविशेष्यभावे कामचारः' इति सिद्धान्तात् 'उतश्चप्रत्ययादसंयोगपूर्वात्' ६.४.१०६ इति अत्र 'असंयोगपूर्वात्' इति उकारस्य विशेषणं, न तु प्रत्ययस्य। उक्तासंयोगपूर्वत्वविशिष्टिस्य प्रत्ययावयवोकारस्य अङ्गं प्रतिविशेषणत्वेन तदन्तविधौ असंयोगपूर्वो यः प्रत्ययावयवोकारः तदन्तादङ्गात्परस्य हेर्लुक् इत्यर्थे सति आप्नुहि, शुक्नुहि इत्यादौ नातिव्याप्तिः। एवमेव 'उदोष्ठ्यपूर्वस्य' ७.१.१०२ इत्यत्रापि ओष्ठ्यपूर्वस्य इति ॠतः इत्यस्य विशेषणं न तु ॠदन्ताङ्गस्य धातोः, तथा च तदन्तविधिसत्वे ओष्ठ्यपूर्वो य ॠत् तदन्ताङ्गस्य धातोः इत्यर्थे सति न संकीर्णम्, संगीर्णम् इत्यादावति–व्याप्तिः नापि च निपूर्ताः पिण्डा इत्यदावव्याप्तिश्च।

तदन्तविधिरयं समासविधौ, उगिद्वर्णग्रहणवर्जप्रत्ययविधौ च न प्रवर्तते। तथा च 'द्वितीया श्रितातीतपतित' २.१.२४ इत्यनेन कष्टं परमश्रितः इत्यादौ समासो न भवति। न च सूत्रनडस्यापत्यं सौत्रनाडिः इत्यत्र 'नडादिभ्यः फक्' ४.१.९९ इत्यनेन नाडायनः इतिवत् फक्प्रत्ययश्च भवति। अनुशतकादित्वादत्र उभयपदवृद्धिः।

तदन्तविधिसंकोचे बीजन्तु 'उगिद्वर्णग्रहणवर्जम्' 'समासप्रत्ययविधौ प्रतिषेधः' इति वार्तिकद्वयमेव। इदं वार्तिकद्वयं विशेष्यविशेषणभावव्यत्यासे तात्पर्यग्राहकम् एव।

प्रत्ययविधित्वेऽपि 'उगितश्च' ४.१.६ इत्यत्र तदन्तविधिर्भवत्येवेति प्रातिपदिकं विशेष्यमादाय तदन्तविधौ, उगिदन्तं यत्प्रातिपदिकं तस्मात् ङीप् इत्यर्थेन अतिभवती इत्यादावपि ङीप् सिध्यति। 'अत इञ्' ४.२.९५ इत्यस्यापि प्रत्ययविधायकत्वेपि वर्णग्रहणात् अत्रापि, प्रातिपदिकं विशेष्यमादाय तदन्तविधिर्जायते इति दाक्षिः, प्लाक्षिः, इत्यादावपि इञ्प्रत्ययसिद्धिः। 'मेघर्तिभयेषु कृञः' ३.२.४३ इत्यत्र, 'आढ्यसुभगस्थूलः' ३.२.५६ इत्यत्र च कर्म विशेष्यमादाय भयशब्दं, आढ्यादिं च विशेषणं कृत्वा तदन्तविधौ कर्मार्थबोधके भयान्तशब्दे उपपदे, कृञः खच् प्रत्ययो भवति, कर्मार्थबोधकेषु आढ्याद्यन्तशब्देपूपपदेषु कृञः ख्युन् प्रत्ययः स्याद् इत्यर्थेन अभयंकरः, स्वाढ्यंकरणम् इत्यादिप्रयोगाणां सुखसाध्यता स्पष्टैव। तथा च श्री कैयटः – भयादिभिः कर्म विशेष्यते। इति

भट्टनागेशास्तु अभयंकर इति भाष्यप्रयोगाद् भाष्योक्तिं गमिकां मत्वा शब्दस्वरूपं विशेष्यमादायात्र तदन्तविधिं ब्रुवते। तथा हि लघुशब्देन्दुशेखरः– 'येन विधिरिति–सूत्रस्थभाष्यप्रामाण्याच्छब्दरूपं विशेष्यमादाय तदन्तविधिरत्रेति बोध्यम्' इति। 'नेदमदसोरकोः ७.१.११ इतिसूत्रघटकाकोरितिपदज्ञापितेन 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति वचनेन सर्वके विश्वके इत्यादौ अकच्प्रत्ययविशिष्टेऽपि सर्वनामत्वेन शीभावो निर्बाधः।

महाभाष्ये तदन्तविधेः बहूनि खलु प्रयोजनानि प्रदर्शितानीति अधिकजिज्ञासुभिः ततोऽवगन्तुं शक्यन्ते इत्यलमियता।



# समानाक्षरसंज्ञाविषये किञ्चत्

निर्मला कुलकर्णी

१.०.० उपोद्धात:

'समानाक्षर' इति संज्ञा शिक्षाप्रातिशाख्यादिग्रन्थेषु प्रसिद्धा। अ, इ, उ, इ. स्वरसंध्यभावयुक्ता: स्वरा: समानाक्षरसंज्ञया वर्णिता:। ते Monophthongs इति आङ्ग्लभाषायां कथ्यन्ते। स्वरद्वयसंधिरूपत्वाभावत्वं समानाक्षरत्वम् इति तैत्तिरीयप्रातिशाख्यास्य टीकायाम् उक्तम्। तथापि प्रतिप्राति–शाख्यं समानाक्षराणां गणनं भिद्यते। किं कारणं भवेदस्य गणनभेदस्य इत्येव अस्य पत्रस्य विषय:। स च निम्नोक्तरीत्या विशदीकृत:

१. विविधेषु ग्रन्थेषु 'समानाक्षर' – संज्ञावर्णनम्

२. वर्णने भिन्नता तस्याश्च कारणम्

३. निष्कर्ष:

१.१.० समानाक्षरसंज्ञावर्णनम् – समानाक्षरसंज्ञाया: वर्णनानुरूपं ग्रन्थानां विभागद्वयं भवितुमर्हति।

१. प्रथमो विभाग :– अ) प्लुतानां वर्जनं, ऋवर्णस्य अथवा ऋलृवर्णयो: अन्तर्भावश्च, प्रथमविभागस्य लक्षणम्। 'अष्टौ समानाक्षराण्यादित:' इत्युक्त्वा 'अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, इत्यष्टौ स्वरा: समानाक्षरसंज्ञया व्यपदिश्यन्ते ऋग्वेदप्रातिशाख्ये[1], (ऋ प्रा) वाजसनेयिप्रातिशाख्ये[2] (वा प्रा), शौनकीय चतुराध्यायिकायां[3] च। आ) अस्यैव उपविभागे अष्टाध्याय्या: टीकाग्रंथा:, अन्ये कातन्त्रादय: व्याकरणसंप्रदायग्रंथा: अन्तर्भवन्ति। उपर्युक्तेषु अष्टसमाना–क्षरेषु ते लृवर्णस्य ह्रस्वदीर्घे द्वे रूपे परिगणयन्ति। 'दश समाना:' इति व्याख्यानुसारेण।

२. द्वितीय: विभाग: – अस्मिन् विभागे तैत्तिरीयसम्प्रदयस्य अन्तर्भाव: कर्तुं शक्यते तैत्तिरीयप्रातिशाख्यं (तैप्रा)[4] पारिशिक्षा[5] च। अस्य विभागस्य

प्रथमविभागापेक्षया भिन्नैव सरणि:। प्लुतानाम् अन्तर्भाव:, ऋऌवर्णयो: च वर्जनम् इति वैशिष्ट्यम् अस्य विभागस्य। 'अथ नवादित: समानाक्षराणि' इत्युक्त्वा अ,आ,आ३, इ, इ, ई३, ऊ, ऊ, ऊ३ इति नवानां स्वराणां परिगणनं कुर्वन्ति। एवम् –

| प्लुतानां वर्जनम् | ऋ/ऌयो: अन्तर्भाव: | प्लुतानाम् अन्तर्भाव:/ ऋऌयो वर्जनम् |
|---|---|---|
| ऌकारस्य वर्जनम् | ऌकारस्य अन्तर्भाव: | |
| १. ऋ.प्रा. | ऋक्तंत्रविवृति: | तै. प्रा. |
| २. तै.प्रा. | पाणिने: टीकाग्रंथा: | पारिशिक्षा |
| ३. शौच | अन्ये व्याकरणसंप्रदाया: | |

१.२.० भेदस्य कारणम् –

१. प्लुतस्वराणां गणनं किमर्थम्?

वस्तुत:, समानाक्षरसंज्ञा संध्यक्षर (diphthongs) संज्ञा विरोधित्वेन उपयोजिता। स्वरस्वरूपस्य वर्णनमेव तस्या: उद्देश:। अत: 'स्वरद्वय-संधिरूपत्वाभावत्व' इत्येव युक्तं लक्षणम्। तच्च प्लुतस्वरेषु सिद्ध्यति। तत्र केवलं मात्राणां संख्या भिन्ना। सन्धिश्च नास्ति। ह्रस्वापेक्षया प्लुतवर्णस्य मात्रासंख्या भिन्ना। अत: स: 'समानाक्षरम्' एव। अतएव तैत्तिरीयप्रातिशाख्ये तेषां गणना 'समानाक्षरेषु' कृता।

किमर्थं प्रथमविभागस्थै: ग्रन्थै: ते विवर्जिता:? यद्यपि, समानाक्षर-संज्ञाया: संध्यभाव: एव प्रवृत्तिनिमित्तम्, तथापि नैकवारं एषा संज्ञा सवर्णदीर्घ-संधिप्रकरणे एव प्रयुक्ता। प्लुतानां च संधि: नास्ति। अत: ते विवर्जिता:। अस्मिन् विषये टीकाकारा: अपि एवम्–

१. उवट – "इह तु तेषां प्लुतानां ग्रहणं न संभवति, प्रयोजनाभावात्, सवर्णदीर्घत्वं च संज्ञाकरणे प्रयोजनम्। न च सवर्णदीर्घत्वं उक्तानां प्लुतानां संभवति। अत: प्लुता: न गृह्यन्ते।"

२. अनतभट्टः[७] –"प्लुतानां नियतानां वक्ष्यमाणत्वात् संज्ञायाः अकार्यार्थत्वाद् अग्रहणम्।"

३. बालशिक्षा[८] – "समानादन्योऽसवर्णः"

अत एव 'समानाक्षरविधिः' 'समानकार्यम्' इति शब्दाः 'सवर्णकार्यम्' इति अनूदिताः पाणिनिसंप्रदाये एवम्–

कात्यायनः[९] – वर्णैकदेशाः वर्णग्रहणेन चेत् संध्यक्षरे समानाक्षरविधिप्रतिषेधः'। शिव. ३ वा ४।

पतञ्जलिः[१०] :– वर्णैकदेशाः वर्णग्रहणेन चेत् संध्यक्षरे समानाक्षराश्रयो विधिः प्राप्नोति स प्रतिषेध्यः। अग्ने इन्द्र, वायो उदकम्। अकः सवर्णे दीर्घः इति दीर्घत्वं प्राप्नोति।

प्रदीपः[११] – समानशब्देन पूर्वाचार्यनिर्देशादकोऽभिधीयन्ते। 'दशसमानाः' इति वचनात्। तेन समानकार्यं प्राप्नोतीत्यर्थः।

उद्योतः[१२] – समानकार्यम् अग्रूपसमानकार्यमित्यर्थः। सवर्णकार्यमिति पाठे सवर्णदीर्घरूपकार्यम् इत्यर्थः।

एवं समानाक्षरसंज्ञा सवर्णदीर्घसंधिविषये प्रयुक्तवात् प्लुतानाम् अग्रहणम्।

तैत्तिरीयप्रातिशाख्ये तावत् सुसूत्रता दृश्यते। प्रथमं तावद् समानाक्षराणि परिगणय्य अनन्तरं –'द्वे द्वे सवर्णे ह्रस्वदीर्घे' (१.३) इत्युक्त्वा प्लुताः सवर्णात् परिवर्जिताः। 'दीर्घं समानाक्षरे सवर्णपरे' (१०.२) इति सवर्णदीर्घत्वं च उक्तम्।

२. ऋलृयोः वर्जनम् –

संधिरूपत्वाभावत्वमेव समानाक्षराणां लक्षणम्। यद्यपि ऋ, लृ इत्येते वर्णो न स्वरद्वयसंधिस्वरूपौ तथापि ते, र, ल, व्यञ्जनमिश्रितौ एव। तैत्तिरीयप्रातिशाख्यं तौ 'पृक्तौ' इति वर्णयति। अत एव प्रायः तयोः समानाक्षरेषु गणनं न कृतम्। टीकाकारास्तु एवम्–

अ. उपयोगानुगुण्यत्वम् – तैत्तिरीयशाखायां ऋलृयोः सवर्णसन्धिः न दृश्यते। अतः तेषाम् अग्रहणम् इति मतं त्रिभाष्यरत्नस्य'[१३]। "आचार्यस्तु उपसर्गसंज्ञावत् उपयोगानुगुण्यान् नवानामेव आह।" मम तु मतम्–

समानाक्षरसंज्ञायाः सवर्णदीर्घसन्धिः इति प्रयोजनम् अन्येषां प्रातिशाख्यानां, न तु तैत्तिरीयसम्प्रदायस्य। अपरं च, ऋऌृवर्णयोः सवर्णदीर्घसन्धिः न केवलं तैत्तिरीयशाखायाः वैशिष्ट्यम्, अपि तु सर्वस्यापि वैदिकवाङ्मयस्य।

२. ऋऌृवर्णयोः विवर्जनस्य अन्यदपि कारणमुक्तं वैदिकाभरणकारेण'' रूपद्वय–सद्भावत्वम् इति। 'ऋकारादीनां स्वरद्वयसंधिरूपत्वाभावेऽपि रूपद्वयसद्भावात् एषा संज्ञा न युक्ता।'' नाम ऋऌृवर्णानां प्लुतत्वं नास्ति, अतः ते वर्जिताः। भाषिकसूत्रम्'' इत्येको ग्रन्थः शतपथब्राह्मणसम्प्रदायस्य। तस्मिन् 'अवर्णधा–रणाः' इत्येका संज्ञा वर्णिता। यो वर्णः अवर्णः इव ह्रस्वः–दीर्घ–प्लुतरूपात्मको भवति स वर्णः अवर्णधारणः' इति उक्तम्। अस्य ग्रन्थस्य टीकाकृत् महास्वामी विशदी–करोति –''अवर्णस्य धारणाः अवर्णधारणाः। अस्ति पदं मात्राकालं, द्विमात्राकालं, त्रिमात्राकालम् इति। अकारादयः पञ्चवर्णाः अष्टादशधा भिद्यन्ते इत्यर्थः''..........

अत एव प्रायः ये ये वर्णाः अवर्णधारणाः मताः प्रातिशाख्यैः ते ते समानाक्षरेषु निविष्टाः। तथापि अन्यो कोऽपि ग्रन्थः इदं मतं कथं न पुरस्करोति इति तु शङ्कास्पदमेव।–

१.३.० निष्कर्षः – मम तु इदं मतम्। स्वरद्वयसंधिरूपत्वमेव समानाक्षरत्वम् इति तत्त्वं तैप्रा. संपूर्णतया अनुसरति। अत एव प्लुतानाम् अन्तर्भावः, ऋऌृवर्णयोः च वर्जनं तयोः व्यञ्जनपृक्तत्वात्। एवं केवलं अ, इ, उ वर्णाः तेषां दीर्घप्लुतरूपाणि च समानाक्षराणि।

अन्येषां ग्रन्थानां ''सवर्णदीर्घत्वमेव संज्ञायाः प्रयोजनम्। यत्र यत्र सवर्णगणनभेदः तत्र तत्र समानाक्षरगणनभेदः। अत एव प्लुतानां वर्जनम्।''

संदर्भाः

१. वर्मा, वीरेन्द्र कुमार, ऋग्वेद प्रातिशाख्यम् (संपा.उवटाचार्याणां टीकासमेतम्), काशी विश्वविद्यालयम्, बनारस, १९७०।

२. रस्तोगी, इन्दु ''शुक्लयजुःप्रातिशाख्यम्'' (संपा.) चौखम्बा संस्कृत सीरिज, वाराणसी, १९६७।

३. क्विटनी, डब्ल्यू.डी. The Atharvaveda Prātiśākhyam, (पुनर्मुद्रणम्) (संपा.) चौखम्बा संस्कृत सीरिज, वाराणसी, १९६२।

४. आर्. शामशास्त्री, एस्.के. रंगाचार्य, ''तैत्तिरीयप्रातिशाख्यम्'' त्रिभाष्यरत्न–वैदिकांभरणसमेतम्' (संपा.) मोतीलाल बनारसीदास दिल्ली, १९८५।

५. Sanskrit Texts on Phonetics, (reproduced) लोकेशचन्द्र New Delhi, १९८१ ।

६. उपर्युक्तम्

७. मिश्र., युगल किशोर, (ed) ''ज्योत्स्नावृत्ति on the शुक्लयजुः प्रातिशाख्यम्'' बनारस, १९८९।

८. प्रा. माधवदेशपांडे महोदयैः स्वीये ''सवर्णविषयके प्रबन्धे उद्धृता।

९. वेदव्रत The Vyākaraṇamahābhāṣyam with Pradeepa & Udyaota, १०, ११ और १२ (ed) Rohtak, १९६२।

१३ उपर्युक्तम्।

१४. उपर्युक्तम्।

१५. चौबे, बी.बी. ''भाषिकसूत्रम्'' (संपा.) Punjab University Indological Series, 4, VVR9 Hoshiarpur, १९७५।



# रप्रत्याहारविषये शाब्दिकानां मतान्तराणि

सौ.भाग्यलता पाटसकर:

## ईदृशी समस्याऽत्र

१. पाणिनि: धातुपाठे क्लृप् इति धातुर्न परिगणित:।

२. वैदिकभाषायां तु अस्य धातो: मूलरूपात्मकानि, गुणात्मकानि च रूपाणि उपलभ्यन्ते अचीक्लृपत्, चाक्लृप्त, कल्पते, कल्पताम्। तथा च भाषायामपि कल्पनीयम् इत्यादीनि गुणात्मकानि, क्लृप्तीत्यादीनि च मूलरूपात्मकानि रूपाणि प्रयुज्यन्ते।

३. स्वयं पाणिनिना सूत्रयेषु क्लृप् इति धातु: प्रयुक्त: तद्यथा– अ) लुटि च क्लृप:.(१.३.९३) इत्यनेन क्लृप् धातो: लुटि, स्ये परत: (नाम लृङि) सनि परतश्च परस्मैपदं वा विहितम्[१]।

आ) तासि च क्लृप: (७.(वैजल–कारिकाया:) अवदानम्२.६०) इत्यनेन तासि सकारादौ आर्धधातुके च परत: इडागम: प्रतिषिद्ध:।[२] एवं कल्प्ता, कल्प्स्यति, अकल्प्स्यत् चिक्लृप्सति इति रूपाणि प्राप्यन्ते।

इ) ऋदुपधाच्चाक्लृपिचृते: (३.१.११०)। अनेन क्लृप् धातो: ण्यत् प्रत्यर्पित: (क्यप् निषिध्य)। अनेन कल्प्यम् इति रूपं सिध्यति।

अत्रायं प्रश्न: धातुपाठे अवर्तमानस्य अस्य क्लृप् धातो: प्रसङ्गवशात् प्राप्तो गुण: केन सूत्रेण साधनीय:?

## अत्र भट्टोजिमहोदयेन

उरणरपर: (१.१.५१) इत्यस्मिन् सूत्रे 'र' इति प्रत्याहारत्वेन स्वीकृत:। तदर्थं पुन: लण् इति षष्ठे माहेश्वर–सूत्रे अकार: अनुनासिकत्वेन प्रतिज्ञात:। तथा च उ: इति उ: इति सूत्रस्थम् ऋकारस्य षष्ठ्यन्तं रूपम् ''ऋलृवर्णयो: मिथ: सावर्ण्यं वाच्यम्'' इत्याश्रित्य ऋकारलृकारयो: स्वीकृतम्। एवमस्यायासस्य को लाभ इति चेत् तत्रोच्यते।

यथा ऋकारस्य गुणः अर् तथा लृकारस्य गुणः अल् इति। एवं भट्टोजिमतानुसारेण क्लृप् इत्यस्य कल्प् इति गुणात्मकं रूपं सरलतयाऽऽपादनीयम्। अस्य व्याख्यानस्य सूत्रान्तरेण संबन्धः

अष्टाध्याय्यां सूत्रान्तरं वर्तते। कृपो रो लः (८.२.१८) इति। कृप् इति धातुरव-यवषष्ठ्या निर्दिष्टः इति स्पष्टमत्र। तदत्र धातुपाठे कृप दौर्बल्ये चुरादिः, कृपि दौर्बल्ये चुरादिः अपि च कृप् सामर्थ्ये इति भ्वादिः इत्येते कृपू रूपिणो धातवः निर्दिष्टाः। सूत्रानुसारेण तत्रस्थस्य रेफस्य लकारो भवति। कुतोऽत्र रेफस्य प्राप्तिरिति चेत् यदा सार्वधातुकार्धधातुकयोः परतः गुणस्य संभवः तदा गुणस्य प्राप्तिः। तदा कर्प्–इति प्राप्ते सति समनन्तरमेव रो लः इत्यस्य प्रवृत्त्या कल्प् इति रूपं लभ्येत इति दृश्यते सूत्र-कृतोऽभिप्रायः।

अनेन इदमापद्यते यत् उपरिनिर्दिष्टेषु बहुविधेषु रूपेषु कल्प् इति यद्गुणरूपमङ्गं तत् वस्तुतः कृप् इति धातोः अपि च क्लृप् इति यन्मूलरूपात्मकमङ्गं वर्तते तस्यापि सिद्धिः 'कृपो रो लः' इत्यस्मादेव तदर्थं व्याख्यानमेव शरणम्।[3] इति प्रश्नोऽवतिष्ठते[4]। वृत्तिकारेण उरण्रपरः इत्यत्र रेति प्रत्याहारो न निर्दिष्टः[5] तथापि आद्गुणः (६.१.८७) इत्यस्य वृत्तौ तवल्कारः खट्वल्कारः इत्युदाहरणद्वयं दत्त्वा लृकारस्य स्थाने योऽण् तस्य लपरत्वमिष्यते इत्युक्तम्। अणो लपरत्वं तदैव चरितार्थं भवति यदा ऋलृवर्णयोः सावर्ण्यं स्वीक्रियते[6]।

अथ वृत्तिकारः – ''लण्'' (माहेश्वरसूत्रम्) सूत्रे लकारे त्वनुनासिकः प्रतिज्ञायते। तेन ''उरण्रपरः'' इत्यत्र रेति प्रत्याहरग्रहणात् लपरत्वमपि भवति इति विशेषतः प्रतिपादयति, तथापि प्रत्याहाराणां यदा समुच्चयेन सङ्ग्रहं करोति तदायं रप्रत्याहारमुपेक्षते।[7]

अथ स्वीकृते रप्रत्याहारे काश्चन विप्रतिपत्तयः–

(अ) स्वीकृते रप्रत्याहारे 'कृपो रो लः' इति अचरितार्थं भवेत्।

(आ) 'अतो ल्रान्तरस्य' ७.२.२ इत्यत्र तथा च 'रलो व्युपधाद्धलादेः संश्च' १.२.२६ इत्यत्र च रेफ–लकारयोः पृथक्त्वेन निर्देशः नोपपद्यते।

(इ) 'लण्' सूत्रस्थेनाकारेणान्ये प्रत्याहाराः किमर्थं न साधिताः यथा यण् इत्यस्य कृते येति?

(ई) क्लृप् इत्यङ्गमप्राप्तुं 'कृपो रो लः' इत्यत्र महान् प्रयासः आदर्तव्यो भवति। यत्र च ऋकारस्य स्थाने लृकारः इति यदुक्तं तद् व्यवस्थानुसारि न दृश्यते, यतो

हि 'ब्रुवो वचिः[८]', 'अस्तेर्भूः[९]' इत्येवं स्थान्यादेशभावेन धात्वन्तरं प्रतिपादयन् सूत्रकारः अत्रापि किमर्थं तामेव सरणीं नानुसरति इति न ज्ञायते।

३. अन्ततः कृप्–धातुः निर्दिष्टः तथापि कर्प् इत्यात्मकानि रूपाणि भाषायां नोपलभ्यन्ते प्रत्युत कल्प्, क्लृप्, इत्यात्मकानि रूपाणि सन्ति तथापि तादृशो धातुर्नास्ति, क्वेयं विप्रतिपत्तिः?

अतः नागेशभट्टेन 'र' इति प्रत्याहारः न स्वीकृतः। तत्र निर्वाह ईदृशः। लण्सूत्रस्थाकारस्येत्संज्ञाविषये शेखरकारोऽयं प्रतिवदति किञ्चास्येत्संज्ञके बहुषु यण्पटघटित–सूत्रेषु अर्धमात्रालाघवानुरोधेन यप्रत्याहारेणैव व्यवहरेत् । अपि च समस्यान्तरमिदम्–

लण्सूत्रस्थोऽकारः केन सूत्रेण इत्त्वं लोपं चापद्येत ? 'उपदेशेऽजनुनासिक इत्[११]' इत्यनेन इति। अस्मिन् सूत्रे अच्प्रत्याहारः कदा सिध्येत्। इति चेत्–'हलन्त्यम्[१२]' इत्यनेन चकारस्य इत्संज्ञायां प्राप्तायाम् तथा च 'आदिरन्त्येन सहेता[१३]', इत्यस्मिन् प्रवृत्ते सति। एवं 'हलन्त्यम्' इत्यस्य प्रवृत्तिः प्रथममपेक्ष्यते। तस्य प्रवृत्तिकाले तु लण् सूत्रस्थ–स्याकारस्येत्संज्ञा न प्राप्ता येन इत्यपि इतोऽकारस्य समावेशः स्यात् यश्च व्यवस्था–विरोधि। अतः लण्सूत्रे अकारेण अनुनासिकेन न भाव्यम्।

अस्तु तर्हि नागेशादिभिः रप्रत्याहारो नादृतः तथापि ऋकारस्य गुणत्वेनाल् वृद्धित्वेन च आल् साधयितुं तेन भाष्यकाराणां वचनं समाश्रितम् यत्स वक्ति "वस्तुतः रप्रत्याहाराभावेन रपर इत्यस्य स्थाने लपर इति पठनीयम् इति लपरत्वं वक्ष्यामि इति तुल्यास्यसूत्रभाष्याल्लभ्यते।[१४]

एवं यैः रप्रत्याहारत्वेन न स्वीकृतः तेषां कृतेऽपि लृकारस्य गुणवृद्ध्यवाप्त्यर्थं किञ्चिद् युक्त्यन्तरं समालम्बनीयम्। अपि च 'कृपो रो लः' इत्यत्रापि ऋकारावयवस्य लृकार इत्यर्थे स्वीक्रियमाणे[१५] पुनः अकृपेताम्, अकृपन्तेत्यादीनां रूपाणां सिद्धिर्दुर्वारा।

एवं स्वीकृते वा तिरस्कृते वा[१६] रप्रत्याहारे उभयथापि विप्रतिपत्तिः। तथा च 'कृपो रो लः' इत्यस्य विषयविभागोऽपि न स्पष्टः। एवं समस्यामुपस्थाप्य तत्र किञ्चित् सूचयितुमिच्छामि। तदर्थम्–

१. ऋकारलृकारविषये विमर्शः कर्तव्यः
२. क्लृप् कृप्–इत्येतयोः धात्वोः धातुपाठसूत्रपाठ–व्यवहारेषु स्थितिः द्रष्टव्या।
३. लृकारस्य गुणवृद्धी अपरिहार्या वा, इत्येते विषयाः परामर्शयितव्याः।

## १. ऋकारलृकारविषये किञ्चित्

ऋग्वेदप्रातिशाख्यानुसारेण उभावपि जिह्वामूलीयौं[१]। तैत्तिरीयप्रातिशाख्यानुसारेण उभावपि दन्तमूलीयौं[२] अथर्वप्रातिशाख्यपरंपरायामेतौ जिह्वामूलीयौ परिगणितौ[३] वाजसनेयी प्रातिशाख्यानुसारेण तौ भिन्नस्थानीयौ ऋकारो जिह्वामूलीयः लृकारो दन्त्य इति च[४]। एतस्मात् स्पष्टमिदं यत् कदाचित् ऋकारलृकारौ समानस्थानीयत्वात् (समानप्रयत्नौ तौ वर्तेते एव) सवर्णौ स्तः यदधिकृत्य कात्यायनेन ऋलृवर्णयोः सवर्णविधिरित्युक्तम्। पाणिनेस्तूभौ भिन्नस्थानीयावित्यभिमतम्। यतः माहेश्वरत्सूत्रे ऋलृ स्वतन्त्रत्वेन परिगणितौ अपि च हयवरट्। लण्। इत्यत्रापि स एव क्रमः आदृतः। नियमतः तौ विविक्ततरौ इति पाणिनिना ज्ञातपूर्वम् एव। तथा च लृकारः सन्दिग्धोच्चारणः तथा ऋकारसदृशोच्चारणः इति अनुभूतमपि। अनेनाभिप्रायेण तेन ''ऋदुपधाच्चाक्लृपिश्रुतेः'' ३.३.११० इत्यत्र सादृश्यार्थकः नञ् कल्पः कृते प्रयुक्तः[५]। ऋदुपधसदृशः क्लृप्धातुः (यथा अनिक्षुः शर इति।) तत्रापि सदृशतमः कृप् धातुः यः कृपू इति उदितः धातुपाठे परिगणितः। अत एव रुदित्वात् विकल्पेन प्राप्तः इट्[६] तासि च क्लृपः इत्यनेन निपिद्धः।

अयम् लृकारः ऋकाराद् भिन्नः सन्नपि समानप्रवृत्तिकः इति उदाहरणान्तरादपि स्फुटं भवति। प्राकृतभाषायां यथा ऋकार इकारे परिणमति तथा लृकारोऽपि इल्–(?)–कारे परिणमते। यथा उत्तरस्मिन् काले तौ समानप्रवृत्तिकौ एवं ततः प्रागपि तौ समान–धर्माणौ इति अनुमितं भाषाशास्त्रविद्भिः[७]। अश्रुतिधराभ्यां रेफलकाराभ्यामुभौ अपि तौ संश्लिष्टौ[८]। अतः कदाचित् सधर्माणौ कदाचिच्च विधर्माणौ दृश्येते। तयोः ऋकारः प्रचुरप्रयोगः लृकारस्तु कलृपिस्थ एवाल्पिष्ठप्रयोगः। सोऽपि वैदिकभाषायां केषुचिदेव पदेषु वर्तमानोऽपि तन्माध्यमेन प्रभूतप्रसारः आसीत्।

## धातुपाठे सूत्रपाठे च लृकारः

सत्येवं धातुपाठे परिगणिते क्लृपि लृकारो भाषाप्रयोगविषय इति आपद्येत। अपि च ते एव धातुपाठे निर्दिष्टाः येषां स्वरूपं निःसन्दिग्धम्, अर्थतः पूर्णम्, अपि च रूपान्तराणि निर्मातुं सुक्षमम्।[९] क्लृपो न तादृशः लृकारस्य सन्धिग्धरूपत्वात् नैव प्रयोगाक्षमत्वात्। कल्प् इति रूपं तु धातुपाठे परिगणितुं न शक्यते यतो हि धातुपाठे मूलरूपाणि एव (गुणवृद्धिविहीनानि) एव परिगणितानि इति दृश्यते। तद् यथा[१०] चिनोति, चेष्यति, चयनम्, अचैषीत्, चाययते इत्यत्र चि इतिरूपं धातुत्वेन स्वीकृतम्। एवमेव

कृशति, कृष्ट, चकर्ष, कर्षण कार्षि, कार्ष्मन् इत्येतेभ्य: पदेभ्य: कृश् इति धातुरूपं निकृत्तम्। एवं क्लृप् इति धातुत्वेन स्वीकर्तुं न शक्यते कल्प् इति तु व्यवस्थानुसारि नास्ति। अत एव सादृश्यबलात् कृप् इति धातुत्वेन स्वीकृत:० कृपो रो ल: इत्यनेन कल्प् इति रूपात्मकानां पदानां निर्वाह: कृत:। अत: "ऋ इत्यस्य लृ स्यात्" इत्यर्थस्य प्रयोजनं न स्फुटीभवति तदत्र विदुषां पुरस्तादुपस्थापित:। यतो हि संहितायां ब्राह्मणेषु च कृप्–युक्तानि रूपाण्युपलभ्यन्ते कानिचन तेषु यथा– कृपयसे कृपयध्वे, कृपयमाण, अकृपेताम्, चकृपे इति। ऋकारावयवस्य लृकारावयव: इत्यर्थे स्वीकृते एतेषां रूपाणां निर्वाह: कठिनतरो भवेत्। क्लृप् इति तु य: पुन: निर्देश: सूत्रेषु तेन कृत: स: सौत्रत्वेन मन्तव्य:। तस्यापि गुणरूपं कल्प् इत्येव प्रसङ्गवशादापतितम् इति स्वीकरणे न कापि हानिर्दृश्यते।

## अधुना लृ इत्यस्य गुणवृद्धिविषये किञ्चित्

उरणरप: इत्यनेन ऋइत्यस्य अर्, आर्, इर्, उर् इत्येते आदेशा: पाणिनिना संसूचिता: कुत्रचित् सर्वेऽपि प्रयुक्ता:। तत्रैव लृ इत्यस्य किमर्थं न पठिता इति चेत्? तदित्थम् लृविषये एतादृशमादेशवैविध्यं नास्ति। भाषायामेव नावशिष्टोऽयं कुतोऽस्य रूपविविधता। तथा च अयम् लृकार: न कदापि पदान्तत्वं भजते इति प्रातिशाख्यै: निरीक्षितम्[१] न वा तेन आरभमाण: अकृत्रिम: कश्चन शब्द:। सर्वथैव केवलमुप–धास्थानभागयम्। यदा उपधागुण: अपेक्षित: तदा कृप्सादृश्यात् कर्प् इति तस्य गुण: कर्तव्य:। ततोऽनन्तरं रेफस्य लकार: कर्तव्य: एवम् लृकारस्य अल् इति रूपं परम्परया उपलभेत न साक्षात्। धातुरूपे वृद्धेरवसरो नास्ति।

अथ कृत्रिमे रूपे पाणिनेरभिप्रेतेऽनभिप्रेते वा लृ इत्यस्य आद्गुण: इत्यनेन प्राप्त: गुण: कथं समर्थनीय: इति द्रष्टव्यम्– तव + लृकार: इत्यत्र अकार–लृकारयो: अकार एव गुणरूप एकादेश: लभ्यते, तथापि अर् सादृश्यात्, स्थानत: आन्तरतम्यबलात् स लपरो भवेदिति कृत्वा कदाचित् पाणिनिना नोक्त: स्यात्।

अल्पप्रयोगविषयस्य अपि च भाषात: निष्कासितप्रायस्य लृकारस्य माहेश्वरसूत्रे परिगणने किं वा प्रयोजनं मुनेरिति विमृशाम:। संस्कृते लकार: अन्त:स्थत्वेन परिगणित:। अच्सदृश: सोऽपि अनुनासिकाननुनासिकभेदेन द्विधा। एवं तस्य स्वरीभावाक्षमत्वम् अर्धस्वरत्वं तु स्फुटमेव। अत एव संप्रसारणधर्माऽयं मूलत:। अपठिते लृकारे तस्य

संप्रसारणक्षमत्वमपि अनुक्तं स्यात्। तत्परिहर्तुम् लृकारस्य पाठोऽनिवार्य इति मतः स्यात् पाणिनिना। तेन च "इग्यणः संप्रसारणम्"। इति सूत्रमपि सङ्गच्छते। ततश्च लृ इति स्वरस्तेनानुबन्धत्वेन सप्रयोजनं स्वीकृतः। अपठिते लृकारे तस्यानच्त्वात् सूत्रपाठे "पुषादिद्युताद्यलृदितः परस्मैपदेषु" ३.१.५५ इत्यत्र यणभावः कथं सिध्येत्[२८]।

तदित्थं संगृह्यते

१. पाणिनेः पुरस्तात् कृप्–कलृप्–कल्प् इत्यङ्गात्मकानि छन्दसि भाषायां च प्राप्तप्रयोगाणि रूपाणि आसन्।

२. तत्र च लृ इति स्वरः तदानीन्तनायां भाषायां लुप्तप्रायः। यत्र कुत्रचित् प्रयुक्तः तत्र सन्दिग्धोच्चारणः एवं मुमूर्षुरिव आसीत्।

३. अयं सन्दिग्धस्वभावः लकारः ऋकारेण सादृश्यं वहन्नासीत्

४. अतः क्लृप् धातुः पाणिनिना कृप इति स्वीकृतः केवलं प्रसङ्गापेक्षः अन्यथा मूलतः सौत्रोऽयं धातुः।

५. एवं क्लृपं कृपं मत्वा गुणः प्राप्तव्यः "कृपो रो लः" इत्यनेन तस्य लत्वं साधनीयम्।

६. "आद् गुणः," "उपसर्गादृति धातौ" इत्यादिभिः सूत्रैः प्राप्यमाणे गुणवृद्धी पाणिनिना नानुमिते लृकारस्य भाषातः नष्टप्रायत्वात्।

७. तथापि प्राप्तव्ये चेत् अर् आर् इति सादृश्यात् स्थानतः आन्तरतम्यात् अल् आल् इति प्राप्तुं शक्येते इति कृत्वा उपेक्षिते मुनिना।

८. ऋलृवर्णयोः सावर्ण्यम् नाभिप्रेतं तस्य तथापि कुत्रचित् इति तु स्वीकृतम्।

९. "कृपो रो लः" इत्यत्र ऋकारस्य लकारः इत्येतादृशस्य अव्याख्यानस्य आवश्यकता नास्ति।

१०. र्प्रत्याहारस्यापिं आवश्यकता नास्ति।

टिप्पण्यः

१. यदा परस्मैपदं तदा कल्पता, कल्स्यति, अकल्प्स्यत्, चिक्लृप्सति इति रूपाणि। आत्मनेपदे सति कल्पिता, कल्पिष्यते, अकल्पिष्यत चिकल्पिषते इति रूपाणि।

२. अस्मिन् सूत्रे गमेरिट् परस्मैपदेषु ७.२.५८ इत्यस्मात् परस्मैपदेषु इत्यनुवर्तते।

न वृदभ्यश्चतुर्भ्यः इत्यस्मात् 'न' इति अनुवर्तते। सेऽसिचि कृतचृतच्छृदतृदनृतः इत्यस्मान् से इति अनुवर्तते। तदयं सूत्रार्थः कृप उत्तरस्य तासेः सकारादेश्चार्धधातुकस्य परस्मैपदेषु इडागमो न भवति

३. यद्यपि वृत्तिकारः कृपेः धातोः रेफस्य लकारादेशो भवतीति विवृणोति सूत्रं प्रथमतः तथापि अनन्तरं रेति श्रुतिसामान्यमुपादीयते इत्यपि वक्ति। र इति केवलः वर्णः अपि च ऋकारेऽपि कश्चन रेफांशो वर्तते। तदुभयं मनसि कृत्वा श्रुतिसामान्यमिति शब्दः प्रयुक्तः। एवम् ऋकारस्थो भवतु वा केवलो भवतु वा रेफस्य लादेश इत सूत्रार्थ उपपद्यते। कृप् इत्यस्य गुणे कृते वृद्धौ वा कृतायाम् 'उरणरपरः' इत्यनेन रेफः प्राप्नोति तस्य लत्वं भवति इति सूत्रस्य प्रथमोऽर्थः। यदा तु गुणाभावे वृद्ध्यभावे ऋइत्येव वर्णः तिष्ठति तदा तत्रस्थस्यापि रेफस्य लः। अत्रापि श्रुतिसामान्यमाश्रित्य वृत्तिकारः सूचयति यत्समग्रस्य ऋकारस्य लृकारो भवति। अनेन क्लृप् इति रूपस्य निर्वाहः कृतस्तेन। तदयं वक्ति अनेन लुटि च क्लृपः इति निर्देशा उपपद्यन्ते।

४. परम्परायाः कृते अयं प्रश्नः नास्ति यतः कृपो रो लः इति तथा च रप्रत्याहारः इति द्वौ स्वतन्त्रौ विषयौ। तन्मतानुसारेण कृप् इति एक एव धातु, तस्य कल्प् क्लृप् इति अङ्गरूपाणि, तदर्थं कृपो रो लः। तथा च आद् गुणः, वृद्धिरेचि, उपसर्गादृति धातौ इत्येतैः सूत्रैः प्राप्यमाणे गुणवृद्धी निर्वोढुं र इति प्रत्याहारोऽपेक्ष्यते।

५. उः स्थाने अण् प्रसज्यमान एव रपरो वेदतिव्यः। कर्ता, हर्ता, गिरति, द्वैमातुरः। अत्र लपराणि उदाहरणानि न सन्ति इति विशेषतो ध्येयम्।

६. स्वीकृते एव सावर्ण्ये उः ऋकारलृकारयाः कृते भवति। ततश्च लपरत्वस्य आवश्यकता समुदेति। तच्चान्द्रे सूत्रितं ऋकोऽणोरलौ इति।

७. एकस्माङ्ञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमा स्युः।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः।

८. ब्रुवो वचिः २.४.५३ ब्रुवो वचिरादेशो भवत्यार्धधातुक विषये।

९. अस्तेर्भूः २.४.५३ अस्तेर्भूरित्ययमादेशो भवति आर्धधातुके। इत्यादि

१०. "परे त्वस्यानुनासिकत्वे अतो लान्तस्य इति सूत्रे पाणिनिर्लकारं नोच्चारयेत् प्रत्याहारेणैव निर्वाहात्। किञ्च अस्येत्संज्ञकत्वे बहुषु यण्पदघटितसूत्रेष्वर्द्ध-मात्रालाघवानुरोधेन यत्प्रत्याहारेणैव व्यवहरेत्।। पृ.२८

महामहोपाध्यायनागेशभट्टविरचित: लघुशब्देन्दुशेखर: व्याख्याकार: आचार्य–ब्रह्मदत्त द्विवेदी, सुशील प्रकाशन, मुरारका संस्कृत कॉलेज चौक, पटना।

११. १/३/२ उपदेशेऽनुनासिकोऽजित्संज्ञ: स्यात्।

१२. १/३/३ उपदेशेऽन्त्यं हल् इत् स्यात्।

१३. १/१/७१ अन्त्येनेता सहित: आदि: मध्यगानां स्वस्य च संज्ञा स्यात्।

१४. "यदि तर्हि ऋकारग्रहणेन लृकारग्रहणं संनिहितं भवति, उरण्रपर: लृकारस्यापि लपरत्वं प्राप्नोति। लृकारस्य लपरत्वं वक्ष्यामि। तच्चावशं वक्तव्यम्। असत्यां सवर्णसंज्ञायां विध्यर्थम्। तदेव सत्यां रफबाधनार्थम् भविष्यति।" तुल्यास्येति सूत्रभाष्ये।

१५. "र" ल इति श्रुतिसामान्यत्वेन स्वीकृत्य सवैरयमर्थो ज्ञात:।

१६. रप्रत्याहरं स्वीकुर्वाण: काशिकाकार: (तथापि न परिगणित:), तस्य न्यास–पदमञ्जरीकारौ व्याख्यातारौ, भट्टोजिदीक्षित: तस्य बालमनोरमातत्त्वबोधिनीकारौ व्याख्याकारौ, शब्दकौस्तुभकार:, कैयट: च रप्रत्याहारं तिरस्कुर्वाणा: पतञ्जलि:, नागेश:, वैद्यनाथपायगुण्डे च ऋलृवर्णयो: सावर्ण्यम् कात्यायनात् प्रभृति वैद्यनाथपायगुण्डे यावत् सर्वैर्मतम्। तथापि ऋलृवर्णयो: सावर्ण्यं सूत्रकारस्य तु नाभिमतमिति कैयट:। कृपो रो ल:। ऋकारस्य लृकार:, रेफस्य च लकार इत्यर्थ: सर्वैरादृत:।

१७. ऋग्वेदप्रातिशाख्यम् १.४१ ऋकारलकारावथ षष्ठ उष्मा जिह्वामूलीया: प्रथमश्च वर्ग:।

१८. तैत्तिरीयप्रातिशाख्यम् २.१८ उपसंहततरे च जिह्वाग्रमृकार–ऋकार–लृकारेषु वर्स्वेषु उपसंहरति।

१९. अथर्वप्रातिशाख्ये साक्षान्निर्देशो न लब्ध: तथापि तस्य व्याख्याकारो वक्ति – जिह्वामूलीयम् ऋवर्णस्य कवर्गस्य च भाष्यते यच्चैव जिह्वामूलीय: लृवर्णश्चेत् स्मृत:।

२०. ऋ लौ जिह्वामूले। वाजसनेयीप्रातिशाख्ये १.६५, लृलसिता दन्ते। तत्रैव १.६९।

२१. तत्सादृश्यं तदभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्था: षट् प्रकीर्तिता:।।

२२. ७.२.४४ स्वरतिसूतिसूयतिधूञूदितो वा। इत्यत्र ऊदितां कृते इट् विकल्पितः। कृपू च ऊदित परिगणितः।

२३. द्रष्टव्यम्– "युभातः संस्कृतं प्रति" लेखकः– डॉ गजानन बालकृष्ण पलसुले प्रकाशन– राष्ट्रिय संस्कृत संस्थान १९७९ पृ. २२, ४६।

२४. बाजसनेयी प्रातिशाख्यम् ऋलृवर्णे रेफलकारौ संश्लिष्टावश्रुतिधरावेकवर्णौ।

२५. तदर्थम् द्रष्टव्यम्– The Sanskrit Dhatupāṭhas : A Critical Study' लेखकः डॉ.ग.बा. पलसुले University of Poona. 1961 P. 163.

२६. तत्रैव पृ. १६८।

२७. वाजसनेयीप्रातिशाख्यम् १.८७ स्वरांश्च लृकारवर्जम्। अस्मिन् सूत्रे पूर्वसूत्रात् पदान्तीयः इति अनुवर्तते।

अथर्वप्रातिशाख्यम् १.५ अनृकारः स्वरः पद्यः।

२८. ऋलृक्। माहेश्वरसूत्रम् २ इत्यत्र लृकारग्रहणस्य प्रयोजनम् काशिकाकारेण इत्थं प्रतिपादितम्– लत्वविधानाद् यानि पराण्यच्–कार्याणि तानि लृकारे यथा स्युः। कानि पुनस्तानि "प्लुतः स्वरितो द्विर्वचनम्" इति।



# पाणिनीयव्याकरणे धातुभ्यो विहितानां प्रत्ययानां तदाश्रितानामङ्गानां च विज्ञानम्

*दीक्षितपुष्पा*

अष्टाध्याय्याः तृतीय–चतुर्थ–पञ्चमाध्यायाः प्रत्ययाध्यायाः सन्ति। एषु त्रिष्वेवाध्यायेषु प्रत्ययानां विधानमस्ति। ते च प्रत्यया द्विविधाः। धातुभ्यो विहिताः, प्रातिपदिकेभ्यो विहिताश्च। प्रातिपदिकेभ्यो विहिताः प्रत्ययास्त्रिविधाः। स्त्रीप्रत्ययाः, सुप्प्रत्ययाः, तद्धितप्रत्ययाश्च। एते सर्वे प्रत्यया अष्टाध्याय्याश्चतुर्थे पञ्चमे चाध्याये वर्तन्ते।

धातुभ्यो विहिताः प्रत्ययाः पुनश्चतुर्धा। तिङ्प्रत्ययाः, कृत्प्रत्ययाः, विकरण–प्रत्ययाः, धातुप्रत्ययाश्च। एते सर्वे प्रत्यया अष्टाध्याय्यास्तृतीयाध्याये वर्तन्ते।

अत्र तृतीयाध्यायस्य प्रत्यया एव सम्यग् विभज्य व्याख्यायन्ते।

धातुभ्यो विहिताः तृतीयाध्यायस्य प्रत्ययाः तिङ्प्रत्ययाः कृत्प्रत्ययाः विकरण–प्रत्ययाः धातुप्रत्ययाश्च सन्ति।

अष्टाध्याय्यास्तृतीयाध्याये द्वौ धात्वधिकारौ स्तः। तत्रा प्रथमः 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' (पा. ३.१.२२) इत्यस्मात्सूत्रादारभ्य, (पा. ३.१.९०), इति सूत्रं यावत् प्रवर्तते। अस्मिन् धात्वधिकारे केवलं धातुप्रत्यया, विकरणप्रत्ययाश्च सन्ति।

द्वितीयो धात्वधिकारः 'धातोः' (पा. ३.१.९०) इत्यस्मात्सूत्रादारभ्य, (पा. ३.४.११७), इति सूत्रं यावत् प्रवर्तते। अस्मिन्नधिकारे तिङ्प्रत्ययाः कृत्प्रत्ययाश्च सन्ति। तत्रायं विवेकः –

धातुप्रत्ययाः – अष्टाध्याय्यां 'प्रत्ययः' (पा.३.१.१) इत्यस्मात्सूत्रादारभ्य, (पा.३.१.३२), इति सूत्रं यावद् धातुप्रत्ययाः सन्ति।

इमे द्विविधाः। आर्धधातुकाः / सार्वधातुकार्धधातुकभ्यां भिन्नाः।

विकरणप्रत्ययाः – अष्टाध्याय्यां 'स्यतासी लृलुटोः' (पा. ३.१.३३) इत्यस्मात्सूत्रादारभ्य, (पा. ३.१.९०), इति सूत्रं यावद् विकरणप्रत्ययाः सन्ति।

इमे द्विविधाः। सार्वधातुकसंज्ञका, आर्धधातुकसंज्ञकाश्च।

कृत्प्रत्ययाः – अष्टाध्याय्या द्वितीयो धात्वधिकारः 'धातोः' (पा. ३.१.९०) इत्यस्मात्सूत्रादारभ्य, (पा. ३.४.११७), इति सूत्रं यावत् प्रवर्तते। अस्मिन् द्वितीये धात्वधिकारे ये लकारप्रत्यया, लस्थानीयास्तिङ्प्रत्ययाश्च सन्ति, तान् प्रत्ययान् विहाय येऽवशिष्टाः प्रत्ययाः सन्ति, तेषामेव प्रत्ययानां 'कृदतिङ्' इत्यनेन सूत्रेण कृत् संज्ञा भवति। इमेऽपि द्विविधाः। सार्वधातुकसंज्ञका, आर्ध धातुकसंज्ञकाश्च।

'धातोः' (पा.३.१.९१) इत्यस्मात्सूत्रादारभ्य, (पा.३.४.७६), इति सूत्रं यावत् कृत्प्रत्यया लकारप्रत्ययाश्च सन्ति।

अत्रायं विवेकः कर्तव्यः – 'धातोः' (पा.३.१.९१) इत्यस्मात्सूत्रादारभ्य, (पा.३.४.७६), इति सूत्रं यावत् कृत्प्रत्यया लकारप्रत्ययाश्च वर्तन्ते। तत्र लकारप्रत्ययानां स्थाने तिङादेशा भवन्ति। अतस्तान् लकारप्रत्ययान् वर्जयित्वा ये प्रत्यया अत्रावशिष्यन्ते, तेषामेव 'कृदतिङ्' (पा.३.१.९३) इत्यनेन सूत्रेण कृत्संज्ञा भवति। कृत्प्रत्ययेषु यत्, ण्यत्, क्यप्, तव्यत्, तव्य, अनीयर्, इत्येतेषां प्रत्ययानां कृत्यसंज्ञापि भवति।

तिङ्प्रत्ययाः – अष्टाध्याय्यास्तृतीयाध्यायस्य चतुर्थपादान्ते 'लस्य' (पा.३.४.७७) इति सूत्रादारभ्य (पा. ३.४.११७) इति सूत्रं यावदापादान्तं लाधिकारो वर्तते। अत्र ये सन्ति प्रत्ययास्ते तु लकाराणां स्थाने भवन्ति। यद्यपि लकारा दश सन्ति। किन्तु लिङो द्वैविध्येन, लेटश्च द्वैविध्येन ते द्वादशविधा भवन्ति। अस्मिन्नधिकारे प्रथमतः दशानां लकाराणां स्थानेषु 'लस्य'(पा.३.४.७७) इत्युक्त्वा 'तिप्–तस्–झि–सिप्–थस्–थ–मिब्वस्–मस्–तातां–झ–थासा–थां–ध्वमिड्–वहि–महिङ्' (पा.३.४.७८) इत्येते अष्टादशतिङ्प्रत्ययाः विधीयन्ते –

### परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | तिप् | तस् | झि |
| म. पु. | सिप् | थस् | थ |
| उ. पु. | मिप् | वस् | मस् |

आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | त | आताम् | झ |
| म. पु. | थास् | आथाम् | ध्वम् |
| उ. पु. | इड् | वहि | महिङ् |

एतेषां लादेशानां तिङ्प्रत्ययानां स्थाने पुनर्ये आदेशा भवन्ति, तेऽप्यस्मिन्नेव लाधिकारे वर्तन्ते।

यथा — थासः से, (पा.३.४.८०) एरुः, (पा.३.४.८६) आमेतः, (पा.३.४.९०) मेर्निः, (पा.३.४.८९) तस्थस्थमिपां तान्तन्तामः, (पा.३.४.१०१) इत्यादयः। एते तिङादेशा अपि तिङ्पदवाच्या एव। अपि च सप्तमाध्यायस्य प्रथमे पादेऽपि तिङादेशाः सन्ति। परन्तु तेऽङ्गमुद्दिश्य विहिताः। इत्थञ्चाष्टादशतिङ्प्रत्ययाः यदा अङ्गमनुद्दिश्य आदेशं प्राप्नुवन्ति तदा लाधिकारस्थैः सूत्रैरादेशा भवन्ति। यदा तिङ्प्रत्यया अङ्गमुद्दिश्य आदेशं प्राप्नुवन्ति तदा सप्तमाध्यायस्य प्रथमपादस्थैः सूत्रैरादेशा भवन्ति। इत्थञ्चाष्टादश–तिङ्प्रत्यया एव नानालकारेषु नानाकारा भवन्ति।

*इमेऽपि द्विविधाः। सार्वधातुकसंज्ञका, आर्धधातुकसंज्ञकाश्च।*

यद्यपि लिङो द्विविधत्वाल्लेटश्च द्विविधत्वाल्लकारा द्वादश, तेषां सर्वेषां स्थानेष्वेवैत अष्टादश तिङ्प्रत्यया भवन्ति, अतः 'तिङ्शित्सार्व धातुकम्'(पा.३.४.११३) इत्यनेन सूत्रेण सर्वेषां लादेशानां तिङ्प्रत्ययानां सार्वधातुकसंज्ञैव भवितुमुचिता; तथापि लट्, लोट्, लङ्, विधिलिङ्, इत्येतेषां चतूर्णां लकाराणामादेशभूतास्तिङ्प्रत्यया एव सार्वधातुकत्वेनावसीयन्त इति वक्ष्यते। लेटः स्थाने यदा 'लेटोऽडाटौ' (पा.३.४.९४) इत्यनेन सूत्रेणाडाटौ भवतस्तदापि लेडादेशास्तिङ्प्रत्यया सार्वधातुका एव। इत्थञ्च पञ्चसु लकारेष्वेव ते तिङ्प्रत्ययाः सार्वधातुका भवन्ति। अवशिष्टेषु सप्तसु लकारेषु तेषामार्धधातुकत्वमेवेत्यग्रे वक्ष्यते। इदानीं धातुभ्यो विहिताः सर्वे प्रत्ययाः पृथक्कृत्वा उच्यन्ते, येन तेषां सार्वधातुकत्वमार्धधातुकत्वं वावगम्येत।

# सार्वधातुकखण्डम्

## सार्वधातुकतिङ्प्रत्यया:

यदाप्यङ्गमदन्तं भवति, तदा लट्–लोट्–लङ्–विधिलिङ्–लकाराणां कृते इम प्रत्यया: भवन्ति।

(भ्वादि–दिवादि–तुदादि–चुरादिगणस्था धातवो यदा स्वस्वविकरणै: संयुज्यन्ते, तदाङ्ग-मदन्तम् एव भवतीति तेषां लट्–लोट्–लङ्–विधिलिङ्–लकाराणां रूपाणि कर्तुमिमे प्रत्यया: संयोज्या ) अत एते प्रथमगणसमूहस्य प्रत्यया: सन्ति

### लट् लकारस्य प्रत्यया:

#### परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | ति | त: | अन्ति |
| म. पु. | सि | थ: | थ |
| उ. पु. | मि | व: | म: |

#### आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | ते | इते | अन्ते |
| म. पु. | से | इथे | ध्वे |
| उ. पु. | ए | वहे | महे |

### लोट् लकारस्य प्रत्यया:

#### परस्मैपद

| | | | |
|---|---|---|---|
| प्र. पु. | तु, तात् | ताम् | अन्तु |
| म. पु. | ० तात् | तम् | त |
| उ. पु. | आनि | आव | आम |

#### आत्मनेपद

| | | | |
|---|---|---|---|
| प्र. पु. | ताम् | इताम् | अन्ताम् |
| म. पु. | स्व | इथाम् | ध्वम् |
| उ. पु. | ऐ | आवहै | आमहै |

लङ् लकारस्य प्रत्यया:

परस्मैपद

| | | | |
|---|---|---|---|
| प्र. पु. | त् | ताम् | अन् |
| म. पु. | स् (:) | तम् | त |
| उ. पु. | अम् | व | म |

आत्मनेपद

| | | | |
|---|---|---|---|
| प्र. पु. | त | इताम् | अन्त |
| म. पु. | था: | इथाम् | ध्वम् |
| उ. पु. | इ | वहि | महि |

विधिलिङ् लकारस्य प्रत्यया:

परस्मैपद

| | | | |
|---|---|---|---|
| प्र.पु. | इत् | इताम् | इयु: |
| म.पु. | इ: | इतम् | इत |
| उ.पु. | इयम् | इव | इम |

आत्मनेपद

| | | | |
|---|---|---|---|
| प्र.पु. | ईत | ईयाताम् | ईरन् |
| म.पु. | ईथा: | ईयाथाम् | ईध्वम् |
| उ.पु. | ईय | ईवहि | ईमहि |

यदाप्यङ्गमनदन्तं भवति, तदा लट्–लोट्–लङ्–विधिलिङ्–लकाराणां कृते इमे प्रत्यया: भवन्ति

(अदादि–जुहोत्यादि–स्वादि–रुधादि–तनादि–क्र्यादि–गणस्था धातवो यदा स्वस्वविकरणै: संयुज्यन्ते, तदाङ्गमनदन्त एव भवतीति तेषां लट्–लोट्–लङ्–विधिलिङ्–लकाराणां रूपाणि कर्तुमिमे प्रत्यया: संयोज्या:)

अत एते द्वितीयगण समूहस्य प्रत्यया: सन्ति

## लट् लकारस्य प्रत्यया:

### परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | *ति* | त: | अन्ति |
| म. पु. | *सि* | थ: | थ |
| उ. पु. | *मि* | व: | म: |

### आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | ते | आते | अते |
| म. पु. | से | आथे | ध्वे |
| उ. पु. | ए | वहे | महे |

## लोट् लकारस्य प्रत्यया:

### परस्मैपद

| | | | |
|---|---|---|---|
| प्र. पु. | तु / तात् | ताम् | अन्तु |
| म. पु. | हि / तात् | तम् | त |
| उ. पु | *आनि* | *आव* | *आम* |

### आत्मनेपद

| | | | |
|---|---|---|---|
| प्र.पु. | ताम् | आताम् | अताम् |
| म.पु. | स्व | आथाम् | ध्वम् |
| उ.पु. | *ऐ* | *आवहै* | *आमहै* |

## लङ् लकार

### परस्मैपद

| | | | |
|---|---|---|---|
| प्र. पु. | *त* | ताम् | अन् |
| म. पु. | *स (:)* | तम् | त |
| उ. पु. | *अम्* | व | म |

आत्मनेपद

| | | | |
|---|---|---|---|
| प्र. पु. | त | आताम् | अत |
| म. पु. | थाः | आथाम् | ध्वम् |
| उ. पु. | इ | वहि | महि |

## विधिलिङ् लकारस्य प्रत्ययाः

परस्मैपद

| | | | |
|---|---|---|---|
| प्र. पु. | यात् | याताम् | युः |
| म. पु. | याः | यातम् | यात |
| उ. पु. | याम् | याव | याम |

आत्मनेपद

| | | | |
|---|---|---|---|
| प्र. पु. | ईत | ईयाताम् | ईरन् |
| म. पु. | ईथाः | ईयाथाम् | ईध्वम् |
| उ. पु. | ईय | ईवहि | ईमहि |

एतेषु सार्वधातुकप्रत्ययेषु ये प्रत्ययाः स्थूलाक्षराः वक्राश्च दृश्यन्ते, ते पित्सार्वधातुकाः। ये च सामान्याक्षराः समाश्च दृश्यन्ते, तेऽपित्सार्वधातुकाः। एतेऽपित्सार्वधातुकप्रत्ययाः 'सार्वधातुकमपित्' (पा.१.२.४) इत्यनेन सूत्रेण ङिद्वद् भवन्ति।

## लेट्लकारस्य प्रत्ययाः

लट्–लकारस्य ये प्रत्ययाः सन्ति, तत्र लेटोऽडाटौ (पा.३.४.९४) इत्यनेन सूत्रेण अडागमः, आडागमो वा क्रियताम्। इतश्च लोपः परस्मैपदेषु (पा.३.४.९७) इत्यनेन सूत्रेण परस्मैपदे इकारलोपः क्रियताम्। आत्मनेपदे आताम्, आथाम्, इत्यनयोः आकारस्य स्थाने 'आत ऐ' (पा.३.४.९५) इत्यनेन सूत्रेण ऐकारः क्रियताम्। आताम्, आथाम्, इति प्रत्ययद्वयं वर्जयित्वा अन्येषां प्रत्ययानामेकारस्य स्थाने, वैतोऽन्यत्र (पा.३.४.९६) इत्यनेन सूत्रेण ऐकारादेशो वा क्रियताम्।

अडागमे कृते लट्–लकारस्य सार्वधातुक प्रत्ययाः

परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | अति | अतः | अन्ति |
| | अत्/अद् | — | अन् |
| म. पु. | असि | अथः | अथ |
| | अः | — | — |
| उ. पु. | अमि | अवः | अमः |
| | अम् | अव | अम |

आत्मनेपद

| एकवचन | द्विवचन | बहुवचन |
|---|---|---|
| अते | ऐते | अन्ते |
| अतै | — | अन्तै |
| असे | ऐथे | अध्वे |
| असै | — | अध्वै |
| ए | अवहे | अमहे |
| ऐ | अवहै | अमहै |

आडागमे कृते लेट्—लकारस्य सार्वधातुक प्रत्ययाः

परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | आति | आतः | आन्ति |
| | आत्/आद् | — | आन् |
| म. पु. | आसि | आथः | आथ |
| | आः | — | — |
| उ. पु. | आमि | आवः | आमः |
| | आम् | आव | आम |

## आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | आते | ऐते | आन्ते |
| | आतै | — | आन्तै |
| म. पु. | आसे | ऐथे | आध्वे |
| | आसै | — | आध्वै |
| उ. पु. | ए | आवहे | आमहे |
| | ऐ | आवहै | आमहै |

एतेषाम् सर्वेषां प्रत्ययानामादौ यदि 'सिब्बहुलं लेटि' इत्यनेन सूत्रेण सिप् योज्यते, तदा इमे प्रत्यया आर्धधातुका भवन्ति, यथा अग्रे आर्वधातुकखण्डे दर्शयिष्यते।

एते प्रत्यया: स्थूलाक्षरा: वक्राश्च दृश्यन्ते। आडुत्तमस्य पिच्च, (पा ३.४.९२) इत्यस्मात् सूत्रात् पित्पदस्यानुवर्तनादेते लेट्लकारस्येमे सर्व एव प्रत्यया: पित्सार्व–धातुका:।

## सार्वधातुकृत्प्रत्यया:

'तिङ्शित्सार्वधातुकम्'(पा.३.४.११३) इत्यनेन सूत्रेण शतृ, शानच्, शानन्, चानश्, खश्, श, एश्, शध्यै, शध्यैन् एते नव प्रत्यया: कृत्सु सार्वधातुका:।

## सार्वधातुकविकरणप्रत्यया:

'तिङ्शित्सार्वधातुकम्', (पा.३.४.११३) इत्यनेन सूत्रेण *शप्*, श्यन्, श्नु, श्ना, श्नम्, श्ना, शायच्, शानच्, एतेऽष्टविकरणप्रत्यया शित्वात् सार्वधातुका:। अत्र शप्प्रत्यय: पित्सार्वधातुक:, अन्ये चापित्सार्वधातुका:।

## किमर्थमियं सार्वधातुकसंज्ञा ?

अस्माभिर्ज्ञातं यल्लट्, लोट्, लङ्, विधिलिङ्, सार्वधातुक–लेट्–लकाराणां तिङ्प्रत्यया: सार्वधातुका: सन्ति। शतृ, शानच्, शानन्, चानश्, खश्, श, एश्, शध्यै,

शध्यँन्, एते कृत्प्रत्यया: सार्वधातुका: सन्ति। एतद्भिन्ना धातुभ्यो विहिता: सर्वे प्रत्यया आर्धधातुका एव।

यदा धातुभ्य: सार्वधातुक–तिङ्प्रत्यया:, सार्वधातुक–कृत्प्रत्यया वा भवन्ति, तदा धातो: प्रत्ययस्य च मध्ये तत्तद्गणानां विकरणप्रत्यया अवश्यमेव भवन्ति। यथा – भू + ति, इत्युक्ते 'कर्तरि शप्' (पा.३.१.६८) इति शपि भू + शप् + ति, इति भवति/ नृत् + ति, इत्युक्ते 'दिवादिभ्य: श्यन्' (पा.३.१.६९) इति श्यनि नृत् + श्यन् + ति, इति भवति क्री + ति, इत्युक्ते 'क्र्यादिभ्य: श्ना' (पा.३.१.८१) इति श्नाविकरणे क्री + श्ना + ति, इति भवति।

एवमेव कृत्सु क्री + शत:, इत्युक्ते 'क्र्यादिभ्य: श्ना' (पा.३.१.८१) इति श्नाविकरणे क्री + श्ना + शत:, इति भवति। एवमेवान्यत्राप्यूह्यम्।

## आर्धधातुकखण्डम्

### आर्धधातुकतिङ्प्रत्यया:

यद्यपि 'आर्धधातुकं शेष:' (पा.३.१.११४), इत्यनेन सूत्रेण तिङ्शिद्भिन्नानां सर्वेषां प्रत्ययानामार्धधातुकसंज्ञैव विहिता तथापि तदपवादत्वेन 'लिट् च' (पा.३.४.११५) इत्यनेन सूत्रेण लिडादेशानां तिङामथ च 'लिङाशिषि' (पा.३.४.११६) इत्यनेन सूत्रेण आशीर्लिङादेशानां तिङामार्धधातुकसंज्ञा भवति। तथा च स्य–विकरणस्य संयोगेन लृडादेशा लृङादेशाश्च तिङ्प्रत्यया आर्धातुककार्यं प्राप्नुवन्ति।

तास्–विकरणस्य संयोगेन लुडादेशास्तिङ्प्रत्यया आर्धधातुककार्यं प्राप्नुवन्ति। 'सिब्बहुलं लेटि' (पा.३.१.३४) इति सिब्विकरणस्य संयोगेन लेडादेशास्तिङ्प्रत्यया आर्धधातुककार्यं प्राप्नुवन्ति। सिच्, चङ्, अङ्, क्स इत्यादिविकरणानां सन्नियोगेन लुङादेशास्तिङ्प्रत्यया आर्धधातुककार्यं प्राप्नुवन्ति। इत्थञ्च दश लकारा एव लिङो द्वैविध्येन लेटश्च द्वैविध्येन, द्वादशविधा भवन्ति। तेषु पञ्च सार्वधातुका, सप्त चार्धधातुका:। सार्वधातुका उक्ता, आर्धधातुका उच्यन्ते। लादेशान् विकरणाञ्चाश्रित्यैषां स्वरूपमीदृशं भवति –

लृट्लकारस्य प्रत्ययाः

परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | स्यति | स्यतः | स्यन्ति |
| म. पु. | स्यसि | स्यथः | स्यथ |
| उ. पु. | स्यामि | स्यावः | स्यामः |

आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | स्यते | स्येते | स्यन्ते |
| म. पु. | स्यसे | स्येथे | स्यध्वे |
| उ. पु. | स्ये | स्यावहे | स्यामहे |



स्य–विकरणस्य संयोगेनात्र आर्धधातुककार्याणीडागमादीनि भवन्ति।

लृङ्लकारस्य प्रत्ययाः

परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | स्यत् | स्यताम् | स्यन् |
| म. पु. | स्यः | स्यतम् | स्यत |
| उ. पु. | स्यम् | स्याव | स्याम |

आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | स्यत | स्येताम् | स्यन्त |
| म. पु. | स्यथाः | स्येथाम् | स्यध्वम् |
| उ. पु. | स्ये | स्यावहि | स्यामहि |

अत्रापि स्य–विकरणस्य संयोगेनात्रार्धधातुककार्याणीडागमादीनि भवन्ति।

## लुट्लकारस्य प्रत्यया:

### परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | ता | तारौ | तार: |
| म. पु. | तासि | तास्थ: | तास्थ |
| उ. पु. | तास्मि | तास्व: | तास्म: |

### आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | ता | तारौ | तार: |
| म. पु. | तासे | तासाथे | ताध्वे |
| उ. पु. | ताहे | तास्वहे | तास्महे |

तास्–विकरणस्य संयोगेनात्रार्धधातुककार्याणीडागमादीनि भवन्ति।

## आशीर्लिङ्लकारस्य प्रत्यया:

### परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | यात् | यास्ताम् | यासु: |
| म. पु. | या: | यास्ताम् | यास्त |
| उ. पु. | यासम् | यास्व | यास्म |

### आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | सीष्ट | सीयास्ताम् | सीरन् |
| म. पु. | सीष्ठा: | सीयास्थाम् | सीध्वम् |
| उ. पु. | सीय | सीवहि | सीमहि |

'लिङाशिषि (पा.३.४.११६) इत्यनेन सूत्रेणैषामार्धधातुकत्वम्।

## लिट्लकारस्य प्रत्यया:

### परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | णल् (अ) | अतु: | उ: |
| म. पु. | थल् (थ) | अथु: | अ |
| उ. प्र. | णल् (अ) | व | म |

### आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | ए | आते | इरे |
| म. पु. | से | आथे | ध्वे |
| उ. पु. | ए | वहे | महे |

'लिट् च' (पा:३.४.११५) इत्यनेन सूत्रेणैषामार्धधातुकत्वम्।

## लुङ्लकारस्य प्रत्यया:

लुङ्लकारस्य प्रत्यया: द्वादशविधा भवन्ति –

## १. सिज्लुकि लुङ्लकारस्य प्रत्यया:

### परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | त् | ताम् | अन् (उ:) |
| म. पु. | स् (:) | तम् | त |
| उ. प्र. | अम् | व | म |

### आत्मनेपद

आत्मनेपदे सिज्लुङ् न भवति।

## २/३४/५ अङि/चङि लुङ्लकारस्य प्रत्यया:

### परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | अत् | अताम् | अन् |
| म. पु. | अ: | अतम् | अत |
| उ. पु. | अम् | आव | आम |

आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | अत | एताम् | अन्त |
| म. पु. | अथा: | एथाम् | अध्वम् |
| उ. पु. | ए | आवहि | आमहि |

६ / ७. क्से लुङ्लकारस्य प्रत्यया:

परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | सत् | सताम् | सन् |
| म. पु. | स: | सतम् | सत |
| उ. प्र. | सम् | साव | साम |

आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | सत | साताम् | सन्त |
| म. पु. | सथा: | साथाम् | सध्वम् |
| उ. पु. | सि | सावहि | सामहि |

८. धातो: सगागमे कृते, इटि सिचि च लुङ्लकारस्य प्रत्यया:

परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | सीत् | सिष्टाम् | सिषु: |
| म. पु. | सी: | सिष्टम् | सिष्ट |
| उ. प्र. | सिपम् | सिष्व | सिष्म |

आत्मनेपद

अत्रात्मनेपदं न भवति।

९ / १०. अनिडादौ सिचि लुङ्लकारस्य प्रत्यया:

परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | सीत् | स्ताम् | सु: |
| म. पु. | सी: | स्तम् | स्त |
| उ. प्र. | सम् | स्व | स्म |

आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | स्त | साताम् | सत |
| म. पु. | स्था: | साथाम् | ध्वम् |
| उ. पु. | सि | स्वहि | स्महि |

११ / १२. इडादौ सिचि लुङ्लकारस्य प्रत्यया:

परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | ईत् | इष्टाम् | इषु: |
| म. पु. | ई: | इष्टम् | इष्ट |
| उ. प्र. | इषम् | इष्व | इष्म |

आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र.पु. | इष्ट | इषाताम् | इषत |
| म.पु. | इष्ठा: | इषाथाम् | इढ्वम् |
| उ.पु. | इषि | इष्वहि | इष्महि |

## आर्धधातुक–लेट्–लकार–प्रत्यया:

सार्वधातुकखण्डे प्रोक्ता: लेट्लकारस्य प्रत्यया: सिब्बहुलं लेटि इति सिप्योगेनार्धधातुकत्वं भजन्ते –

अटा सिपा च युक्ता लेट्लकारस्यार्धधातुकप्रत्यया:

परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | सति | सत: | सन्ति |
| | सत् / सद् | — | सन् |
| म. पु. | ससि | सथ: | सथ |
| | स: | — | — |
| उ. पु. | समि | सव: | सम: |
| | सम् | सव | सम |

आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र.पु. | सते | सैते | सन्ते |
| | सतै | — | सन्तै |
| म.पु. | ससे | सैथे | सध्वे |
| | ससै | — | सध्वै |
| उ.पु. | से | सवहे | समहे |
| | सै | सवहै | समहै |

आटा सिपा च युक्ता लेट्लकारस्यार्धधातुकप्रत्यया:

परस्मैपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र. पु. | साति | सात: | सान्ति |
| | सात् / साद् | — | सान् |
| म. पु. | सासि | साथ: | साथ |
| | सा: | — | — |
| उ. पु. | सामि | साव: | साम: |
| | साम् | साव | साव |

आत्मनेपद

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र.पु. | साते | सैंते | सान्ते |
| | सातैं | -- | सान्तैं |
| म.पु. | सासे | सैंथे | साध्वे |
| | सासैं | — | साध्वैं |
| उ.पु. | से | सावहे | सामहे |
| | सैं | सावहैं | सामहैं |

## आर्धधातुक–कृत्प्रत्ययाः

पूर्वोक्तान् नव सार्वधातुककृत्प्रत्ययान् विहायावशिष्टाः कृत्प्रत्यया आर्धधातुकाः। त इत्थम् –

ञित्–णित्–कृत्प्रत्ययाः– ण्वुल् वुञ् ण्यत्

| | | | | |
|---|---|---|---|---|
| घञ् | णिनि | ण | ण्युट् | अण् |
| खुकञ् | ण्वि | ञ्युट् | ण्विन् | घिनुण् |
| उकञ् | उण् | णच् | इनुण् | इञ् |
| ण्वुच् | णमुल् | खमुञ्। | | |

कित्–ङित्–कृत्प्रत्ययाः –क्यप् क टक्

| | | | | |
|---|---|---|---|---|
| क्विन् | कञ् | क्विप् | कप् | क्वनिप् |
| क्त | क्तवतु | ङ्वनिप् | कानच् | |
| क्वसु | क्सु | क्नु | क्मरच् | कुरच् |
| क्वरप् | किन् | कि | नजिङ् | कुक् |
| क्रि | नङ् | क्निन् | अङ् | क्तिच् |
| क्से | कसेन् | कध्यै | कध्यैन् | तवेङ् |
| कमुल् | कसुन् | केन् | केन्य | क्त्वा |

कित्–ङित्–ञित्णिद्भिन्नकृत्प्रत्ययाः – तव्य तव्यत्

| | | | | |
|---|---|---|---|---|
| अनीयर् | यत् | तृच् | ल्यु | अच् |
| ष्वुन् | थकन् | वुन् | ट | इन् |
| खच् | ड | खिष्णुच् | विट् | विच् |

| | | | | |
|---|---|---|---|---|
| मनिन् | वनिप् | इनि | ख्युन् | तश्न् |
| इष्णुच् | युच् | पाकन् | आलुच् | [illegible] |
| घुरच् | उ | ऊक् | र | आरु |
| लुकन् | वरच् | डु | ष्ट्रन् | इत्र |
| तुमुन् | अप् | अथुच् | नन् | अ |
| अनि | ल्युट् | घ | खल् | से |
| सेन् | असे | असेन् | अध्यै | अध्यैन् |
| तवै | तवेन् | तोसुन् | त्वन् | अतन् = ११६ |

## आर्धधातुकविकरणप्रत्यया:

यद्यपि क्स, चङ्, अङ्, सिप्, स्य, तास्, च्लि, सिच्, चिण्, उ, यक् इत्येकादश विकरणप्रत्यया: सन्ति, किन्तु एषु नवानां संयोगेनार्धधातुकलकाराणां प्रत्यया निर्मिता:। अत: तनादिगणस्य विकरण: 'उ' तथा भावकर्मविकरण: 'यक्' इति द्वावेवा-र्धधातुकविकरणौ ज्ञेयौ।

## धातुप्रत्यया:

अष्टाध्याय्यां 'प्रत्यय:' ३.१.१ इत्यस्मात्सूत्रादारभ्य, ३.१.३२, इति सूत्रं यावद् द्वादश धातुप्रत्यया: सन्ति। सन्, क्यच् ,काम्यच्, क्यप्, क्यङ्, क्विप्, णिच्, णिङ्, ईयङ्, यक्, यङ्, आय, इत्येते द्वादशप्रत्यया: येन सह युज्यन्ते तस्य 'सनाद्यन्ता धातव:' (पा.३.१.३२) इत्यनेन सूत्रेण धातुसंज्ञा भवति। एषां योगेन नवीनो धातुर्जायते, इत्येते धातुनिर्मापका: प्रत्यया धातुप्रत्यया इत्युच्यन्ते।

अत्रावधेयम् – अष्टाध्याय्यास्तृतीयाध्यायस्थेषु सूत्रेषु 'धातो:' (पा.३.१.९१) इत्युक्त्वैव ये प्रत्यया धातुभ्यो विहिता: सन्ति, तेषामेव सार्वधातुकसंज्ञार्धधातुकसंज्ञा वा भवति। परन्त्वस्मिन् येऽपि प्रत्यया विहितास्ते क्वचिद् धातुभ्यो भवन्ति, क्वचिच्च प्रातिपदिकेभ्य: क्वचिच्च सुबन्तेभ्यो भवन्ति। सार्वधातुकसंज्ञार्धधातुकसंज्ञा च धातुभ्यो विहितानामेव प्रत्ययानां भवतो, नान्येषाम्। ये प्रत्यया: प्रातिपदिकेभ्यो विहितास्तेषामुभयसंज्ञे न भवत:।

अतोऽस्मिन् प्रकरणे काम्यच्, क्यच्, क्यष्, क्यङ् इत्येतेषु प्रत्ययेषु सुबन्तेभ्यो विहितत्वादार्धधातुकत्वाभावः।

अस्य प्रकरणस्यावशिष्टाः प्रत्यया अपि सम्यग् विचारणीयाः।

१. 'गुप्तिज्किद्भ्यः सन्' (३.१.५) 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' (३.१.६) इत्येताभ्यां सूत्राभ्यां यः सन्प्रत्ययो विहितः, स तु 'धातोः' इत्युक्त्वा धातुभ्यो न विहितः। अतस्तस्य सन्प्रत्ययस्यार्धधातुकसंज्ञा न भवति। अत एव गुप्तिज्किद्भ्यः सनि जुगुप्सते, तितिक्षते, चिकित्सति, इत्यत्र सन आर्धधातुकत्वाभावादिण् न भवति। आर्धधातुकत्वाभावस्तु सनो धातोरित्यविधानात्।

किन्तु 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (३.१.७) इति सूत्रेण विहितस्य सन्प्रत्ययार्धधातुकत्वं निर्बाधं, यतोऽयं 'धातोः' इत्युक्त्वा धातुभ्यो विधीयते।

२. 'पुच्छभाण्डचीवराण्णिङ्' (३.१.२०) इत्यनेन सूत्रेण प्रातिपदिकेभ्यो विहिते णिङ्प्रत्यये आर्धधातुकत्वाभावः। अतो 'णाविष्ठवत्कार्यं प्रातिपदिकस्य' इतीष्ठवद्भावाद् भसंज्ञाया 'टे'रित्यनेन सूत्रेण टिलोपः।

किन्तु 'कर्मणिङ्' (३.१.३०) इत्यनेन सूत्रेण विहिते णिङ्प्रत्यये 'धातो'रित्युक्त्वा धातोर्विहितत्वादार्धधातुकत्वमस्त्येव।

३. अष्टाध्यायास्तृतीयाध्याये 'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः' तथा 'सर्वप्रातिपदिकेभ्य इत्येके' इति (३.१.११) सूत्रस्थैर्वार्तिकैर्यः क्विप्प्रत्ययो विहित-स्तस्याप्यधातुभ्यो विहितत्वादार्धधातुकत्वाभावः।

किन्तु 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्' (३.२.६१) इति सूत्रेण तथा च 'क्विप् च' (३.२.७६) इति धातुभ्यो सूत्रेण विहितस्य क्विप्प्रत्ययस्य 'धातो'रित्युक्त्वा धातोर्विहितत्वादार्धधातुकत्वमस्त्येव।

४. 'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्' (३.१.२१) इति सूत्रेण यो णिच्प्रत्ययो विहितस्तस्याप्यधातुभ्यो विहितत्वादार्धधातुकत्वाभावः।

'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्' (पा.३.१.२५) इति सूत्रेण यदा सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्ण, इत्येतैः प्रातिपदिकैर्णिज् विधीयते, तदा तस्याधातुभ्यो विहितत्वादार्धधातुकत्वाभावः।

तथा च 'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च', 'तत्करोति तदाचष्टे' इति गणसूत्रैर्यो णिच्प्रत्ययो विधीयते तस्याप्यधातुभ्यो विहितत्वादार्धधातुकत्वाभावः।

किन्तु 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्' (पा.३.१.२५) इत्यनेनैव सूत्रेण यदा चुरादिगणस्थैर्धातुभ्यो णिज् विधीयतेऽथ च 'हेतुमति च' (३.१.२६) इति सूत्रेण धातुभ्यो णिज् विधीयते तदा तस्य 'धातो'रित्युक्त्वा धातोर्विहितत्वात्तस्यार्धधातुकत्वमस्त्येव।

५. अष्टाध्यायास्तृतीयाध्याये 'कण्ड्वादिभ्यो यक्' (३.१.२७) इति सूत्रेण कण्ड्वादिभ्यो यग्विधीयते। कण्ड्वादयो द्विविधाः। धातवः, प्रातिपदिकानि च। अत्र धात्वधिकारत्वात् कस्य चासञ्जनाद् धातुभ्य एव यग्विधानम्।

धातुप्रकरणाद् धातुः कस्य चासञ्जनादपि।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः।।

धातुभ्य एव विहितत्वात् तस्यार्धधातुकत्वमत एव 'मगध + यक् = मगध्यति' इत्यत्रार्धधातुकाकारस्थेन 'अतो लोपः (पा.६.४.४८) इत्यनेन सूत्रेणातो लोपो भवति। कण्डूरित्यादीनां दीर्घोच्चारणसामर्थ्यात् प्रातिपदिकत्वमप्येतेषामित्येकान्तः पक्षः।

यक्, यङ्, आय, इत्येते त्रयः प्रत्ययाः धातोरित्युक्त्वा केवलं धातुभ्यो विहितत्वादशित्त्वाच्चार्धधातुकाः।

इत्थञ्चाष्टाध्यायास्तृतीयाध्याये सन्, णिङ्, णिच्, क्विप्, यक्, एते पञ्च प्रत्यया यदा 'धातो'रित्युक्त्वा धातोर्विधीयन्ते, तदा तेषामार्धधातुकत्वमस्त्येव। अधातुभ्यो विहिते तत्रैवार्धधातुकत्वाभावः।

## किमर्थमियमार्धधातुकसंज्ञा ?

अस्माभिर्ज्ञातं यल्लट्, लोट्, लङ्, विधिलिङ्, सार्वधातुकलेट्लकाराणां तिङ्प्रत्ययान् विहाय, शतृ, शानच्, शानन्, चानश्, खश्, श, एश्, शध्यै, शध्यैन्, इत्येतान् कृत्प्रत्ययान् विहाय, शप्, श्यन्, श्नु, श, श्नम्, श्ना, शायच्, शानच्, इत्येतान् विकरणप्रत्ययान् च विहाय, धातोरित्यनूद्य धातुभ्यो विहिताः सर्वे प्रत्यया आर्धधातुकाः सन्ति।

यदा धातुभ्य आर्धधातुकतिङ्प्रत्ययाः, आर्धधातुककृत्प्रत्यया वा भवन्ति, तदा धातोः प्रत्ययस्य च मध्ये तत्तद्गणानां विकरणप्रत्यया नैव भवन्तीति बोध्यम्। परन्त्वार्धधातुकप्रत्यये सतीडागमस्य विचारो भवति।

यथा – भू + तव्य, इत्युक्ते 'आर्धधातुकस्येड् वलादेः' (पा.७.२.३५) इति इटि, भू + इट् + तव्य, इति भवति। एवमेवान्यत्राप्यूह्यम्।

## अनुबन्धानाश्रित्यैषां प्रत्ययानां विभागः

एतेषु प्रत्ययेष्वनुबन्धा आसञ्जिताः सन्ति, यैः प्रत्ययानां कित्वमकित्वं वा निर्णीयते। परन्तु केवलं प्रत्ययस्थाननुबन्धान् दृष्ट्वैव प्रत्ययस्य कित्वमकित्वं, ङित्वमङित्वं, णित्वमणित्वं वा निर्णेतुं न शक्यते। यतोऽतिदेशसूत्रैरनेकधा कित्वेऽकित्वं, अकित्वे च कित्वमतिदिश्यते। यथा किदपि क्त्वाप्रत्ययः 'न क्त्वा सेट्' (पा.१.२.१८) इत्यनेन सूत्रेणाकिद् विधीयते। अकिदपि सन्प्रत्ययः 'इको झल्' (पा.१.२.९) 'हलन्ताच्च' (पा.३.१.२.१०) इत्यादिभिः सूत्रैः किद् विधीयते। एवं चान्येऽपि। सिप्प्रत्ययो णिन्नास्ति, किन्तु 'सिब्बहुलं णिद् वक्तव्य' इति वार्तिकेन तत्र वा णित्वमतिदिश्यते। अपित्सार्व–धातुकप्रत्यया ङिद्वद् भवन्ति। एतदर्थं अष्टाध्याय्या अतिदेशप्रकरणस्य सूत्राण्यन्ये च सिब्बहुलं णिद् वक्तव्य, इत्यादीनि वार्तिकानि चाहत्य पुरतः स्थापयितव्यानि। तानीत्थम्–

१. गाङ्कुटादिभ्योऽञ्णिन्ङित् (पा.१.२.१) –गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः।

२. विज इट् (पा.१.२.३)– विजेः पर इडादिः प्रत्ययो ङिद्वत्स्यात्।

३. विभाषोर्णोः (पा.१.२.३)– इडादिप्रत्ययो वा ङिद्वत्स्यात्।

४. सार्वधातुकमपित् (पा.१.२.४)– अपित्सार्वधातुकं ङिद्वत्स्यात्।

(इति ङित्वातिदेशः) अथ कित्वातिदेशः

५. असंयोगाल्लिट् कित् (पा.१.२.५)– असंयोगात्परोऽपिल्लिट् किद्वत्स्यात्।

६. ईन्धिभवतिभ्यां च (पा.१.२.६)– आभ्यां परो लिट् किद्वत्स्यात्।

७. मृडमृदगुधकुशक्लिशवदवसः क्त्वा (पा.१.२.७)– एभ्यः सेट् क्त्वा किद्वत्स्यात्।

८. रुदविदमुषग्रहिस्वपिप्रच्छः संश्च (पा.१.२.८)– एभ्यः संश्च क्त्वा च कितौ स्तः।

९. इको झल् (पा.१.२.९)– इगन्ताज्झलादिः सन्कित्स्यात्।

१०. हलन्ताच्च (पा.१.२.१०)– इक्समीपाद्धलः परो झलादिः सन्कित्स्यात्।

११. लिङ्सिचावात्मनेपदेषु (पा.१.२.११)– इक्समीपाद्धलः परौ झलादिलिङात्मने–पदपर सिचश्चेत्येतौ कितौ स्तः।

१२. उश्च (पा.१.२.१२) – ऋवर्णात्परो झलादी लिङ् तङ्पर: सिच्चेत्येतौ कितौ स्त:।

१३. वा गम: (पा.१.२.१३)– गम: परौ झलादी लिङ् सिचौ वा कितौ स्त:।

१४. हन: सिच् (पा.१.२.१४) – कित्स्यात्।

१५. यमो गन्धने (पा.१.२.१५)– सिच्कित्स्यात्।

१६. विभाषोपयमने (पा.१.२.१६)– यम: सिच्किद्वा स्याद्विवाहे।

१७. स्थाघ्वोरिच्च (पा.१.२.१७)– अनयोरिदादेश: स्यात् सिच्च कित्स्यात्।

१८. न क्त्वा सेट् (पा.१.२.१८)– सेट् क्त्वा किन्न स्यात्।

१९. निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृष: (पा.१.२.१९) – एभ्य: सेण्निष्ठा किन्न स्यात्।

२०. मृषस्तितिक्षायाम् (पा.१.२.२०)– सेण्निष्ठा किन्न स्यात्।

२१. उदुपधाद् भावादिकर्मणोरन्यतरस्याम् (पा.१.२.२१)–उदुपधात्परा भावादिकर्मणो: सेण्निष्ठा वा किन्न स्यात्।

२२. पूङ: क्त्वा च (पा.१.२.२२)– पूङ: क्त्वा निष्ठा च सेट् किन्न स्यात्।

२३. नोपधात्थफान्ताद्वा (पा.१.२.२३)– सेट् क्त्वा किद्वत्स्याद् वा।

२४. वञ्चिलुञ्च्यृतश्च (पा.१.२.२४)– सेट् क्त्वा किद्वत्स्याद्वा।

२५. तृषिमृषिकृशे: काश्यपस्य (पा.१.२.२५)– एभ्य: सेट् क्त्वा किद्वत्स्याद् वा।

२६. रलो व्युपधाद्धलादे: संश्च (पा.१.२.२६) – उश्च इश्च इति वी। ते उपधे यस्य तस्माद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्त:।

अत: प्रत्ययेष्वनुबन्धाकारेण यद् दृश्यते, तदल्पम्। अत: प्रत्यय उपस्थित एव तत्र संभाव्यातिदेशो विचार्य:। एतद् सर्वमवधार्य प्रत्ययस्य सम्यग् ज्ञाने जात एव तदनुरूपमङ्गकार्यं स्वयमेव झटित्युपतिष्ठते। अतोऽङ्गकार्यनिर्देशार्थमेवानुबन्धा: प्रत्ययेष्वासञ्जिता: सन्तीत्यवधार्यम्।

अनुबन्धानाश्रित्य धातुभ्यो विहितानां सार्वधातुकप्रत्ययानां द्वौ विभागौ जायेते। पित्सार्वधातुकप्रत्यया, अपित्सार्वधातुकप्रत्ययाश्च। तयो: पुन: हलादित्वमजादित्वमिति भेदद्वयम्। तदित्थम् –




येऽपित्सार्वधातुकप्रत्ययास्ते 'सार्वधातुकमपित्' (पा.१.२.४) इत्यनेन सूत्रेण ङिद्वद् भवन्ति। अतस्तेषु ङित्त्वप्रयुक्तानि कार्याण्येव भवन्ति। उपरि निर्दिष्टेषु सार्वधातुकप्रत्ययेषु ये प्रत्ययाः स्थूलाक्षराः वक्राश्च दृश्यन्ते, ते पित्सार्वधातुकाः।

सार्वधातुकखण्डे ये प्रत्ययाः सामान्याक्षराः समाश्च दृश्यन्ते, तेऽपित्सार्वधातुकाः। एतेऽपित्सार्वधातुकप्रत्ययाः 'सार्वधातुकमपित्' (पा.१.२.४) इत्यनेन सूत्रेण ङिद्वद् भवन्ति।

अनुबन्धानाश्रित्य धातुभ्यो विहितानामार्धधातुकप्रत्ययानां त्रयो विभागा मुख्यत्वेन कर्तुं शक्यन्ते।




एतत्सर्वं मनसिकृत्यैव भगवताङ्गकार्याणि निर्दिष्टानि।

# अङ्गकार्यविज्ञानम्

अष्टाध्याय्यां ६.४.१ इत्यत आरभ्य ७.४.९७, इति यावदङ्गाधिकारो वर्तते। सर्वमङ्गकार्यमनुबन्धानपेक्षते। तत्र प्रत्ययस्यानुबन्धा एवाङ्गकार्यं निर्दिशन्ति।

यत्र कित्वं, ङित्वं वा, तत्र गुणवृद्धिनिषेधः, सम्प्रसारणं, नलोपश्च भवन्ति। यत्र णित्वं ञित्वं वा, तत्राचो ञ्णिति, अत उपधाया, इत्यादीनां प्रवृत्तिः। यत्रैषामभावस्तत्र सार्वधातुकार्धधातुकयोः, इत्यादीनाम्।

'आर्धधातुके' (पा.६.४.४६) इत्यधिकृत्यार्धधातुकसम्बन्धीनि कार्याणि, हुश्नुवोः सार्वधातुके, (पा.६.४.८७) अत उत्सार्वधातुके, (पा.७.४.१०) नाभ्यस्तस्याचि पिति सार्वधातुके (पा.७.३.८७) इत्यादिभिः सार्वधातुकसम्बन्धीनि कार्याणि पृथक्कृत्योक्तानि।

एवञ्चाङ्गानां विभाजनमन्त्याक्षराण्याश्रित्य कृतम्। यतः — अतो लोपः, (पा. ६.४.४८) अतो दीर्घो यञि, (पा.७.३.१९) अतो येयः, (पा.७.२.८०)अतो हलादेर्लघोः, (पा.७.२.७) आतो लोप इटि च, (पा.७.४.६४) एरनेकाचोऽसंयोगपूर्वस्य, (पा.७.४.८२) उतश्च प्रत्ययादसंयोगपूर्वात्, (पा.७.४.१०६) ऋतश्च, (पा.७.४.९२) ऋतश्च संयोगादेर्गुणः, (पा.७.४.१०) रीङ् ऋतः, (पा.७.४.२७) ऋति इद् धातोः, इत्यादिष्वन्त्याक्षरेणाङ्गानि निर्दिष्टानि।

अतो यदि प्रत्ययानामनुबन्धा अङ्गानाञ्चान्त्याक्षराणि सम्यगवगम्येरन्, तर्हि तदाश्रितान्यङ्गकार्याणि स्वयमेव स्फुटीभवन्ति।

यथैकस्मिन् सुव्यवस्थिते गृहे सर्वाणि वस्तूनि पृथक्कृत्य यथास्थानं स्थापितानि वर्तन्ते, तथैवाष्टाध्याय्यां सर्वाणि कार्याणि पृथक्कृत्य यथास्थानं स्थापितानि वर्तन्ते। एकस्य शब्दस्य साधने नैकानि कार्याणि भवन्ति। परन्त्वष्टाध्याय्यां तेषां सम्यग्व्यवस्थापनाद् तानि दूरत एव सुस्पष्टं प्रतिभान्तीति वैलक्षण्यं चमत्कृतिश्चाष्टाध्याय्याः।



# श्रीपेरि–सूर्यनारायणशास्त्रि–विरचित–भूषणसारव्याख्या–तत्त्वदर्शिनी–विवेचनम्

एस. रङ्गनाथः

आन्ध्रप्रदेशे विशाखमण्डले नोड्वरं जनपदे पेदनन्दिपल्लिनामकः कश्चन अग्रहारोऽस्ति। तत्र यजुश्शाखायां श्रौत प्रक्रियायां स्मृतिप्रक्रियायां व्याकरणे ज्योतिषशास्त्र–प्रवीणाः अनेके प्रवराः व्यराजन्त। तस्मिन्नेवाग्रहारे गौतमवंशीयाः केचन श्रोत्रिया न्यवसन्। तेषां वंशे सुप्रसिद्धः "पेरि" इत्युपनामकस्सर्वेश्वराख्य (द्विजन्माऽवसत्), तस्य सूर्म्याम–देवीनामिका धर्मपत्न्यासीत्। तयोः पुण्यदम्पत्योः पूर्वजन्मकृतसुकृतपरिपाकवशेन–२०.८.१९१० दिने सूर्यनारायणशास्त्रिणः पुत्रत्वमवापुः।

## ग्रन्थरचना

१. तत्त्वदर्शिनी – भूषणसारस्य व्याख्या।

२. नागेश–भावप्रकाशः– अयं नागेशभट्ट–विरचित–लघुमञ्जूषाया उपरि विस्तृतो व्याख्यानग्रन्थः लघुमञ्जूषाया विवरणे यावन्तो दर्शनान्तरीयविषया अपेक्ष्यन्ते ते सर्वेऽपि अत्र संग्रथिताः।

३. खण्डदेव–भावप्रकाशः – खण्डदेवेन जैमिनीयमतानुसारेण शाब्दबोधप्रक्रिया अत्र निर्मिता। अत्र धर्माधर्मलक्षणं, विधिवादः, भावनावादः इत्येते विषयास्सन्ति। अस्य ग्रन्थस्यैतावत्पर्यन्तं टीका नास्ति। नैयायिकानां शाब्दिकानाञ्च मतं निराकृत्य भावनामुख्यविशेष्यको शाब्दबोधस्सिद्धान्तीकृतः।

## भूषणसारव्याख्या–तत्त्वदर्शिनी

एतद्–ग्रन्थस्य विरचने महान्प्रयत्नविशेषस्समपाद्यत ग्रन्थकृता कौण्डभट्टेन। तथाहि शाब्दबोधप्रक्रियोपयोगिनः पदार्थाः पाणिनीये एव प्रादर्शिषत। तदर्थमेव खलु तच्छास्त्रं प्रावर्तत। तत्र च सनादयः १२, विकरणाः २३, लकाराः १०, तिङः १८, कृत

प्रायेण १००, सुपः २१, टाबादिस्त्रीप्रत्ययाः १, तद्धिताः प्रायेण २००, इत्यष्टविधाः प्रत्ययाः तृतीयचतुर्थपञ्चमाध्यायेषु त्रिषु इच्छादितत्तदर्थेषु विहिताः। शास्त्रस्येद-मध्यायत्रयमेव जीवातुभूतम्। एतदेव तार्किकाणां मीमांसकानां च शाब्दबोधप्रक्रियोपयोगीत्यत्र न कश्चिद् विप्रतिपद्यते। नैयायिकमीमांसकवैयाकरणानां त्रयाणामपि शब्दखण्डेऽधिकारस्य समानत्वात्तार्किकैर्मीमांसकैश्चैतादृतमित्यत्र न महदाश्चर्यम्। तत्र प्राथमिकाः पञ्चविधाः प्रत्ययाः धातूद्देशेन ततस्त्रिविधाः प्रातिपदिकोद्देशेन च पाणिनिमहर्षिणा विहिताः। प्रकृतिप्रत्ययसंयोजनेन साधुशब्दनिष्पत्तयेऽपेक्षितानि कार्याणि अतिरिक्तेऽध्यायपञ्चके कथितानि।

पाणिनीयसूत्रेषु कात्यायनेन वार्तिकानि व्यरचिषत। सूत्रवार्तिकानामुपरि भगवता पतञ्जलिना महाभाष्यं निरमायि। भाष्यवार्तिककाराभ्यां कर्तृकर्मरूपो धर्मी तिङर्थः। कर्मकर्तृकरणादिरूपो धर्मी सुपामर्थः समासादिवृत्तौ न व्यपेक्षा, किन्तु एकार्थीभावः, धात्वर्थमुख्यविशेष्यको बोधः। अन्ततः अखण्डवाक्यस्फोटशब्द एव वाचकः इत्यादयो वैयाकरणसिद्धान्ताः निरूपिताः। तांश्च सिद्धान्तान् गुरुः भर्तृहरिः काण्डत्रयात्मके वाक्यपदीये शाब्दिकानुजिघृक्षया विस्तरेण प्राबोधयत्।

एवं सत्यपि दर्शनान्तरीयाः विकल्पग्रस्तचित्ततया तान् च सम्यगधिगन्तुमीशते, प्रत्युत दूषयन्ति च। अतस्तन्मतनिराकणपूर्वकं वैयाकरणसिद्धान्तप्रतिष्ठापनस्य आवश्यकता समजनि। तदर्थमेव प्रायतन्त दीक्षितकौण्डमहोदयः। नैयायिकैर्मीमांसकैश्च स्वीयप्रबन्धेषु तत्तसन्दर्भे वैयाकरणमतमवतार्य अदूष्यत। तदसहमानः सर्वतंत्रस्वतंत्रः श्रीमान् भट्टोजिदीक्षितः प्रौढमनोरमायां शाब्दकौस्तुभे च "लः कर्मणि च भावे चाकर्मकेभ्यः' ३.४.६७, 'भावे' ३.३.१८, "नञ्" १.४.४७ इत्यादिसूत्रव्याख्यावसरे परमतं दूषयित्वा वैयाकरणसिद्धान्तं प्राबोधयत्। तिङां कर्तृकर्मरूपो शक्योऽर्थः न वृत्तिः। फलव्यापारौ धात्वर्थः आख्यातार्थत्वेन पराभिमता कृतिरपि धातुशक्यैव। नञः आरोपितद्योतकत्वं समासादिवृत्तौ जहत्स्वार्था-रूपैकार्थीभाव एव स्वीकार्य। बोधकतैव शक्तिः। न तु नैयायिकाभ्युपगतेश्वरसङ्केतः। अपभ्रंशा अपि शक्ता एव, सर्वत्रापि धात्वर्थमुख्य विशेष्यक एव शाब्दबोधः। परमसिद्धान्ते स्फोटशब्द एवावशिष्यते। स च निर्गुणब्रह्मरूपः प्रक्रियांशस्तु अविद्याविजृंभणमात्रम् इत्यादयः स्वसिद्धान्ताः तत्र तत्र विकीर्णतया बाहुल्येन च दीक्षितेन प्रादर्शिषत। परमतमप्रतिषिद्धमनुमतं भवतीति न्यायमनुसृत्य सर्वत्रापि परमतनिराकरणपूर्वकमेव स्वसिद्धान्तो न्यरूपि। एवं मनोरमाशब्दकौस्तुभयोः प्रतिपादितस्य पदार्थजातस्य विप्रकीर्ण-

त्वाद्गुरुभूतत्वाच्च दुर्घटतया व्युत्पित्सूनामुपकारो न भवेदित्याशयेन संक्षेपेण तत्पदार्थजातं दिदर्शयिषुः चतुस्सप्ततिश्लोकात्मकं "वैयाकरणमतोन्मज्जनम्" – नामकं वैयाकरणशाब्द–बोधप्रक्रियाप्रदर्शनपरं ग्रन्थं प्रणिनाय दीक्षितः।

तत्र धात्वर्थ–लकारार्थ–सुबर्थ–नामार्थ– समासशक्ति–शक्ति–नञर्थ–निपातार्थ–त्वादिभाव–प्रत्ययार्थ–देवताप्रत्ययार्थ–क्त्वाद्यर्थ–स्फोटनिर्णयात्मकानि चतुर्दश–प्रकरणानि सन्ति। भट्टोजिदीक्षितः स्वीयशाब्दबोधप्रक्रियाग्रन्थस्य प्रमाणसम्पादनाय वाक्यपदीयात् आख्यातशब्दे, साध्यत्वेन क्रिया तत्र, अविग्रहागतादिस्था, भेद्यभेदक, आख्याततद्धित, इन्द्रियाणां स्वविषयेषु, असाधुरनुमानेन सम्बन्धिशब्दे, पदेन वर्णा, अनेकव्यक्ति, सत्यासत्यौ तु यौ यागौ, इत्येकादशश्लोकान् स्वग्रन्थमानिनाय। तथा भट्टपादानां तन्त्रवार्तिकात् (भावार्थाधिकरणे) अस्त्यादावपि इत्यादि श्लोकमप्यानिनाय। भट्टवार्तिके अस्त्यादावपि कर्त्रंशे इति पाठः। सोऽयं महानुभावः स्वज्येष्ठभ्रातृरङ्गोजिभट्टस्य तनूजन्मने सर्वतंत्रस्वतंत्राय श्रीमते कोण्डभट्टाय स्वसिद्धान्तान् साकल्येनोपदिदेश।

कौण्डभट्टोऽपि पितृव्योपदिष्टान् पदार्थानाकलय्य "वैयाकरणमतोन्मज्जनस्य" बृहद्वैयाकरणभूषणनामकं महान्तं व्याख्यानग्रन्थमरीरचत्। तत्रादौ तेनैवं प्रतिज्ञातम्–

"गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान् सिद्धान्तानामुपपत्तिभिः प्रकटये तेषां तेषां वचो दूषये" इति। एवं प्रतिजानतः भट्टस्यायमभिप्रायः यत् न्यायतंत्रे सूत्रवार्तिकभाष्य–ग्रन्थाः अस्माकमनुकूलाः। परन्तु तद्व्याख्यातारः केवलं वैयाकरणमतदूषणाभिनिवेशेनैव तत्खण्डनाय प्रववृतिरे। तथा पूर्वतंत्रे जैमिनीयसूत्राण्यस्मत–सिद्धान्तस्यानुकूलान्येव। भाष्यकारप्रभृतयस्सर्वेऽप्यस्मसिद्धान्तस्वरूपमनाकलय्य तदन्यथैव गृहित्वा तद्दृष्टयैव जैमिनि–सूत्राणि व्याचचक्षिरे। जैमिनिसूत्राणि व्याकरणसिद्धान्तानुसारेणैव सुयोग्यानि भवन्तीति। निर्व्यूढ़ा चेयं प्रतिज्ञा वैयाकरणभूषणेन कौण्डभट्टेन। तदन्तरकालिकेन नागेशेनापि महता प्रबन्धेन सा प्रतिज्ञा सुष्ठु परिपालिता मञ्जूषायाम्। भूषणग्रन्थस्यातिविस्तृतयाऽस्मत्–सिद्धान्तजिज्ञासुभिरनयासेन सुज्ञेयास्स्युरित्याशयेन कौण्डभट्टेनैव भूषणग्रन्थस्य सारांशं प्रतिपिपादयिषिता भूषणसारनामको ग्रन्थो निरमायि। तत्रामैव कथयति एतन्मूलभूतं भूषणमस्तीति। एष दीक्षितकौण्डभट्टयोः प्रयत्नविशेष एवेदानीं वैयाकरणभूषणसाररूपेणा–स्मदादीनां हस्तेषु विलसतीति महदिदं प्रमोदस्थानम्। एतस्याध्ययनेन दर्शनान्तरीयाणां सिद्धान्तेष्वस्वास्थ्यमप्रामाणिकत्वं च वैयाकरणसिद्धान्तेषु साम्मुख्यं च सहृदयानां चेतस्सु प्रतिफलति। परन्तु नव्यन्यायस्य प्रादुर्भावेण प्राचीनन्याय इव भूषणसारस्योत्पत्त्यनन्तरं

वृहद्वैयाकरणभूषणं प्रायोऽस्मिंगर्नामित्यंत्र वक्तव्यम्। भूषणसार एव विश्वविद्यालय-परीक्षासु पाठ्यत्वेन नियोज्यते। तदुपर्येव विद्वांसः व्याख्यानानि निरमासिषुः।

कौण्डभट्टेन भूषणग्रन्थे शब्दप्रयोगविषये कार्पण्यं नाशितम्। किन्तु स्वाभिप्रायः गंगाप्रवाहसदृशया भाषया विस्तरेण प्रदर्शितः। अतस्तस्य व्याख्यापेक्षा नासीत्। भूषणसारे तु ग्रन्थविस्तरभिया शब्दप्रयोगे कार्पण्यमाश्रितम्। ग्रन्थकर्तुराशयप्रदर्शनाय व्याख्यापेक्षा समजनि। सूक्ष्मरूपेण वर्तमानस्यास्य ग्रन्थस्य व्याख्यानाय भूषणग्रन्थस्यावश्यकताऽत्यन्त-मस्तीति न विविच्य वक्तव्यम्। कारिकांशस्य भट्टोजिदीक्षितनिर्मितत्वेन भूषणसारव्याख्या-नावसरेऽपि दीक्षितविरचितसकलग्रन्थपर्यालोचनावश्यकी। वैयाकरणैर्महाभाष्यस्य परमप्रमाणे-नाङ्गीकृतत्वान्महाभाष्यार्थपरिशीलनमपि भूषणसारव्याख्यानायात्यन्तमावश्यकम्। एवञ्च "सिद्धान्तकौमुदी", "प्रौढमनोरमा", "वृहद्वैयाकरणभूषणं, "महाभाष्यादिग्रन्थान् सम्यक्-परिशील्य तदीयानुसन्धानेन भूषणसारग्रन्थो यदि व्याख्यायते तदा सारग्रन्थार्थः मूलकृत्-सम्मतस्पष्टमवभासते पठितॄणां पाठयितॄणाञ्च। प्रमाणत्वेन प्रदर्शितग्रन्थाननवलोक्य केवलं भूषणसारग्रन्थमाश्रित्य व्याख्याकरणे सारग्रन्थार्थस्सम्यक्तया प्रतिपादनो न भवति। एतावत्पर्यन्तं भूषणसारस्योपरि मुद्रिताः षड्व्याख्याः समुपलभ्यन्ते। ताः सर्वा अपि सिद्धान्तकौमुद्यादि-मूलग्रन्थाननवेदयैव स्वोत्प्रेक्षितार्थानुसारेण सारग्रन्थार्थं प्रतिपादयामासुः। ते व्याख्यातारः सर्वतंत्रस्वतंत्रा अपि मूलग्रन्थानवेक्षणदोषेण भूषणसारस्य तत्त्वार्थं नाग्रहीषुरेव। ताः व्याख्याः अधः प्रदर्श्यन्ते–

| | | |
|---|---|---|
| १. | दर्पणम् | हरिवल्लभकृतम् |
| २. | काशिका | हरिरामदीक्षितकृता |
| ३. | परीक्षा | भैरवमिश्रकृता |
| ४. | प्रभा | पञ्चोलिबालकृष्णविरचिता |
| ५. | सरला | नेने गोपालकृष्णविरचिता |
| ६. | भूषणसारव्याख्या | कृष्णमिश्रकृता |

एवं स्थिते पेरिसूर्यनारायणशस्त्रिमहोदयाः भूषणसारग्रन्थार्थं परिज्ञानायावश्यकान् मूलग्रन्थान् दर्शनान्तरीयसिद्धान्तांश्च सम्यगाकलय्य उपरिप्रदर्शितव्याख्यानग्रन्थान्परिशील्य तेषु दोषप्रदर्शनपूर्वकं सारग्रन्थार्थतत्त्वप्रतिपादनपरां "तत्त्वदर्शिनी" नाम्ना बृहती व्याख्यां निर्ममुः। ग्रन्थारम्भे तैरेवं प्रतिज्ञा कृता–

विमृश्यप्राक्तनीष्टीकाः प्रमादांस्तु विविच्य च।
व्याख्यां भूषणसारस्य कुरुते तत्त्वदर्शिनीम्।।
हरिवल्लभपञ्चोलिभैरवैर्हरिशास्त्रिणा।
कृष्णमिश्रेण विदुषा नेनेगोपालशास्त्रिणा।।
व्याख्या निर्ममिरे बह्व्यः पदार्थप्रतिपादिकाः।
सारग्रन्थार्थजिज्ञासोः साहाय्यं ताः प्रकुर्वते।।
प्रागगृह्णामहमपि पदार्थं तत एव हि।
स्वोत्प्रेक्षितार्थनिपुणं सारं ते किन्त्वनूयुयुः।।
न तत्त्वमग्रहीषुस्ते मूलग्रन्थानवेक्षणात्।
मूलग्रन्थानवेक्ष्याहं सारतत्त्वं निरूपये।। इति।।

सा च प्रतिज्ञा शास्त्रिचरणैस्तत्त्वदर्शिनी व्याख्यायां साकल्येन निर्व्यूढा।



# शब्दसद्भावसाधने कविकर्णपूरस्य वैशिष्ट्यम्

रमाकान्तपाण्डेयः

स्फोटात्मको ध्वन्यात्मकश्च द्विधा शब्दविभागः कृतो दृश्यते शब्दशास्त्रे। तत्र वस्तुतः स्फोट एव शब्दत्वेन स्वीकृतस्तथापि लोकव्यवहाराद् ध्वनावपि शब्दव्यवहार इति स्पष्टमाह भाष्यकृद् भगवान् पञ्जलिः[1]। काव्यशरीरत्वेन अङ्गीकृतस्य शब्दस्य वर्णात्मक–ध्वन्यात्मकभेदेन द्वैविध्यं प्रतिपादयन् कविकर्णपूरः स्फोटसद्भावे प्रत्यक्षम् अर्थापत्तिं च प्रमाणतयोपन्यस्यतीति न केवलम् आलङ्कारिकसम्प्रदाये शाब्दिकसम्प्रदायेऽपि तस्य वैशिष्ट्यम्।

ननु मीमांसकमते वर्णात्मक एव शब्दो नित्यः, न शाब्दिकसम्प्रदाये, ध्वनित्वेनाऽत्र तस्यैव व्यपदेशादिति कविकर्णपूरेण वर्णात्मकशब्दस्य नित्यत्वनिर्देशः सम्प्रदायविरुद्ध एवेति चेत्, न। वर्णात्मकशब्देन तत्र स्फोटस्यैव विवक्षितत्वात्। तथा चाह कविः कर्णपूरः–

''वर्णात्मको ध्वन्यात्मकश्चेति शब्दो द्विधा। यद्यपि वर्णा नित्यास्तथापि तदभिव्यक्तिः शरीरस्थवायुनैव भवति[2]।

अयं भावः वर्णानां नित्यत्वविषये मीमांसकसिद्धान्तोऽनुकूल एव आलङ्कारिकाणाम्। वर्णा एव शब्दः, शब्दाश्च नित्या इति तैरभ्युपगमात्। तथापि तत्राऽभिव्यक्तिसिद्धान्ताऽनङ्गीकारा न नित्यवर्णघटितकाव्ये कविजन्यत्वव्यवहाराऽप्रसङ्गाच्छाब्दिकसम्मतशब्दस्वरूप आस्थावन्त आलङ्कारिकाः। ''यद्यपि नित्यः तथापि कार्य'' इति भाष्यप्रतिपादितरीत्या नित्यसिद्धवस्तुनोऽप्यभिव्यक्तिसिद्धेः काव्येऽपि तद्व्यवहारोपपत्तेः। स चाऽयं स्फोटः शरीरस्थवायुनैवाऽभिव्यज्यत इति वर्णात्मकशब्दस्य कविकर्णपूराभिमतस्य स्फोटत्वाङ्गीकारे न काऽपि क्षतिः[3]।

स्फोटव्यवस्थापने कविः कर्णपूरः श्रीमद्भागवतोक्तिं प्रमाणतयोपन्यस्यतीति तत्र नागेशाऽनुसार्येव विवेचनम्। तथा च तत्र तदाशयं विवृण्वानष्टीकाकारो लोकनाथस्तत्रैवाऽऽह--

निरंश: न कोऽप्यंश: अत एवाऽभिन्न एक इत्यर्थ:। नित्यो ज्ञानस्वरूपं न एवम्भूत ओङ्कार: शब्दार्थवस्तुमात्राणा प्रादुर्भावकत्वात् शब्दार्थमय:। एतन्मतं प्रणवादेव वेदादीनां सर्वेषां सृष्टिरिति बोध्यम्। जन्मान्धमूकबधिरस्य पुरुषस्य चक्षु:कर्णवागिन्द्रियाणामभावात् स्वीयान्त:करण एव स्वत एव शब्दार्थयो: परामर्शे जाते सति स्वीयवाक्यस्य शब्दार्थस्य चान्तर एव बोधो भवतीत्यान्तर: स्फोट एव'।

वर्णस्फोटो नाऽत्र कविकर्णपूरेण निर्दिष्ट:। पद–वाक्यस्फोटयो: विवेचनम् एव तस्य प्रयासो दृश्यते'। पुण्यराजेनाऽपि "एक एव नित्य: पदाभिव्यङ्ग्यो वाक्याभिव्यङ्ग्योऽखण्डो व्यक्तिस्फोटो वहीरूप" इत्युक्तम्। तत्सर्वं समीक्षितं सुधीभिरिति नेह प्रतन्यते।

किन्तु नाऽयं स्फोट: सर्वै: स्वीकृत इति विरोधिमतोल्लेखपूर्वकं तत्र प्रमाणोपन्यासस्समयो जगाद कौस्तुभकृच्छ्रीमान् कर्णपूर: –

"तमन्ये न सहन्ते। तथाहि – पूर्व–पूर्ववर्णाननुभवतश्चरमवर्णश्रवणकाले पूर्व–पूर्ववर्णानुभवजनितसंस्कारसहकृतचरमवर्णसम्बन्धेन पदव्युत्पादनसमयग्रहणानुगृहीतेन पूर्व–पूर्ववणानुभवजनितसंस्कारसहकृतचरमवर्णसम्बन्धेन श्रोत्रेण युगपदेव सदसदनेकवर्णावगाहिनी पदप्रतीतिर्जन्यते। सहकारिदाढ्र्येन प्रत्यभिज्ञानवदेव प्रत्यभिज्ञाने प्रत्येकेऽपि अतीताऽपि पूर्वावस्था स्फुरति तेन कृतं स्फोटेनेति।

तन्न! तथा हि– पदव्युत्पादनसमयो हि स्फोटकृत एव। न च तत्र प्रमाणाभाव:, प्रत्यक्षाऽर्थापत्यो: सम्भवात्। यथाऽयं गौरित्युक्ते नहि गकारौकारविसर्गा एव प्रतीयन्ते, अपि तु सास्नादिमत् किमपीति प्रत्यक्षम्। अयं गौरित्यत्र किं गकारादयो वर्णा व्यस्ता एवाऽर्थप्रत्यायका:, किं समस्ता:? नाद्य:, इतरवर्णवैयर्थ्यात्। नापि द्वितीय:, उत्पन्नप्रध्वस्तानां सामस्त्याभावात्। न च व्याससमासाभ्यामन्य: प्रकारोऽस्ति। तस्माद् वर्णानां वाचकत्वानुपपत्तौ यद्बलादर्थप्रतीति: स एव स्फोटो वर्णातिरिक्तो वर्णाभिव्यङ्ग्यार्थप्रत्ययायको नित्य एवेति अर्थापत्तिरपि'।।

अयमाशय: मीमांसकप्रभृतयो न स्फोटं सहन्त इति तन्मतनिरासाय कवेरुपक्रम:। स च तन्मतनिरसनपूर्वकं स्फोटसद्भावे प्रमाणमुपस्थापयितुं प्रयतते। पूर्व–पूर्व–वर्णाननुभवत: पुरुषस्य चरमवर्णसम्बन्धेन श्रोत्रेण युगपदेव पूर्वपूर्वातीतवर्णावगाहिनी पदप्रतीतिर्जायते। तदनन्तरं वाक्यार्थविषयकशाब्दबोधो भवति। "न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इति मीमांसकमतानुसारेण अत्र कालस्याऽपि विषयविधया कारणत्वम्। "सोऽयं

देवदत्तः'' इति प्रत्यभिज्ञास्थले चक्षुःसन्निकर्षजन्येदम्पदार्थज्ञानकाले पूर्वप्रतीततत्कालतद्देश-रूपतत्ताऽपि तादृशप्रत्यये भासते। तथा चाऽत्रापि चरमवर्णस्य श्रवणेन्द्रिजन्यज्ञाने पूर्व-पूर्वातीतवर्णस्याऽपि संस्कारवशाद् भानं भविष्यतीति स्फोटोऽनावश्यक एवेति मीमांसकमतं निराकरोति तन्नेति ग्रन्थेन अलङ्कारकौस्तुभकारः श्रीमान् कर्णपूरः।

यत्समयेऽतीतसमस्तवर्णघटितपदानां मीमांसकमते पुनः प्रतीतिर्भवति, तत्समये स्फोटकृतशाब्दबोध एव भवति, न तु अतीतवर्णानां पुनः प्रतीतिः। अत्र न किमपि प्रमाणमिति तैरुच्यते चेत्, प्रत्यक्षाऽर्थापत्त्योः सद्भावो निरूपितोऽत्र ग्रन्थे। गौरित्युक्ते न अतीतगकारादेः पुनः प्रतीतिः, किन्तु सास्नाद्यवयवविशिष्टगोपदार्थस्य प्रतीतिरेवेत्यत्र सर्वेषामनुभव एव प्रमाणम्। अथ च गौरित्यत्र केवलगकारस्य कारणत्वेऽन्यवर्णोच्चारणस्य वैयर्थ्यापत्तिः। केवलगकारोच्चारणात् शाब्दबोधापत्तिश्च। तस्मात् पदजन्यशाब्द-बोधान्यथानुपपत्त्या स्फोटः सिद्ध इत्यन्यथानुपपत्तिरेवाऽत्र प्रमाणम्। यथा– 'स्थूलो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र पीनत्वाऽन्यथानुपपत्तिप्रमाणेन रात्रिभोजित्वसिद्धिः।

ननु शब्दे प्रमाणादिलक्षणमेव नोपन्यस्तम्, कथमत्र पुनः प्रमाणप्रदर्शनमिति चेन्न। भाष्यादौ तद्व्यवहारस्थापितत्वात्। तथा च –''अनिर्ज्ञातार्थविषयकं सम्भावित-सकलधर्मप्रकारकं ज्ञानं प्रमा, तत्करणं प्रमाणम्'' इति हि शाब्दिकसम्मतं प्रमाणसामान्य-लक्षणम्। तथा चाह भगवान् भाष्यकार – ''मानं हि नाम तद् येनाऽनिर्ज्ञातमर्थं ज्ञास्यामि''। एतदेव अनुवदन् हरिरप्याह

''अनिर्ज्ञातस्य निर्ज्ञानं येन तन्मानमुच्यते''।

अतो नाऽत्र शास्त्रे प्रमाणव्यवस्थाभावप्रसङ्गः। तथापि शब्दप्रत्यक्षे शाब्दिकमते कश्चन विशेषो वर्तते। तत्र ध्वन्यात्मकस्य शब्दस्य प्रत्यक्षे तु श्रोत्रस्य तेन सह समवाय एव सन्निकर्षः, श्रोत्रेन्द्रियस्य आकाशरूपत्वात्, ध्वनिरूपशब्दस्य च तद्गुणत्वात्। सफोटात्मकशब्दस्य श्रावणप्रत्यक्षे तु स्वमतमेवध्वनितादात्म्यम्, स्वसमवेतध्वनिव्यङ्ग्यत्वं वा सम्बन्धः। तस्य न श्रावण–प्रत्यक्षमपि तु मनसा ग्रहणमिति मते तु स्वसंयुक्तात्मतादात्म्यं तादृशात्मसंयोगो वा सम्बन्ध इति निर्धारितं श्रीमद्भी रामप्रसादत्रिपाठिभिः। एवं कविकर्णपूरस्य प्रत्यक्षविषयकः सिद्धान्तः शाब्दिकसिद्धान्तानुगुण एव।

अर्थापत्तिर्यद्यपि शब्दशास्त्रे सम्यङ्नोपन्यस्ता, तथापि तन्महत्त्वं तु दृश्यत एव शब्दशास्त्रे। स्फोटसङ्कल्पनायां शक्त्याश्रयत्वान्यथानुपपत्तिर्मानत्वेनोपस्थाप्यते, सैव

अर्थापत्तिः। व्याकरणशास्त्रे यत्र यत्रोच्यते व्यर्थीभूयेदं पदं सूत्रं वा एतज्ज्ञापयति, तत्र तत्र प्रायस्तज्ज्ञापनमर्थापत्तिरूपा प्रमा, ज्ञापकं च अर्थापत्तिरूपं प्रमाणम् इत्यपि श्रीत्रिपाठिचरणानां धीरिति स्फोटसद्भावे प्रत्यक्षाऽर्थापत्त्योः प्रमाणत्वेन स्वीकृतिर्न सम्प्रदायविरुद्धा[८]।

ननु स्फोटानङ्गीकारे का हानिः? नित्यवर्णैनैव शाब्दबोधप्रसङ्गः स्वीक्रियतां स्फोटस्याऽपि तद्रूपत्वादिति चेत्, अत्रोच्यते कविना कर्णपूरेण–

''स्फोटानङ्गीकारे सर्व एव संस्कारा विशृङ्खला एव सन्तः पदजन्य-पदार्थप्रतीतौ न शक्नुवन्ति। नापि प्रत्यभिज्ञाने प्रत्यक्षेऽपि अतीनाऽपि पूर्वावस्था स्फुरति। न वा सदसदनेकवर्णावगाहिनी पदप्रतीतिः श्रोत्रेण जन्यते। सोऽयं देवदत्त इति प्रत्यभिज्ञानस्य तत्तांशे संस्कारजनितस्मृतिविशेषत्वात्, श्रोत्रेण सदसदनेकवर्णावगाहाभावाच्च। नहि प्रत्यभिज्ञानमेकं ज्ञानं, तदंशे संस्कारतया, इदमंशे च चक्षुर्जन्यतया च स्मरणग्रहणात्मकत्वात्। न च तदंशेऽपि चक्षुः करणं, तस्य सन्निहितग्राहितया तदभावात्। नापीदमंशे संस्कारः, चक्षुरन्वयव्यतिरेकानुविधानात् स्मरणहेतुव्यवसायाभावाच्च। तेन स्फोट एव अङ्गीकार्यः''[९]।

शाब्दिकसम्प्रदाये स्फोट एव शाब्दबोधे कारणम्, न तु तत्तद्वर्णज्ञानानां तादृशज्ञान-जन्यसंस्काराणां वा कारणत्वम्। यादृशानुपूर्वीविशिष्टचरमवर्णज्ञानानन्तरं शाब्दबोधे जायते तादृशचरमवर्णज्ञाननिष्ठोऽसाधारणजातिविशेषः स्फोटत्वम्। स च स्फोटः तद्विषयकशाब्द-बुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेकतया सिद्धः। न च न्यायमतसिद्धतादृशा-ऽनुर्व्यवच्छिन्नचरमवर्णज्ञानस्यैव कारणत्वम्, आनुपूर्वीघटितधर्मस्य कारणतावच्छेदकत्वे महागौरवात्[१०]।

वर्णसमुदायज्ञानानां तादृशज्ञानजन्यसंस्काराणां वा शाब्दबोधे कारणत्वाङ्गीकारे विशृङ्खलाद् वर्णानां ज्ञानात् संस्काराद् वा शाब्दबोधापत्तिः। यच्च मीमांसकैः ''सोऽयं देवदत्त'' इति प्रत्यभिज्ञानात्मकचाक्षुषप्रत्यक्षं दृष्टान्तीकृत्य श्रवणेन्द्रियजन्यचरमवर्ण-ज्ञानेऽप्यतीतवर्णस्य संस्कारवशाद् भानमुच्यते, तदपि नोचितम्। प्रत्यक्षात्मकप्रत्यभिज्ञाने तद्देशतत्कालरूपा अतीता पूर्वावस्था न स्फुरति, न वा श्रोत्रेण अतीतवर्णावगाहिनी चरमवर्णविषयकप्रतीतिर्जन्यते। तत्र अतीतदेशकालरूपवत्तायाः स्मरणं, चक्षुःसन्निकृष्टेदम्प-दार्थस्य प्रत्यक्षमिति ज्ञानद्वयमेव, न तु तत्ताविशिष्टेदम्पदार्थस्यैकं ज्ञानम्, यतोहि तत्तांशे चक्षुःसन्निकर्षाभावेन चाक्षुषप्रत्यक्षे तत्र तस्य भानम् असम्भवि। इदमंशे चक्षुःसन्निकर्षसत्त्वे सति ज्ञानं, तदभावे न, इत्यन्वयव्यतिरेकात् स्मृतिजनकस्येदम्पदार्थस्याऽनुभवाभावाच्च। अतश्च पृथक् सम्बन्धानाम् आनुपूर्वीरहितानां संस्काराणां प्रत्येकवर्णोच्चारणानां क्रमेण

परस्परानुपूर्वीविशिष्टचरमवर्णज्ञाने शाब्दबोधकारित्वं कारणतावच्छेकं स्फोटत्वम्। तथा च यादृशानुपूर्वीविशिष्टचरमवर्णस्य ज्ञानसत्त्वे तत्तदर्थस्य शाब्दबोधो जायते तादृशज्ञाननिष्ठजाति–विशेष एव स्फोटत्वम्। सा जातिस्तत्तदर्थविषयकशाब्दबोधजनकतावच्छेदकत्वेन सिद्धेति नाऽत्र तत्सद्भावे शङ्कावसर इति।

एवं कविकर्णपूरप्रदर्शितन्यायेन सप्रमाणं स्फोटसिद्धिरिति निर्देशोऽत्र कृतोऽस्माभिः। वस्तुतस्तु समीक्षणमस्य प्रबन्धविषय एवेति सुधीभिस्तथा प्रयासो विधास्यत एव। किञ्च, कविकर्णपूरोऽयं नगेशसमकालिकः सन्नपि ततः पूर्ववर्ती भवितुमर्हति। प्रपञ्चसारतन्त्र–श्रीमद्भागवतादौ च प्राप्तानि स्फोटसाधकतत्त्वानि गौडीयसम्प्रदायोपासकैरुपन्यस्तान्येव नागेशस्य बीजानि, नागेशोपन्यस्तानि वा तत्त्वानि गौडीयानामेतेषामुपजीव्यानीत्यपि समीक्षणीयं प्रसङ्गेऽस्मिन्। यद्यपि महाभाष्यदीपिकादौ उपनिषद्वचनान्युपजीव्य प्रणवरूपत्वं साधितं स्फोटस्य तथापि तत्र तन्त्रप्रभावो न तथाऽवलोक्यत इति तादृशसमीक्षा नितरां सिद्धान्तस्याऽस्याऽपेक्ष्यत एव।

यत्तु प्रत्यक्षाऽर्थापत्योरुपन्यासपूर्वकं स्फोटसद्भावः प्रदर्शितः कविना कर्णपूरेणाऽत्र तन्न शाब्दिकसिद्धान्ताऽनुसारि इति दिक्।

सन्दर्भाः

१. येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति, स शब्दः। अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। महाभाष्यम्, पश्पशाह्निकम्।
२. कविकर्णपूरः अलङ्कारकौस्तुभः,पृ. २१
३. तत्रैव। अस्मिन् विषये "स्फोटसिद्धान्त की अर्वाचीन संवाद परम्परा" इत्यस्म–ल्लेखोऽप्याकलनीयः, उन्मीलने १६.१. अङ्के।
४. लोकनाथचक्रवर्त्तिकृता टीका, तैत्रव
५. तत्रैव, पृ. २४–२५
६. वाक्यपदीये – २–२९ पुण्यराजकृतटीकायाम्?
७. त्रिपाठी, रामप्रसादः, पाणिनीयव्याकरणे प्रमाणसमीक्षा, पृ.२२ भूमिका।
८. तत्रैव, पृ. २९६
९. अलङ्कारकौस्तुभः, पृष्ठ. २९

१०. तथा च गौरवस्य स्वरूपम्– घोच्चारणव्यहितोत्तरटोच्चारणघटितानुपूर्वीशरीरे तदव्यवहितोत्तरत्वं नाम तत्क्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति तत्क्षणध्वंसाधिकरणत्वरूपम्, एतादृशानन्ताव्यहितोत्तरत्वघटितगुरुधर्मस्य कारणतावच्छेदकत्वप्रसङ्गः। एवं "घटेन जलमाहर" इति जले, घटेनाहरेति द्विविधानुपूर्व्यवच्छिन्नस्य कारणत्वे परस्परव्यभिचारवारणाय कारणवैशिष्ट्यमपि कार्यतावच्छेदले निवेशनीयमिति कार्यतावच्छेदकेऽपि महागौरवप्रसङ्गः। टीकायां, पृ. ७८।



# संस्कृत-व्याकरणं प्रति उत्कलीय-वैयाकरण-श्रीवैजलदेव-विरचितायाः प्रबोध-चन्द्रिकायाः-वैजलकारिकायाः अवदानम्

बनमाली बिश्वालः

## भूमिका

संस्कृत साहित्ये एकमपि तादृशं क्षेत्रं नास्ति यत् उत्कलीयैः शास्त्रकारैः काव्यकारैश्च अस्पृष्टं स्यात्। तादृशी शाखा नास्ति यत्र तैः किमपि योगदानं न कृतं स्यात्। वस्तुतः साहित्यस्य प्रत्येकं शाखां प्रति तेषां बौद्धिकमवदानम् उल्लेखयोग्यं वर्तते। यद्यपि काव्य–लेखन–प्रक्रिया शास्त्र–लेखन–प्रक्रिया च उत्कले निरवच्छिन्नतया प्रचलन्त्यौ आस्ताम् तथापि प्रायशः मध्ययुगे एव साहित्य–व्याकरण–कोष–दर्शन–ज्योतिष–धर्मशास्त्र–आयुर्वेद–तन्त्र–सङ्गीतशास्त्र–नाट्यशास्त्रादिषु विविधविषयेषु उत्कलीय–शास्त्रकाराणां प्रभूतं लेखनम् अभवत्। अत एव मध्ययुग एव उत्कलीय–शास्त्रकाराणां कृते सुवर्णयुग आसीदिति ऐतिहासिकाः प्रमाणयन्ति। यद्यपि काव्य–महाकाव्य–गीतिकाव्य–स्तोत्र–नाटक–नाटिका–भाण–पट्टकादिक्षेत्रविशेषेषु उत्कलीय–लेखकानां भूमिका अन्यशास्त्रापेक्षया अधिका वर्तते तथापि धर्मशास्त्र–व्याकरण–कोषादिविषयेष्वपि तेषामवदानम् उपेक्षितुं न शक्यते। द्वादशशताब्दितः एकोनविंशशताब्दिं यावत् अन्यूनाः पञ्चदश उत्कलीय– वैयाकरणाः, नैके कोशकाराश्च स्व–स्व–कृतिभिः भारतीय–संस्कृतसाहित्यं समृद्धं कृतवन्तः। तेषु अधोलिखिताः कृतयः कृतिकाराश्च विशेषरूपेण उल्लेख–मर्हन्ति – पुरुषोत्तमदेवस्य भाषावृत्तिनाम्नी महाभाष्यटीका, कविराज–स्कन्धयारस्य कविकर्पटी, कविराजचन्द्रशेखरमहापात्रस्य भाषार्णवः, लक्ष्मिधरउद्गातुः निर्मलदर्पणनाम्नी प्रक्रियाकौमुदी–टीका, वैद्यनाथ–आचार्यस्य व्याकरणवादार्थदीपिका, वसुप्रहराजस्य वसुप्रक्रियानाम्नी सिद्धान्तकौमुदीटीका तथा सारमञ्जरी च वैजलदेवस्य प्रबोधचन्द्रका अथवा वैजलकारिका, चन्द्रमणिमहन्तस्य शब्दकल्पलता, गोविन्ददासस्य प्रक्रियासारव्याकरणम्, चङ्गदासस्य चङ्गदासकारिका अथवा सम्बन्धोपदेशः, हलधरमिश्रस्य हलधरकारिका, मार्कण्डेयमिश्रस्य प्राकृतसर्वस्वम्, महामहोपाध्यायकृष्णमिश्रस्य

कृष्णमिश्रप्रक्रिया, नरसिंहपट्टनायकस्य शब्दमाला, रघुनाथदासस्य रघुनाथदास–प्रक्रिया, संस्कृतमञ्जरी च तथा चिन्तामणिमिश्रस्य अभिधानसमुच्चयः। एतदतिरिच्य अधोलिखिताः कोषग्रन्थाः अपि उत्कले प्रसिद्धाः अभवन् – पुरुषोत्तमदेवस्य त्रिकाण्डशेषः, हारावली, एकाक्षरकोषः, द्विरेफकोषः, शब्दमाला च, मयूरभञ्जस्य मुग्धबोधाभिधानम्, मुकुन्दमिश्रस्य अनेकार्थमञ्जरी, दैत्यारिदासस्य हरिप्रियानाम्नी अमरकोषटीका, महिधर – मिश्रस्य शिशुबोधिनी, कोषार्थमञ्जरी, नानार्थकोषः तथा शब्दकोषतोला च।

उपर्युक्तेषु व्याकरण–ग्रन्थेषु वैजलदेव–विरचितायाः प्रबोध–चन्द्रिकायाः अथवा वैजल–कारिकायाः स्थानं महत्त्वपूर्णं वर्तते। तस्याश्च कृतेः शास्त्रीयं समीक्षणम् अस्य आलेखस्य आलोच्यविषयः। वैजलदेवस्य त्रीणि नामानि प्रसिद्धानि आसन् – वैजलदवः, वैजलसिंहदेवः[1], वैजलभूपतिश्च[2]। उत्कलप्रदेशस्य पश्चिमे क्षेत्रे पटनाराज्ये लब्धजन्मनः वैजलदेवस्य पितुः नाम विक्रमार्कः[3] आसीत्। 'पटना'[4] इति स्थाननाम्ना भ्रान्तः एच.पी. शास्त्रीयमहोदयः वैजलदेवं विहारप्रदेशीयं प्रमाणायितुं यतते यन्न समीचीनं भाति। यतो हि प्रबोध–चन्द्रिकायामेव स्वयं लेखकेन उक्तम्–

दिग्देशकालयोगे च ग्रामात् पूर्वं स्थितिर्मम।
उत्कलात् पश्चिमं ज्ञेयं पटनाराज्यमुत्तमम्।।[5]

बहवो विद्वांसः[6] सप्तदश–शताब्द्याः पूर्वभागे निवसन्तं पटनायाः चतूर्णां प्रगणानां प्रमुखं वैजलभूपतिं प्रबोधचन्द्रिकायाः लेखकरूपेणापि नाङ्गीकुर्वन्ति। तेषां मतानुसारं इयं कृतिः वैजलभूपतेः सभा–कविना जगमोहनेन वैजलभूपतेः पुत्रं श्रीहिराधरं[7] पाठयितुमेव लिखता आसीत्।

श्रीमान् वैजलभूपालः श्रीहिराधरबालकम्।
सुप्रीतिपरितुष्टात्मा सुतमित्यवदत् पुनः।।[8]

लेखकस्य वैजलदेवस्य मतानुसारं 'प्रबोधचन्द्रिका' कश्चन प्रक्रियाग्रन्थः वर्तते। यद्यपि बहवः प्रक्रियाग्रन्थाः पूर्वमपि आसन् तथापि तैः प्रबोधचन्द्रिकायाः महत्त्वं कथमपि न ह्रीयते इति दम्भोक्तिं पोषयन् लेखकः वदति–

बहवः प्रक्रियाग्रन्थाः सन्ति ते सन्तु का क्षतिः।
मालतीमधुनः क्वापि मधुपानामनादृतम्।।[9]

समीक्षार्थं प्रस्तुत: प्रबोधचन्द्रिकाभिध: व्याकरणग्रन्थ: उत्कलीयेषु कारिकायमय-व्याकरणेषु अन्यतम:। हलधरकारिका चङ्गदासकारिका च अपरे द्वे कारिकामये व्याकरणे उत्कले प्रसिद्ध्यत:। न केवलं बालान् अपि तु प्रौढान् विदुषश्च सरलया रीत्या व्याकरणं शिक्षयितुं वैजलभूपतिना प्रबोधचन्द्रिका लिखिता आसीदिति लेखक: स्वयमेव लिखति–

फलदा बालकानां हि भूयाद् विद्यावतां शुभ।।[१०]

व्याकरणशिक्षणेन सह पुण्यार्जनम् अपि प्रबोधचन्द्रिकाध्ययनेन भवतीति लेखक: स्वमतं द्रढयितुं ग्रन्थे रामायणाद् एव राम–सीता–लक्ष्मण–भरत–हनुमदादिपात्राणि उदाहरणरूपेण उपस्थापयति। अधोलिखितयो: कारिकयो: स्पष्टमुक्तमस्ति यत् संसारसागरतरणं, अज्ञानान्धकारनाशश्चेति प्रयोजनद्वयमनेन व्याकरणेन सिद्ध्यति।

संसाराम्भोधितरणं रामनामानुकीर्तनम्।
रामनामान्विता तस्मिन् प्रक्रिया क्रियते मया[११]।।
प्रबोधचन्द्रिका नाम रामनामसमाश्रिता।
अज्ञानतिमिरध्वंसकारिणी दु:खहारिणी।।[१२]

लेखक: नैष्ठिको रामभक्त: आसीत्। अत एव बहुषु स्थलेषु अन्यपात्रापेक्षया स: श्रीराममेव उदाहरणरूपेण चितवान्। विभक्तिशिक्षणप्रसङ्गे तेन एकं रामपदम् अधिकृत्य सप्तविभक्तीनाम् उदाहरणानि प्रदत्तानि–

रामो मेऽभिहितं करोतु सततं रामं भजे सादरम्
रामेणापहृतं समस्तदुरितं रामाय दत्तं धनम्।
रामान्मुक्तिरभीप्सता सरभसं रामस्य दासोऽस्म्यहम्।
रामे रज्जतु मे मन: करुणया हे राम ! मां पालय।।[१३]

प्रबोधचन्द्रिकाया: एतदुदाहरणम् अस्मिन् प्रसङ्गे अपरमेकम् एतादृशं प्रसिद्धम् उदाहरणं स्मारयति–

रामो राजमणि: सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नम:।

रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहम्
रामे चित्तलयं सदा भवतु मे भोः राम! मामुद्धर।'

यद्यपि लेखकः वैजलभूपतिः रामभक्तः एव आसीत् तथापि सः शिवविरोधी नासीत्। एकस्यां कारिकायां तेन प्रतिपादितं यत् सः उभयोः हरिहरयोः उपासकः आसीत्—

हरिहरगुरुभक्तः सर्वलोकानुरक्तः ।
त्रिभुवनगतकीर्तिः कान्तिकन्दर्पमूर्त्तिः।।
रणरिपुगणकालो वैजलक्षोणिपालो।
जयति जगति दाता सर्वकर्माविधाता।।'

वस्तुतः व्याकरणशिक्षणप्रसङ्गे देवतानामानि उदाहरणरूपेण प्रयोक्तुं वैजलभूपतिः प्रथमः नासीत्। तस्मात् पूर्वं वोपदेवजीवगोस्वामीत्यादिभः वैयाकरणैः अपि स्वकीये मुग्धबोधव्याकरणे, हरिनामामृतव्याकरणे च विष्णु—शिवादयः देवाः उदाहरणरूपेण प्रयुक्ताः।

## विषयवर्गीकरणम्

४६७—कारिकासु निबद्धः प्रस्तुतः ग्रन्थः सप्तचन्द्रिकासु विभक्तोऽस्ति। यथा— १. विभक्तिचन्द्रिका (स्वादिचन्द्रिका, त्यादिचन्द्रिका च), २. कारकचन्द्रिका, ३. अनुक्तचन्द्रिका, ४. समासचन्द्रिका, ५. तद्धितचन्द्रिका, ६. कृदन्तचन्द्रिका तथा ७. सन्धिचन्द्रिका च। एतासु सप्तचन्द्रिकासु प्रथमा विभक्तिचन्द्रिका स्वादिचन्द्रिका—त्यादिचन्द्रिकेति चन्द्रिकाद्वयेन विभक्ता। वस्तुतः विषयदृष्ट्या सम्पूर्णो ग्रन्थः नवधा विभक्तुं शक्यते—

| | | |
|---|---|---|
| १. | प्रस्तावना | ३६ कारिकाः (१—३६) |
| २. | स्वादि—चन्द्रिका | ६० कारिकाः (३६—९७) |
| ३. | त्यादि—चन्द्रिका | ३२ कारिकाः (१—३२) |
| ४. | कारक—चन्द्रिका | ५५ कारिकाः (१—५५) |
| ५. | अनुक्त—चन्द्रिका (प्रकीर्ण) | ९४ कारिकाः (१—९४) |
| ६. | समास—चन्द्रिका | ४० कारिकाः (१—४०) |
| ७. | तद्धित—चन्द्रिका | ४० कारिकाः (१—४०) |

८. कृदन्त–चन्द्रिका ३७ कारिका: (१–३७)

९. सन्धि–चन्द्रिका ७२ कारिका: (१–५५)

सामान्यतया प्राय: सर्वेषु प्रक्रियाग्रन्थेषु सन्धिप्रकरणम् आरम्भे एव योज्यते परन्तु प्रबोधचन्द्रिकायाम् तत् प्रकरणम् अन्तिमम् अस्ति। अस्मिन् ग्रन्थे तु विभक्तय: (स्वादि+त्यादि) प्रारम्भे एव उपदिश्यन्ते। तस्य औचित्यं दर्शयितुं लेखक: वदति–

विभक्तिज्ञानतो यस्मात् प्रबोध: प्रतिपद्यते।
तस्मादिह प्रथमतो विभक्ति: प्रतिपद्यते।।[६]

## १. प्रस्तावना

प्रस्तावनाया: ३६–कारिकासु ग्रन्थस्य अवतरणं प्रस्तुतम् अस्ति। ग्रन्थस्य आरम्भे तादृश्य: विद्या: वर्णिता: सन्ति या: राज्याभिषेकात् पूर्वं राजपुत्रा अपि पठेयु:। तासां विद्यानामध्ययने क: क्रमो भवेत् इत्यपि विचार: तत्र वर्तते। अस्यां प्रस्तावनायां राजोचितै: गुणै: सह व्याकरणाध्ययनस्य प्रयोजनान्यपि सम्बद्धानि सन्तीति तथ्यं प्रतिपादितमस्ति। अत्र स्वकीयमभिमतं प्रस्तुवता ग्रन्थकृता प्रतिपादितमस्ति यत् राजान: पूर्वं व्याकरणं पठेयु: अनन्तरं नीतिशास्त्रम्। व्याकरणाध्ययनस्य महत्तरं प्रयोजनं समर्थयितुं ग्रन्थकार: वदति व्याकरणं विना वाणी तथा न शोभते यथा भर्तारं विना रमणी। सम्पूर्णस्यास्य भागस्य सार: अधोलिखताभि: कारिकाभि: उपस्थापयितुं शक्यते–

विना व्याकरणं वाणी रमणी रमणं विना
सुविवेकं विना लक्ष्मीर्न सुखाय कदाचन।
तस्माद् व्याकरणं पूर्वं पठ त्वं बुद्धिवृद्धये।
पश्चान्नीतिं पठित्वा त्वं राज्यं भज यथासुखम्।।[७]
क्रियाकारकविज्ञानान्नीति: सम्यग् विविच्यते।
स्वादि–त्यादि–विभक्ततो दृष्टि: शाब्दी विवर्द्धते।
क्रियाकारकसम्बन्धाद् ज्ञानमुत्पद्यते यथा।
उत्कृष्टा प्रक्रिया सेयं त्वया सम्प्रति पठ्यताम्।।[८]

## २. स्वादिचन्द्रिका (विभक्ति–चन्द्रिका)

वैजलभूपतिना स्वादि–त्यादीति भेदेन विभक्ति द्विधा विभक्ता *स्वादित्यादिर्विभक्ती द्वे*।[१९] प्रत्याहारव्यवस्थामाश्रित्य पाणिनिना 'सुप्–तिङ्' इति प्रत्याहारबलेन सर्वेषां सुबन्त–तिङन्त–प्रत्ययानाम् उपदेश: विहित:, परन्तु वैजलभूपते: पद्धतौ प्रत्याहारव्यवस्था एव नासीत्। अत एव तेन स्वादि (सु+आदि) त्यादि (ति+आदि) इत्येवंविधं व्यवस्थाप्रणयनं कृत्वा विभक्ति–प्रत्यया: निर्दिष्टा:। स्वादौ प्रथमा–द्वितीया–तृतीया–चतुर्थी–पञ्चमी–षष्ठी–सप्तमीतिसंज्ञका: सप्तविभक्तय: तेषाम् एक–द्वि–बहु–संज्ञानि त्रीणि त्रीणि वचनानि च अन्तर्भूतानि भवन्ति। एवम् आहत्य स्वादि–प्रत्यया: एकविंशतिसंख्याका: भवन्ति। अयं च भाव: ग्रन्थोक्तेन अधोलिखितेन कारिकाद्वयेन वर्णितोऽस्ति–

..................स्वादौ सप्तविभक्तय:।  
एक–द्वि–बहु–संज्ञानि वचनानि च सप्तसु:।।  
प्रथमा च द्वितीया च तृतीया च यथाक्रमम्।  
चतुर्थी पञ्चमी षष्ठी सप्तमी चेति ता: क्रमात्।।[२०]

तत: पञ्चदशकारिकासु लेखक: वाक्यव्यवहारप्रसङ्गे विभक्ति–प्रयोग–नियमान् सोदाहरणान् दर्शयति। अस्यैव परिच्छेदस्य ५५ तमकारिकत: आरम्य ९२–तमां कारिकां यावत् स: प्रक्रियाग्रन्थ–सरिणमनुसृत्य कारक–प्रकरणसम्बद्धान् प्रमुखान् व्याकरण–नियमान् एकत्र उपदिशति। कारक–प्रकरणस्य उपपद–विभक्ति–सम्बद्धा: विषया: अस्यां चन्द्रिकायां प्रदत्ता: उदाहरणार्थं यथा–

शीङ्स्थासामधिपूर्वाणामाधार: कर्म तद्यथा।  
अधिशेते वनं रामो ह्यध्यास्ते वाऽधितिष्ठति।।[२१]  
अन्तरान्तरेण योगे द्वितीया स्याद् विनाऽपि च।  
न मुक्तिर्जायते राममन्तरेणान्तरा विना।।  
समया–निकषा हाधिगुपर्यध्यधसमापि।  
आङ: संयोगेऽपि भवेद् द्वितीया समुदाहृता।।  
काननं समया रामो निकषा भरत: पुरीम्  
हा सीते विपिने शून्ये रावणं धिग् जहार य:।[२२]

## ३. त्यादि–चन्द्रिका (विभक्ति–चन्द्रिका)

त्यादि–परिच्छेद: प्रथमपुरुष–मध्यमपुरुष–उत्तमपुरुषादि–पुरुषव्यवस्थया आरभ्यते। अस्मिन्नपि प्रकरणे त्रयाणामेव पुरुषाणाम् एक–द्वि–बहु–संज्ञानि त्रीणि त्रीणि वचनानि भवन्तीति प्रतिपाद्यते ग्रन्थकारेण। एवम् एकस्य धातो: नव क्रियापद–प्रत्यया: भवन्ति–

त्रय: स्यु: पुरुषास्त्यादे: प्रथमो मध्यमोत्तमौ।
एक–द्वि–बहु–संज्ञं च त्रिपु स्याद्...।।[3]

'तिप्–तस्–झि–सिप्–थस्–थ–मिप्–वस्–मस्' इत्यादि नव परस्मैपदिन: प्रत्यया:, 'त–आताम्–झ–थ–आथाम्–ध्वम्–इट्–बहिङ्–महिङ्' इत्यादि नव आत्मनेदिन: प्रत्यया: भवन्ति। सर्वमाहत्य अष्टादश क्रियापद–प्रत्यया: भवन्ति–

त्यादिनां नवपूर्वार्धं परस्मैपदमुच्यते।
उत्तरार्द्धं नव ज्ञेयमात्मनेपदसंज्ञकम्।।[4]

पूर्वार्ध–नव–प्रत्यया: परस्मैपदिन:, उत्तरार्द्ध–नवप्रत्यया: आत्मनेपदिन: इति उभयविधधातो स्थूलं लक्षणं ग्रन्थकृता प्रस्तुतम्। एषु परस्मैपदिन: प्रत्यया: कर्तृवाच्ये प्रयुक्ता: भवन्ति तथा आत्मनेपदिन: प्रत्यया: भाववाच्ये, कर्मवाच्ये कर्तृवाच्ये च प्रयुक्ता: भवन्ति–

परस्मैपदमादिष्टं धातो: कर्तरि केवलम्।
यथा खादति रामोऽयं लक्ष्मणेन सहौषधम्।।
आत्मनेपदमादिष्टं भावे कर्मणि कर्तरि।
तत्र भावे यथाऽरण्ये रामेण तत्र शीयते।।
यथा कर्मणि रामेण जीयते शत्रुरुद्धत:।
यथा कर्तरि रामस्य शोभते मुखमिन्दुवत्।।[5]

धातवो द्विविधा: भवन्ति – सकर्मका: अकर्मकाश्च। सकर्मकेषु धातुषु त्यादिप्रत्ययानां प्रयोग: कर्मणि, कर्तरि च भवति। अकर्मकेषु धातुषु त्यादिप्रत्ययानां प्रयोग: कर्तरि भावे च भवति –

सकर्मकाः कर्महीनाः धातवो द्विविधाः मताः।
सकर्मकाणां धातूनां त्यादिकर्मणि कर्तरि।।
अकर्मकाणां धातूनां भावे कर्तरि जायते।।

## ४. कारकचन्द्रिका

ग्रन्थेऽस्मिन् कर्तृ–कर्म–करण–सम्प्रदान–अपादान–अधिकरण–संज्ञकानां षट्कारकाणां चर्चा भवति। अधिकरणकारकस्य कृते लेखकेन आधार–शब्दस्य प्रयोगः कृतः। मन्ये छन्दोदृष्ट्या कारिकायाम् आधार–शब्दः एव उचितः स्यात्।

अथ षट्कारकाण्याहुः कथ्यन्ते कथितान्यपि।
ततः सप्तविभक्तीनां कारकत्वेन दर्शिताः।।
कर्ता कर्म करणं च सम्प्रदानं तथैव च।
अपादानं तथाधार इति षट्कारकाणि वै।।

कारकप्रकरणे ग्रन्थकारः किमपि नूतनं तथ्यं प्रस्तौति इति न। पूर्वसूरिभिः प्रतिपादितं सिद्धान्तमेव सः सरलया रीत्या उपस्थापयति। अत्र कारकाणां ये उपभेदाः दर्शिताः, ते एव अस्य ग्रन्थस्य वैशिष्ट्यं सूचयन्ति। सम्बन्धस्य कारकत्वं निराकर्तुं स वदति–

सम्बन्धस्य न शब्दज्ञैः कारकत्वमिहोच्यते।

क्रियान्वयित्वं कारकत्वम् इति प्रसिद्धं कारकस्य लक्षणमपि वैजलेन अनुमतम्। अत एव तेन 'साक्षात् क्रियाभिः सम्बन्धः' इति कारकलक्षणं विहितं स्वग्रन्थे–

साक्षात् क्रियाभिः सम्बन्धः कारकं हि विदुर्बुधाः।।

न केवलं कारकसामान्यस्य अपि तु सर्वेषां षट्कारकाणां लक्षणानि अपि ग्रन्थकृता विहितानि सन्ति अस्मिन् ग्रन्थे–

सः कर्ता यः क्रियां साक्षादुत्पादयति सर्वत्र।
तत्कर्म क्रियया यत्तु विषयीक्रियततेराम्।।

क्रिया निष्पद्यते येन करणं तदुदाहृतम्।
सम्प्रदानं तदैव स्याद् यस्मै सम्यक् प्रदीयते।।
यदपादीयते नूनं तदपादानमुच्यते।
यत्रैव धीयते सर्वं स एवाधार उच्यते।।[30]

एतानि षट्कारकाणि अपि पुनः केषुचित् उपभेदेषु विभक्तानि सन्ति ग्रन्थकृता। ते च उपभेदाः आहत्य त्रयोविंशति–संख्याकाः भवन्ति। तेषाम् उपभेदानां नामानि, लक्षणानि, उदाहरणान्यपि अस्मिन् ग्रन्थे ४५–कारिकासु (४.६ तः ४.५१ यावत्) वर्णितानि सन्ति। वैजलस्य समग्रं कारकचक्रम् इत्थं प्रस्तोतुं शक्यते–

१. **कर्तृकारकम्** पञ्चविधम्। क्रमशः तेषां नामानि, लक्षणानि, उदाहरणानि च यथा पुस्तके उपलभ्यन्ते अत्र प्रस्तूयन्ते–

(i) स्वतन्त्रः कर्ता – क्रियासु निरपेक्षः यथा – रामं भजामि।
(ii) हेतु–कर्ता – यः कुर्वन्तं कारयेत् – यथा सीता रामं वनं यापयति।
(iii) कर्म–कर्ता – यथा – ओदनं पच्यते स्वयम्।
(iv) उक्तः कर्ता – यथा – रावणं हन्ति।
(v) अनुक्तः कर्ता – यथा – रामेण हन्यते रिपुः।

२. **कर्मकारकम्** – त्रिविधम्। क्रमशः तेषां नामानि, लक्षणानि, उदाहरणानि च यथा पुस्तके उपलभ्यन्ते अत्र प्रस्तूयन्ते–

(i) निवर्त्यम् – यत् पूर्वमनिवृत्तम् – यथा – घटयामि सुवर्णान्।
(ii) कार्यम् – यद् विक्रितं क्रियते – यथा – रामः काण्डं लुनाति।
(iii) प्राप्यम् – पञ्चविधम् – ईप्सितम्, अनीप्सितम्, उभयम्, कथितम्, अकथितम् च।

३. **करणकारकम्** – द्विविधम्। क्रमशः तयोः नामलक्षणोदाहरणानि यथा पुस्तके उपलभ्यन्ते अत्र प्रस्तूयन्ते–

(i) आभ्यन्तरम् – शरीरावयवादियत्तदाभ्यन्तरमुच्यते – यथा – रामं मानसेन भजामि।

(ii) बाह्यम् – तदभिन्नं बाह्यमाख्यातम् – यथा – अयोध्यां दोलया याति

४. **सम्प्रदानकारकम्** – त्रिविधम्। क्रमशः तेषां नामानि, लक्षणानि, उदाहरणानि च यथा पुस्तके उपलभ्यन्ते अत्र प्रस्तूयन्ते –

(i) प्रेरकम् – यथा – मुक्तिं भक्ताय रामोऽसौ ददाति, मह्यं मुक्तिं प्रदेहि।

(ii) अनुमन्त्रकम् – यथा रामाय फलमूले दत्ते।

(iii) अनिराकर्तृकम् – यथा पञ्चोपचारं रामाय भक्तलोकः प्रयच्छति।

५. **अपादानकारकम्** – द्विविधम्। क्रमशः तयोः नामलक्षणोदाहरणानि यथा पुस्तके उपलभ्यन्ते अत्र प्रस्तूयन्ते –

(i) चलम् – यथा – चलापाङ्गाद्धि नारीणां निर्याति विषमं विषम्

(ii) अचलम् – यथा – अचलं च यथा वृक्षात् पत्रं रामे पतत्यधः। हिमाद्रेरागता गङ्गा समुद्रादुत्थितं रत्नम्।

६. **आधारकारकम्** – चतुर्विधम्। क्रमशः तेषां नाम–लक्षणोदाहरणानि यथा पुस्तके उपलभ्यन्ते अत्र प्रस्तूयन्ते–

(i) व्यापाकम् – यथा – रामभक्ते भवेन्मुक्तिः।

(i) औपश्लेषिकम् – यथा – रामः सिंहासने स्थितः।

(i) वैषयिकम् – यथा – वने वसति सिंहः।

(i) सामीपिकम् – यथा – गङ्गायां वसति स्वयम्।

## ५. अनुक्तचन्द्रिका (प्रकीर्णम्)

अनुक्तचन्द्रिकायां प्रतिपादिताः विषयाः विविधाः सन्ति। ते च विषयास्तत्र वर्गीकृताः न दृश्यन्ते। परन्तु अस्य परिच्छेदस्य मनोहरत्वं स्वयं लेखकेन अङ्गीकृतमस्ति–

प्रबोधचन्द्रिकायां च कृतौ वैजलभूपतेः।
अनुक्तचन्द्रिका सम्यक् समाप्ता हि मनोहरा।।[31]

अयं परिच्छेदः न कमपि विषयविशेषं प्रस्तौति। व्याकरणस्य बहवः सामान्यविषयाः अत्र प्रतिपादिताः सन्ति। अतः अत्र प्रतिपादिताः विषयाः एकस्मिन् विषयविन्दौ एकस्मिन् नियमविशेषे वा स्थापयितुं न शक्यन्ते। अत एव लेखकेन अस्यं परिच्छेदस्य नाम सम्भवतः 'अनुक्तचन्द्रिका' इति कृतं स्यात्। विषयवैविध्यं दृष्ट्वा अस्मिन् आलेखे अस्य परिच्छेदस्य नाम प्रकीर्णम् इति विहितम्।

आरम्भे लेखकेन कृत्—तद्धित—समासानां प्रसङ्गे लिङ्ग—वचन— विभक्ति—व्यवस्था निर्दिष्टा। तस्य मतानुसारं कृत्—तद्धित—समासेषु लिङ्गत्रयं सम्भवति। कृदन्तस्य उदाहरणं यथा — *रामोऽसौ कारकः सीता कारिका कारकं कुलम्* ।[32] तद्धितस्य उदाहरणं यथा — *वैयाकरणः, वैयाकरणी, वैयाकरणम् च।*[33] समासस्य उदाहरणं यथा — *कृतप्रणामः, कृतप्रणामा, कृतप्रणामम् च* ।[34] विशेष्याणां लिङ्ग—विभक्ति—वचनानि विशेषणपदेषु अपि योज्यन्ते।

विशेष्यस्य हि यल्लिङ्गं विभक्तिवचनं च यत्।
तानि कार्याणि योज्यानि विशेषणपदे बुधैः।।[35]

सख्याविषये स्वाभिमतं स्पष्टीकुर्वन् ग्रन्थकारः वदति — विंशत्यादि—संख्यानां प्रयोगः सर्वदा एकवचने एव भवति — *विंशत्याद्याः सदैकत्वे*।[36] समुच्चयप्रसङ्गे किन्तु एक—द्वि—बहुवचनानां प्रयोगार्थं विकल्पः प्रस्तुतः लेखकेन। यथा —

श्रीरामश्च सीता चैव वनं गच्छति गच्छतः।
रामश्च लक्ष्मणश्चापि भरतश्च प्रयान्ति हि।।
प्रयाति वा पुरीं स्वीयां जेता जेतार एव च।।[37]

समुच्चयप्रसङ्गे वाक्ये प्रयुक्तेनअन्तिमपुरुषेणैव पुरुष—व्यवस्थायाः नियमनं भवति। तथा चोक्तं ग्रन्थकारेण—

पुरुषेषु त्रिषु भवेद्य एव पुरुषः परः।
समुच्चये, स एव स्यात् सख्या चापि तदाश्रिता।।

यथा रामश्च सीता च गच्छतो निर्जनं वनम्।
रामं त्वमहमित्यनुगच्छावो गुरुशासनात्॥

परन्तु उपर्युक्तस्य नियमस्य कश्चन अपवादोऽपि वर्तते। यदि वाक्ये उत्तमपुरुषस्य कश्चित् कर्ता भवेत् तर्हि क्रमम् अविगणय्य उत्तमपुरुषानुसारमेव क्रियापदं प्रयोक्तव्यम्। यथा –

अहं च त्वं रामश्च गच्छामो निर्जनं वनम्।
प्रथमादिक्रमादेव व्युत्क्रमो वादितोऽपि च॥

अभिव्यक्तिप्रसङ्गे सामान्यत: प्रयोगस्त्रिविधो भवति – मुख्य: गौणो लाक्षणिकश्च। मुख्यप्रयोगे पदानि स्वार्थे प्रयुक्तानि स्यु:, गौणप्रयोगे पदानाम् अभिधार्थ: (स्वार्थ:) गौण: भवेत्, लाक्षणिकप्रयोगे तु प्रयुक्तानां पदानाम् अभिधार्थ: पूर्णरूपेण त्यक्तो भवति। तत्र अभिव्यक्ते: अभीष्टोऽर्थ: लक्षणया बुध्यते। लक्षणाऽपि द्विविधा भवति जहत्स्वार्था अजहत्स्वार्था च। जहत्स्वार्थायां पदानाम् स्वार्था: पूर्णरूपेण त्यज्यन्ते, कश्चन अतरिक्तोऽर्थश्च बुध्यते। अजहत्स्वार्थायां तु पदेभ्य: स्वार्थसम्बलित: अतरिक्तोऽर्थ: बुध्यते।

मुख्य: गौणो लाक्षणिक: प्रयोगस्त्रिविधो भवेत्।
मुख्य: स्वार्थेन सम्पन्नो यथाऽत्त्यन्नं रघूद्वह:॥
गुणयोगाद् भवेद् गौणौ रामक्रोधो विषं महत्।
खरं प्रति यथा रामो रामश्च रावणं प्रति।
स्वार्थान्वयस्य रोधेन तात्पर्यस्यानुरोधत:।
लक्षणा कल्पते साऽपि द्विविधा स्यात् प्रयोगत:॥
जहत्स्वार्थाऽजहत्स्वार्था तत्राद्या कथ्यते मया।
रामो वसति यथाब्धौ यमुायां जनार्दन:॥
यत्र स्वार्थपरित्यागोऽजहत्स्वार्था च सा यथा॥
छत्रिणो यान्त्यमी काशीं काकेभ्यो दधि रक्ष्यताम्॥

## ६. समासचन्द्रिका

वैजलदेवेन तत्पुरुष–कर्मधारय–बहुव्रीहि–द्विगु–द्वन्द्व–अव्ययीभावादिभेदैः समासः षड्धा विभक्तः।[61] पुनः पञ्जलिसरणिम् अनुसृत्य पदार्थप्राधान्यम् आधारीकृत्य च तेन समासस्य चतुर्विधत्वमपि प्रोक्तम्। यथा –

द्विगुर्द्वन्द्वाव्ययीभावः प्राधान्यं च चतुर्विधम्।
पूर्वोत्तरोभयान्यानां पदार्थानां विकल्पनात्।।[62]

पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्वः इत्येतादृशी व्यवस्था पतञ्जलिना महाभाष्ये कल्पिताऽस्ति।[63] प्रसङ्गेऽस्मिन् वैजलदेवस्य किमपि वैशिष्ट्यमपि द्रष्टुं शक्यते। तस्य मतानुसारं अव्ययीभावसमासः त्रिप्रधानो भवति, तत्पुरुष–बहुव्रीहि–कर्मधारयाः द्विप्रधानाः, द्विगु–द्वन्द्वौ च द्विप्रधानौ भवतः। ग्रन्थकारस्य समासव्यवस्था सामग्रिकरूपेण इत्थं प्रस्तोतुं शक्यते–

१. तत्पुरुषः – द्विप्रधानः (पूर्वपदार्थः+उत्तरपदार्थः) – यथा – परकायः, नीलोत्पलम्।
२. कर्मधारयः – द्विप्रधानः (पूर्वपदार्थः + उत्तरपदार्थः) – यथा – पुरुषसिंहः, नीलोत्पलम्।
३. बहुव्रीहिः – द्विप्रधानः (अन्यपदार्थः + उभयपदार्थः) – यथा – स्मृतरामोऽहम्, द्वित्राः, पञ्चषाः।
४. द्वन्द्वः – एकप्रधानः (उभयपदार्थः) – यथा रामलक्ष्मणौ।
५. द्विगुः – एकप्रधानः (उभयपदार्थः) यथा – त्रीमूली, प[illegible]ुली इत्यादयः।
६. अव्ययीभावः – त्रिप्रधानः (पूर्वपदार्थः + उत्तरपदार्थ + अन्यपदार्थः) – यथा – उपरामम्, सुखंप्रति, उन्मत्तमगङ्गम् च।

एवमनुभूयते यद् वैजलदेवः कौण्डभट्टादीनां नवीनानां वैयाकरणानां समासनिष्ठ–लक्षण–भेदादिविचारविषयेऽपि पूर्णः सचेतनः आसीत्। यैः पतञ्जलि–प्रतिपादित–पूर्वपदार्थप्रधान–उत्तरपदार्थप्रधानादिलक्षणप्रसङ्गे अव्याप्ति–अतिव्याप्ति–असम्भवादिदोषाः प्रदर्शिताः। तांश्च दोषान् निराकर्तुं कदाचिद् ग्रन्थकारेण समास–लक्षणप्रसङ्गे एक–प्रधान–द्विप्रधान–त्रिप्रधानरूपा कल्पना कृता स्यात्। समासानां क्रमविधानप्रसङ्गेऽपि ग्रन्थकारः

अव्ययीभावसमासम् अन्ते किमर्थं परिगणयतीति अस्माद् ग्रन्थात् स्पष्टं न भवति। मन्ये अत्रापि कारिकानिर्माणे छन्दोभङ्गादिदोषान् दूरीकर्तुं तेन अयं क्रमः निश्चितः स्यात्।

अस्मिन्नेव ग्रन्थे ग्रन्थकारेण समासस्य कश्चन अन्यथाविभागोऽपि प्रस्तुतः। समासस्य चतुर्धा–विभजनमपि अत्र द्रष्टुं शक्यते – १. नित्यः (यथा कुम्भकारः), २. अनित्यः (यथा राजपुरुषः), ३. लुक् (यथा पुरुषपुङ्गवः), तथा ४. अलुक् (यथा कण्ठेकालः) च।

समासानां पुनश्चैषां चातुर्विध्यं निगद्यते।
स्यान्नित्यत्वमनित्यत्वं लुकं चालुकमेव च॥"

एतदतिरिच्य अत्र समासानां केचन उपविभागाः अपि कल्पिताः सन्ति –

१. तत्पुरुषस्य अष्टौ भेदाः – प्रथमा–द्वितीया–तृतीया–चतुर्थी–पञ्चमी–षष्ठी–सप्तमी–नञ् इति भेदात्
२. कर्मधारयस्य सप्तभेदाः – विशेषणपूर्वपद–विशेषणोत्तरपद–विशेषणो–भयपद–उपमानपूर्वपद–उपमानोत्तरपद–अवधारणापूर्वपदादिभेदात्।
३. बहुव्रीहेः भेदद्वयम् – द्विपद (प्रथमां विहाय षड् विभक्तीनां षड्भेदाः) बहुपदभेदात्
४. द्विगोः भेदद्वयम् – एकवद्भावी (यथा पञ्चमूली) अनेकपदभावि (यथा त्रिलोकाः) इति भेदात्
५. द्वन्द्वस्य भेदचतुष्टयम् – समुच्चय–अन्वाचय–इतरेतरयोग–समाहारादिभेदात्
६. अव्ययीभावस्य भेदद्वयम् – नामपूर्वपद (यथा प्रतिगृहम्) – अव्ययपूर्वपद (यथा उपतोरणम्) इति भेदात्।

## ७. तद्धितचन्द्रिका

सम्पूर्णः तद्धितपरिच्छेदः सामान्यवृत्ति–अव्ययसंज्ञ–भावार्थ–वाचकादिभेदात् त्रिधा विभक्तः–

तद्धितास्त्रिविधा ज्ञेयाः केचित् सामान्यवृत्तयः।
केचिदव्ययसंज्ञाश्च केचिद् भावार्थवाचकाः॥"

एषु भेदेषु सामान्यवृत्तिभेदः व्यापको वर्तते यस्मिन् 'तदस्यास्ती' त्याद्यर्थे मतुप्–प्रत्ययः 'तस्यापत्यम्, तदस्य जातम्' इत्याद्यर्थे अणदि–प्रत्ययः, तरप्–प्रत्ययादयश्च अन्तर्भूक्ताः भवन्ति। 'यत्र–तत्र–अधुने'त्यादीनि अव्यय–पदानि अव्ययसंज्ञतद्धितस्य उदाहरणरूपेण, 'पटुता–गरिमा' इत्यादीनि पदानि भावार्थवाचकताद्धितस्य उदाहरणरूपेण उदाहृतानि सन्ति।

## ८. कृदन्तचन्द्रिका

सामान्यतः भावार्थे, कर्मार्थे, कर्त्रर्थे, च कृत्–प्रत्ययाः भवन्ति–

कृतस्त्रिष्वपि वर्तन्ते भावे कर्मणि कर्तरि।[६६]

ग्रन्थे 'विजय–विनय–नम–दम–पचन–ज्ञान–मुक्ति–भुक्तीत्यादीनि कृदन्तपदानि भावार्थवाचकस्य उदाहरणरूपेण उदाहृतानि।[६७] ग्रन्थकारेण कर्म 'सकर्मकर्म–भावकर्म'–भेदेन द्रिधा विभक्तम्'। तीर्णः, निर्जितः इत्यादीनि पदानि ग्रन्थे प्रयुक्तानि सकर्म–कर्मणः उदाहरणानि।

सकर्मकर्मणि यथा तीर्णो रामेण सागरः।
निर्जितो रावणो वैरी सीता नीता पुरीं निजाम्।।[६८]

ग्रन्थे प्रयुक्तानि भावकर्मणः उदाहरणानि यथा –

भावे यथा कर्मकेभ्यः स्थितं रामेण काननम्।
सुप्तो राजा निशि सदा रमितं तेन सीतया।।[६९]

कर्त्रर्थे, कर्मार्थे भावार्थे च कृदन्तस्य उदाहरणानि प्रस्तुवन् ग्रन्थकारः वदति–

अयोध्या च गतो रामः कर्तरीत्यादि गम्यताम्।
तव्यादयः कर्मणि स्युर्भावे च निवसन्त्यमी।।[७०]

## ९. सन्धिचन्द्रिका

सन्धिप्रकरणे ग्रन्थकृता न किमपि वैशिष्ट्यमाचरितमिति भाति। अस्य प्रकरणस्य

कारिकासु स्वरसन्धि–प्रकृतिभाव–व्यञ्जनसन्धि–विसर्गसन्धीत्यादीनां चतुर्णां सन्धिभेदानां सारभूता: नियमा: उदाहरणानि च प्रतिपादितानि सन्ति। यणसन्धि:[1] (यथा रामवार्यस्ति, जानक्येषा), गुणसन्धि:[2] (यथा अद्योढा), वृद्धि–सन्धिश्च[3] (यथा स्वैरम्, स्वरिणी) स्वरसन्धिविभागे चर्चिता: सन्ति। प्रकृतिभावश्च उदाहरणरूपेण 'सीते आगच्छ'[4] इति उदाहरणं ग्रन्थकारेण कल्पिमस्ति। अस्मिन् ग्रन्थे प्रकृतिभावस्य कृते 'प्रकृतिवद्भाव' इति शब्द: प्रयुक्त: वर्तते।

वस्तुत: ग्रन्थकारस्य सन्धिविधानपद्धति: अतीव सरला वर्तते। तेन केषुचन स्थलेषु नियमविशेषप्रणयनपुर:सरं सन्धि: निर्दिष्ट:। यथा व्यञ्जनसन्धिप्रसङ्गे ग्रन्थकार: वदति यद् घोषवति स्वरे परे वर्गप्रथम: वर्गतृतीये परिवर्तितो भवति इति। परन्तु वर्गस्य पञ्चमे वर्णे परे सति वर्गप्रथम: विकल्पेन वर्गतृतीये अथवा वर्गपञ्चमे परिवर्तितो भवति।

वर्गप्रथमं वर्गाणां पदानां च तृतीयका।
घोषवत्सु स्वरे चैव भवन्ति हि न संशय:।।
पञ्चमे पञ्चमा वा स्युस्तृतीया वेति या वेति।[1]

चवर्गे, टवर्गे, लकारे च पर तवर्गस्य पररूपत्वम् ईष्यते–

चवर्गे च टवर्गे च लकारे च तथापरे।
पररूपं तवर्गस्य कथ्यते तदुदाहृति:।।[3]

विसर्गसन्धौ विसर्जनीयस्य पररूपं विकल्पेन भवति–

विसर्ग: पररूपत्वं भजति हि विभाषया।[4]

च–छ–कारयो: परे विसर्जनीयस्य शकार: भवति तथा ट–ठकारयो: परे विसर्जनीयस्य षकार: भवति। ''रामो हसति, रामोऽयम्' इत्यादिषु विसर्जनीयस्य उत्वं भवति।

चछयो: शकारो यथा रामश्चरति काननम्।[6]
टे ठे षकारश्च यथा रामष्टिकाविशारद:।[7]
रामो हसति रामोऽयमित्यादौ चोत्वमिष्यते।।[8]

निष्कर्ष:

१. अभिनवोऽयं उत्कलीय: कारिकामय: प्रक्रियाग्रन्थ: यथा बालकानाम् अव–बोधार्थम् उपयोगी तथा विदुषां व्याकरणज्ञानपुष्ट्यै अपि उपयोगी प्रतीयते। तथ्यमिदं स्वयमेव ग्रन्थकारेणापि प्रतिपादितम् –

अथ बालकबोधार्थं सम्यक् सान्धिनिगद्यते।[३]
फलदा बालकानां हि भूयाद् विद्यावतां शुभा।[४]

२. अयं च व्याकरणग्रन्थ: प्रामुख्येन उदाहरणपरको वर्तते।

३. पुस्तकस्थानि सर्वाणि उदाहरणानि राम–सम्बद्धानि अथवा रामकथा–सम्बद्धानि सन्ति।

४. अस्य ग्रन्थस्य कारिकामयस्वरूपं शिशुक्षु–पाठकानां सुखाय भवति। अस्य ग्रन्थस्य पठनेन व्याकरण–विषयनिष्ठं क्लिष्टत्वं सर्वथा न अनुभूयते।

५. अस्य ग्रन्थस्य कारक–प्रकरणं समासप्रकरणं च अन्यप्रकरणापेक्षया व्यापके स्त:। अत एव एते व्याकरण–शिशुक्षूणाम् महते उपयोगाय कल्प्येताम्। अपराणि च नातिदीर्घाणि प्रकरणानि संक्षेपेण सम्बद्धान् विषयान् प्रस्तुवन्ति। तान्यपि व्याकरण–शिशुक्षूणाम् उपकाराय एव।

६. उपलब्धेषु अन्येषु प्रक्रियाग्रन्थेषु प्राय: पुरातनानि एव उदाहरणानि उदाहृतानि उपलभ्यन्ते किन्तु अस्मिन् ग्रन्थे ग्रन्थकारेण सर्वत्र नूतनानि एव उदाहरणानि प्रयुक्तानि।

सन्दर्भा:

प्रबोधचन्द्रिका, संपादक:, जे.एल. शास्त्री, प्रकाशक – ईस्टर्न बुक लिंकर्स, दिल्ली, १९७९।

१. द्र. संस्कृत–हस्तलेखोपरि एच.पी.शास्त्रिण: अनुसन्धानपरकं विवरणम् (H.P. Shastri's report on the search of Sanskrit Manuscripts) १९०६–११, पृ. ६

२–३. इति श्रीविक्रमार्क–तनय–वैंजलभूपति विरचिता वैयाकरण–प्रबोधचन्द्रिका समाप्ता। पुष्पिता वाक् (colophon) गङ्गानाथ–झा– केन्द्रीय–संस्कृत–विद्यापीठस्य हस्तलेख–संख्या ३८६६– ४३०८/ २४६

४. इतिश्रीपटनाधिनाथ–भूपति–शिरोमणि–वैजलभूपाल–विरचिता वैयाकरण–प्रबोधाचन्द्रिका। पुष्पिता वाक् (colophon) गङ्गानाथ झा–केन्द्रीय–संस्कृत–विद्यापीठस्य हस्तलेख–संख्या ३८६४–४४१/३४

५. प्रबोधचन्द्रिका – १.८०–८१

६. एच.पी.शास्त्री, एकस्यां कारिकायां लिखति यत् वैंजलदेव: १५७२ शकाब्दे (१६५० ई.) दिवं गत इति। द्र. संस्कृतहस्तलेखोपरि अनुसन्धानपरकं विवरणम्

७. द्र. दीनबन्धु–त्रिपाठिन: आलेख: (Versified Exposition in Sanskrit Grammar based on Orissan contribution with particular referecne to वैजलकारिका) वाणिज्योति:, भाग:–१, भुवनेश्वर, १९८६, पृ. ६३–६६

८. प्रबोधचन्द्रिका १.२८

९. प्रबोधचन्द्रिका १.३६

१०. प्रबोधचन्द्रिका ८.७२

११. प्रबोधचन्द्रिका १.९

१२. प्रबोधचन्द्रिका १.३५

१३. मङ्गलाचरणम्, प्रबोधचन्द्रिका

१४. मध्य–सिद्धान्त–कौमुदी

१५. प्रबोधचन्द्रिका १.१

१६. प्रबोधचन्द्रिका १.३७

१७. प्रबोधचन्द्रिका १.३१–३२

१८. प्रबोधचन्द्रिका १.३०,१.३४

१९. प्रबोधचन्द्रिका १.३८

२०. प्रबोधचन्द्रिका १.३८–३९

२१. प्रबोधचन्द्रिका १.५३

२२. प्रबोधचन्द्रिका १.५८–६०

२३. प्रबोधचन्द्रिका २.१–२
२४. प्रबोधचन्द्रिका २.७
२५. प्रबोधचन्द्रिका २.८–१०
२६. प्रबोधचन्द्रिका २.११, २.१३
२७. प्रबोधचन्द्रिका ३.१–२
२८. प्रबोधचन्द्रिका ३.५२
२९. प्रबोधचन्द्रिका ३.५३
३०. प्रबोधचन्द्रिका ४.३५
३१. प्रबोधचन्द्रिका ५.६४
३२. प्रबोधचन्द्रिका ५.३
३३. प्रबोधचन्द्रिका ५.६
३४. प्रबोधचन्द्रिका ५.७
३५. प्रबोधचन्द्रिका ५.१५
३६. प्रबोधचन्द्रिका ५.३१
३७. प्रबोधचन्द्रिका ५.१५
३८. प्रबोधचन्द्रिका ५.३७
३९. प्रबोधचन्द्रिका ५.३८
४०. प्रबोधचन्द्रिका ५.३९–४४
४१. प्रबोधचन्द्रिका ६.१
४२. प्रबोधचन्द्रिका ६.२
४३. महाभाष्यम्, भाग–१, सं.कील्हर्ण, पृ. ३७९, पा.सू. २.१.६
४४. प्रबोधचन्द्रिका ६.१३
४५. प्रबोधचन्द्रिका ७.१
४६. प्रबोधचन्द्रिका ८.१
४७. प्रबोधचन्द्रिका ८.१–३
४८. प्रबोधचन्द्रिका ८.६
४९. प्रबोधचन्द्रिका ८.७
५०. प्रबोधचन्द्रिका ८.८

५१. प्रबोधचन्द्रिका १.३
५२. प्रबोधचन्द्रिका १.१८
५३. प्रबोधचन्द्रिका १.१८
५४. प्रबोधचन्द्रिका १.१९
५५. प्रबोधचन्द्रिका १.२८–२९
५६. प्रबोधचन्द्रिका १.३८
५७. प्रबोधचन्द्रिका १.४१
५८. प्रबोधचन्द्रिका १.५१
५९. प्रबोधचन्द्रिका १.५२
६०. प्रबोधचन्द्रिका १.५७
६१. प्रबोधचन्द्रिका १.१
६२. प्रबोधचन्द्रिका १.७२



# श्रीहरिनामामृतव्याकरणस्य शास्त्रीय-वैशिष्ट्यम्

सुनेलि देई

## १.० उपक्रम:

विदितमिदं समेषां विदुषां यत् खैस्तीय षोडशशतके वृन्दावनवास्तव्य षड्गोस्वामिषु अन्यतमेन वैष्णवाचार्येण विदुषा श्रीजीवगोस्वामिना वैष्णवानां संस्कृतव्याकरणशिक्षार्थं हरिनामपरकसंज्ञाभि: समलङ्कृतं किमपि विलक्षणं व्याकरणं निर्मितम्। एतद् व्याकरणं वैष्णवसम्प्रदाये प्रसिद्धम्। एतद्व्याकरणरचनाया: उद्देश्यं पुन: एतस्य मङ्गलाचरणश्लोकै: सम्यक् अनुसन्धेयम्। वैष्णवा: स्वदिनचर्यायां प्रतिमुहूर्त्तं हरिमयं कर्त्तुं प्रयतते। लौकिकव्याकरणस्वाध्यायाभ्यासप्रयोगसमये हरिनामभ्य: व्यवहिता: न भवेयु: इति धिया तदर्थम् एतस्य सृष्टि:। किन्तु एतस्मिन् उद्यमे सफलतायै पूर्वाचार्य्याणां व्याकरणेभ्य: मौलिकतत्त्वानि समादाय तत्र तत्र स्वदर्शनानुगुणं यथेच्छं परिवर्त्तनं तेन विहितं दृश्यते। तानि परिवर्त्तनानि एव विशिष्टतामावहन्ति। तेषु वैशिष्ट्येषु कतिचन विदुषां पुरस्तात् प्रस्तूयन्ते।

## १.१.० संज्ञानिर्माणगतवैशिष्ट्यम्

हरिनामपरकाणां संज्ञानां व्याकरणेऽस्मिन् प्रयोगात् इदं व्याकरणं श्रीहरिनामामृत-व्याकरणमित्युच्यते। अतएव संज्ञानां किमपि अनुपमं वैशिष्ट्यमस्ति। शास्त्रनिर्माणाय अथवा शास्त्रनिर्माणे यानि कौशलानि अवलम्बितानि तद्विशेषरूपेण शास्त्रीयवैशिष्ट्यमिति अभीप्सितम्। किन्तु सामान्यरूपेण ग्रन्थस्य विविधस्थलेषु रूपनिर्माणगता अथवा अर्थप्रतीतिसाधिका काचित् नवीनता तदितरग्रन्थेभ्य: परिलक्ष्यते विशेषत: पाणिनित:। तत्सर्वं शास्त्रीयवैशिष्ट्यरूपेण अत्र विवक्षितं वर्त्तते।

## १.१.१ संज्ञानिर्माणे पूर्वाचार्यपद्धतेः व्यतिक्रमः

एकाचो द्वे प्रथमस्य (पा.सू. ६.१.१), अजादेर्द्वितीयस्य (पा.सू.६.१.८) इति अधिकारबलेन यदा द्वित्वं विधीयते तदा पूर्वः अभ्यासः भवतीति पूर्वोऽभ्यासः (पा.सू.६.१.४) इति। सूत्रस्यार्थः। भुव् भुव् इति स्थिते प्रथम 'भुव्' अभ्याससंज्ञकः भवति। भुव् भुव् इति उभययोः अभ्यस्तसंज्ञा च 'उभे अभ्यस्तम्',(पा.सू. ६.१.५). इति सूत्रबलेन। किन्तु हरिनामामृतव्याकरणे अभ्यासविषये पूर्वः अभ्यासंज्ञकः (नरः) भवति परः अभ्यस्तसंज्ञकः (नारायणः) भवतीति पाणिनितः भेदः। 'अभ्यासः' 'नर' रूपेण, अभ्यस्तः नारायण' रूपेण च संज्ञितः दृश्यते तथा च सूत्रम्–

पूर्वो नरः (ह. ना. व्या.सू. – ४३८)

परो नारायणः (ह.ना.व्या. सू.– ४३९)

## १.१.२ हरिनाम्नां प्रत्ययैः योजनम्

वैशिष्ट्येषु इदमपि अन्यतमं परिगण्यते यत् केचन प्रत्ययाः विशेषतः कृत्प्रत्यय–तद्धितप्रत्यय–स्त्रीप्रत्ययाधिकारेषु प्रत्ययनिर्देशात् पूर्वं हरिनाम्नां योगः क्रियते। तत्र तत्र हरिनाम्नां केवलम् उच्चारणजं पुण्यम् अभीप्सितम्, न तु किमपि पारिभाषिक–प्रयोजनम्। यथा –

| | | | |
|---|---|---|---|
| १. | विष्णुनिष्ठा | २. | विष्णुकृत्यः |
| ३. | लक्ष्मीप्रत्ययः | ४. | लक्ष्मीपूरणप्रत्ययः |
| ५. | नृसिंह–यः | ६. | माधवान्यः |
| ७. | केशव–णः | ८. | माधव–ढः |
| ९. | नृसिंह–नः | १०. | केशवागमः |
| ११. | नृसिंह–इः | १२. | नृसिंह–फिः |
| १३. | माधव–यरामः | १४. | माधव–फः |
| १५. | माधवायनः | १५. | माधव–ठः |
| १७. | माधव–णः | १८. | नृसिंह–वुः |
| १९. | नृसिंह–ठः | २०. | नृसिंह–छः |
| २१ | नृसिंह–कः | २२ | नृसिंह–खः |

| | | | |
|---|---|---|---|
| २३. | माधव–ढक:[23] | २४. | नृसिंहस्त्य:[24] |
| २५. | केशवस्नन:[25] | २६. | नृसिंहाह:[26] |
| २७. | माधव–ड:[27] | २८. | केशव–ठ:[28] |
| २९. | केशवचर:[29] | ३०. | केशवमय:[30] |
| ३१. | केशवस्तय:[31] | | |

१.१.३ श्रीहरिनामामृतव्याकरणकारेण श्रीजीवगोस्वामिना पाणिनीयसंज्ञानां हरिनामपरक–करणार्थं कानिचननवीनसूत्राणि संकलितानि, तानि अध: प्रस्तूयन्ते।

१. तत्रादौ चतुर्दश सर्वेश्वरा: (ह.ना.व्या.सू.२)

२. दश दशावतारा: (ह.ना.व्या.सू.३)

३. आदेशो विरिञ्चि: (ह.ना.व्या.सू.३९)

४. आगमो विष्णु: (ह.ना.व्या.सू.४०)

५. लोपो हर: (ह.ना.व्या.सू.४१)

६. पूर्वो वामन: (ह.ना.व्या.सू.५)

७. वर्णस्वरूपे राम: (ह.ना.व्या.सू.३७)

८. णित् नृसिंह: (ह.ना.व्या.सू.३७८)

९. किच्च ङिच्च कंसारि: (ह.ना.व्या.सू.३८२)

१०. तत्र श्यामराम–कर्मधारयौ, त्रिरामी–द्विगू, कृष्णपुरुष–तत्पुरुषौ, पीताम्बर–बहुव्रीहौ, रामकृष्ण–द्वन्द्वौ समानार्थौ ज्ञेयौ, अव्ययीभावस्तु षष्ठ: (ह.ना.व्या.सू. १६९४)[32]।

## १.१.४ कासांचन संज्ञानां संज्ञिनिरूपणम्

पाणिनिना नैकासां संज्ञानां लक्षणं विहितम्। सम्भवत: स्वसमये एता: संज्ञा: अतिप्रसिद्धा: स्यु:, पूर्वाचार्यैरपि प्रयुक्तानाम् आसां व्याख्यानम् अनावश्यकमासीत्। अतएव समास–कारक–सर्वनामाव्ययादीनां बहूनां संज्ञानां लक्षणं न दृश्यते अष्टाध्याय्याम्। परवर्त्तिकाले संस्कृतभाषा लोकमुखाद् दूरंगता। व्याकरणशास्त्रस्य परम्पराऽपि त्रुटिता, ता: ता: पाणिनीया: प्रसिद्धसंज्ञा: अपि दुर्बोध्या: संजाता:। यदर्थं परवर्त्तिव्याकरणग्रन्थेषु तासां संज्ञानां लक्षणनिरूपणम् अपरिहार्यं परिकल्पितम्।

हरिनामामृतव्याकरणेऽपि तादृश्यः काश्चन संज्ञाः सन्ति, यासां लक्षणं दत्तं दृश्यते। यथा–

क. क्रियासम्बन्धविशेषि कारकम् (ह.ना.व्या.सू.९६१)

ख. आख्यातादयो यत्र क्रियन्ते, तदुक्तम्। (ह.ना.व्या.सू.९६२)

ग. उक्तादन्यदनुक्तम् (ह.ना.व्या.सू.९६३)

घ. अन्तर्भिन्नपदत्वेऽप्येकनामत्वेन योजनं समासः (ह.ना.व्या.सू.१६९५)

ङ. समासवाक्यं विग्रहः (ह.ना.व्या.सू.१६९७)

च. जाति–गुण–क्रियाद्वारा यस्य विशेषः कथ्यते, तद्विशेष्यं, येन तस्य विशेषः कथ्यते, तद्विशेषणम् (ह.ना.व्या.सू.३०७)

## १.१.५ पूर्वाचार्यसंज्ञानां स्मरणम्

हरिनामपरकसंज्ञाभिः सह ग्रन्थकर्त्रा न केवलं तदर्थीयाः पाणिनीयसंज्ञाः स्मृताः, प्रातिशाख्येषु प्रसिद्धानां तथा पूर्वाचार्याणां[३३] संज्ञाश्च स्मृताः। यथा – सर्वेश्वरसंज्ञया सह स्वराः अच इति प्राचीनसंज्ञाद्वयमपि स्मृतम्। तथैव दशवतारेण सह समानाः, अक इति प्राचीनसंज्ञाद्वयस्यापि स्मरणं कृतम्। अधः हरिनामपरकसंज्ञाभिः सह तदर्थीयाः पाणिनिसंज्ञाः पूर्वाचार्यसंज्ञाश्च संकलिताः सन्ति–

| | हरिनामपरकसंज्ञाः | पाणिनीयसंज्ञाः | इतराः पूर्वाचार्यसंज्ञाः |
|---|---|---|---|
| १. | सर्वेश्वराः[३४] | अचः | स्वराः |
| २. | दशावताराः[३५] | अकः | समानाः |
| ३. | एकात्मकौ[३६] | सवर्णसंज्ञा | – |
| ४. | वामनः[३७] | ह्रस्वः | निर्ह्रस्वः |
| ५. | त्रिविक्रमः[३८] | दीर्घः | – |
| ६. | महापुरुषः[३९] | प्लुतः | – |
| ७. | ईश्वराः[४०] | इचः | नामिनः |
| ८. | ईशाः[४१] | इकः | – |
| ९. | अनन्ताः[४२] | अणः | – |

| | | | |
|---|---|---|---|
| १०. | चतुःसनाः[४३] | इणः | — |
| ११. | चतुर्भुजाः[४४] | उकः | — |
| १२. | चतुर्व्यूहः[४५] | एचः | सन्ध्यक्षराणि |
| १३. | विष्णुचक्रम्[४६] | अनुस्वारः विन्दुः,लवः च | |
| १४. | विष्णुचापः[४७] | अनुनासिकः | — |
| १५. | विष्णुसर्गः[४८] | विसर्जनीयः | विसर्गः, विसृष्टः, अभिनिष्ठानः |
| १६. | विष्णुजनाः[४९] | हलः | — |
| १७. | वलः[५०] | रलः | — |
| १८. | विष्णुवर्गाः[५१] | स्पर्शाः | — |
| १९. | विष्णुगणाः[५२] | मयः | — |
| २०. | हरिवेणवः[५३] | ञमः | — |
| २१. | हरिमित्राणि[५४] | यणः | अन्तःस्थाः, पणः च |
| २२. | हरिगोत्राणि[५५] | शलः | उष्माणः, पिटः च |
| २३. | शौरयः[५६] | शरः | — |
| २४. | वैष्णवाः[५७] | झलः | धुटः |
| २५. | गोपालाः[५८] | हशः | घोषवन्तः |
| २६. | यादवाः[५९] | खरः | अघोषाः |
| २७. | सत्सङ्गः[६०] | संयोगः | — |
| २८. | सुर्बुद्धः[६१] | सम्बुद्धिः | — |
| २९. | अच्युतः[६२] | लट् | वर्त्तमाना |
| ३०. | विधिः[६३] | विधिलिङ् | सप्तमी |
| ३१. | विधातृ[६४] | लोट् | पञ्चमी |
| ३२. | भूतेश्वरः[६५] | लङ् | ह्यस्तनी |
| ३३. | भूतेशः[६६] | लुङ् | अद्यतनी |
| ३४. | अधोक्षजः[६७] | लिट् | परोक्षा |
| ३५. | कामपालः[६८] | आशीर्लिङ् | आशीः |
| ३६. | बालकल्किः[६९] | लुट् | श्वस्तनी |

| | | | |
|---|---|---|---|
| ३७. | कल्कि:[७०] | लृट् | भविष्यन्ती |
| ३८. | अजित:[७१] | लृङ् | क्रियापत्ति: |
| ३९. | पृथु:[७२] | पित् | — |
| ४०. | नृसिंह:[७३] | णित् | — |
| ४१. | कपिल:[७४] | कित् | — |
| ४२. | निर्गुण:[७५] | ङित् | — |
| ४३. | कंसारि:[७६] | कित्, ङित् | — |
| ४४. | शिव:[७७] | शित् | — |
| ४५. | परपदसंज्ञानि[७८] | परस्मैपदानि | — |
| ४६. | आत्मपदसंज्ञकानि[७९] | आत्मनेपदानि | — |
| ४७. | कृष्णधातुका:[८०] | सार्वधातुकानि | — |
| ४८. | रामधातुका:[८१] | आर्धधातुकानि | — |
| ४९. | नर:[८२] | अभ्यास: | — |
| ५०. | सङ्कर्षण:[८३] | सम्प्रसारणम् | — |
| ५१. | श्यामराम:[८४] | कर्मधारय: | — |
| ५२. | कृष्णपुरुष:[८५] | तत्पुरुष: | — |
| ५३. | पीताम्बर:[८६] | बहुव्रीहि | — |
| ५४. | रामकृष्ण:[८७] | द्वन्द्व: | — |
| ५५. | उपेन्द्र:[८८] | उपसर्गा: | — |
| ५६. | विष्णुपदम्[८९] | पदम् | — |
| ५७. | हरि:[९०] | घि: | अग्नि: |
| ५८. | गोविन्द:[९१] | गुण | — |
| ५९. | वृष्णीन्द्र:[९२] | वृद्धि: | — |
| ६०. | पञ्चपाण्डवा:[९३] | सुट: | घुट: |
| ६१. | राधा[९४] | — | श्रद्धा |
| ६२. | गोपी[९५] | नदी | — |
| ६३. | उद्धव:[९६] | उपधा | — |
| ६४. | कृष्णस्थानम्[९७] | सर्वनाम | घुट् |

| | | | |
|---|---|---|---|
| ६५. | भगवत् | भस्मज्ञा | – |
| ६६. | दामोदर: | गु: | दा |
| ६७. | विष्णुनिष्ठा | निष्ठा | – |
| ६८. | विष्णुकृत्य: | कृत्य: | – |

## १.२.१ नामग्रहणं विना पूर्वाचार्यमतोद्धरणम्

पूर्वाचार्याणां नामस्मरणपूर्वकं यथा पाणिनिना विधय: निर्मिता: सन्ति जीव–गोस्वामिना तथा सर्वत्र पूर्वाचार्याणां नाम न स्मृतम्। यद्यपि तदीयमतानि स्वीकृतानि दृश्यन्ते। यथा – ईशस्यानेकात्मके वामनश्च वा (ह.ना.व्या.सू.९१) इति सूत्रे 'ईश' संज्ञस्य एकात्मकान्यसर्वेश्वरे परे सन्धिर्वा स्यात्। त्रिविक्रमस्य वामनश्च वा। उदाहरणम्– हरी आसनम् – हरि आसनम्। वस्तुत: सिद्धान्तोऽयं शाकल्यस्य नाम्ना गृहीतोऽस्ति। तथा च पाणिनिसूत्रम् – इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च (पा.सू. ६.१.१२७)।

## १.२.२ नूतनसूत्राणि

यद्यपि श्रीजीवगोस्वामिना पाणिनीयव्याकरणमाधारीकृत्य वैष्णवव्याकरणमिदं विरचितम्। तथापि अस्य ग्रन्थस्य काश्चन मौलिकता: परिलक्ष्यन्ते। अध: कानिचन सूत्राणि हरिनामामृतव्याकरणत: संकलितानि, येषां समर्थकपाणिनीयसूत्राणि न सन्ति।

क. असिद्धरूपं न त्याज्यम्, प्रतिज्ञेयं कृदन्तिका (ह.ना.व्या.सू.४३)

ख. शसादयो यदुसंज्ञा: (ह.ना.व्यास.सू.१७८)

ग. तत्रावन्तलक्ष्मी राधा–संज्ञा (ह.ना.व्या.सू.२१०)

घ. समानार्थतया पुरुषोत्तमतार्हमीशान्तं ब्रह्मपुरुषोत्तमवद्रा टादि सर्वेश्वरे (ह.ना.व्या.सू.२३९)

ङ. पाणिनीयप्रत्याहारवाचिनामच्शब्दादीनामृञनञनुकरणस्य च न कवर्गा–दित्वम् (ह.ना.व्या.सू.२५४)

च. यवयोर्विष्णुपदान्तयोर्हरो गोपाले (ह.ना.व्या.सू.२७९)

छ. तदादिद्वये द्वयम् (ह.ना.व्या.सू.३८)

ज. सूत्राणि षड्विधानि (ह.ना.व्या.सू.४२)

झ. यादवमात्रे हरिकमलम् (ह.ना.व्या.सू.९८)

ञ. अरामान्त: कृष्णसंज्ञ: (ह.ना.व्या.सू.२७९)

## १.२.३.० प्रक्रियालाघवदृष्टि:

पाणिनिव्याकरणे तिङ्प्रकरणे प्रतिलकारं मूलतिङाम् आदेशा: क्रियन्ते। तदभिधेयं सूत्राण्यपि अपेक्षितानि भवन्ति। एतेन व्याकरणस्य शास्त्रीयगौरवं भवतीति परिवर्त्तिवैयाकरणा: अनुभवन्त: दृश्यन्ते। शास्त्रलाघवधिया हरिनामामृतव्याकरणेऽपि लडादिषु सत्सु परिनिष्ठितरूपाणाम् आन्तिमभागा: तत्तत्प्रत्ययरूपेण परिकल्पिता: दृश्यन्ते। तथा सति तिङामादेशपरकाणि नैकानि पाणिनीयसूत्राणि स्वत: वर्जितानि। अनेन अवश्यं लाघवमायाति। किन्तु पाणिनीयव्याकरणे य: शास्त्रीय: बौद्धिकश्चव्यापार: कल्पित:, तस्य अवगणना जाता। यथा – लोटि परस्मैपदे प्रत्यया: भवन्ति–तुप्, ताम्, अन्तु, हि तम् त: आनिप् आवप् आमप् ताम् आताम् अन्ताम्, स्व आथाम् ध्वम्, ऐप् आवहैप्, आमहैप्। पाणिनीयतन्त्रे एतानि रूपाणि साक्षात् नोपलभ्यन्ते। तेषां प्राप्त्यर्थं, प्रक्रियादशायां नैकेषां सूत्राणां प्रयोग: क्रियते, यथा–

तिप् > तुप् (एरु:) पा.सू. ३.४.८६

तस् > ताम्

थस् > त (तस्थस्थमिपां तांतंताम:) (लोटो लङ्वत्) पा.सू. ३.४.८.३

थ > त

झि > अन्ति > अन्तु (झोऽन्त:) पा. सू. ७.१.३

(एरु:) पा. सू. ३.४.८६

सिप् > हि (सेर्ह्यपिच्च) पा. सू. ३.४.८७

मिप् > नि > आनि (मेर्नि:) पा.सू. ३.४.८९ (आडुत्तमस्य पिच्च)

पा.सू. ३.४.९२

वस् > आवप् (आडुत्तमस्य पिच्च) पा.सू. ३.४.९२

मस् > आमप् (आडुत्तमस्य पिच्च) पा.सू. ३.४.९२

त > ते > ताम् (टित आत्मनेपदानां टेरे), पा.सू. ३.४.७९

(आमेत:) पा.सू. ३.४.९०

आताम् > इयताम् > एताम् (आतो ङित:) पा.सू. ७.२.८१

(आद् गुण:) पा.सू. ६.१.८७, (लोपो व्योर्वलि), पा.सू. ६.१.६६

झ अन्त अन्ते अन्ताम् (झोऽन्त:) पा.सू. ७.१.३, (टित: आत्मनेपदाना टेरे)

पा.सू. ३.४.७९ (आमेत:) पा.सू. ३.४.९०

शास् से म्व (थासः से) पा.सू. ३.४.८०

(सवाभ्यां वामौ) पा.सू. ३.४.९१

आथाम् > इयुथाम् > एथाम् (आतो ङितः) पा.सू. ७.२.८१

(आद्गुणः) पा.सू. ६.१.८७

(लोपोव्योर्वलि) पा.स. ६.१.६६

ध्वम् > (तिप्तस्झिसिप्थस्थमिप्वस्मस्तातांझथासाथाम्ध्वमिड्वहिमहिङ्) पा.सू. ३.४.७८

इट् > ए > ऐ (टित आत्मनेपदानां टेरे) पा.सू. ३.४.७९

(एत ऐ) पा.सू. ३.४.७९

वहि > वहे > वहै (टित आत्मनेपदानां टेरे) पा.सू. ३.४.७९

(एत ऐ) पा.सू. ३.४.६३ (आडुत्तमस्य पिच्च) पा.सू. ३.४.९२

महिङ् > महे > महै (टित आत्मनेपदानां टेरे) पा. सू. ३.४.७९, (एत ऐ) पा. सू. ३.४.६३

(आडुत्तमस्य पिच्च) पा. सू. ३.४.९२

यत्र नवपरस्मैपदानां नव आत्मनेपदानां लोट्लकाररूपाणां साधुत्वप्रदर्शनार्थं पञ्चदशाधिकपाणिनीयसूत्राणि अपेक्षन्ते, अत्र 'आशीः प्रेरणादौ तुबादयो विधातृ नामानः' (ह.न.व्या.सू. ३७०) इति एकेनैव सूत्रेण अष्टादशलोट्लकाररूपाणां साधुत्वं संपाद्यते। तथैव लट्लकाररूपाणां सिद्ध्यर्थं 'तत्र प्रायः वर्त्तमानकाले तिबादयोऽष्टादशं अच्युतनामानः' (ह.ना.व्या.सू.३६८) इति सूत्रं, 'विधि–सम्भावनादौ यादादयोविधिनामानः' (ह.ना.व्यासू. ३६९), लङ्र्थं 'अनद्यतनभूते दिवादयो भूतेश्वर नामानः' (ह.ना.व्या. सू. ३७२), भूते दिवादयो भूतेशनामानः (ह.ना.व्या.सू.३७२) लिडर्थं लुङर्थं 'परोक्षभूते णलादयोऽधोक्षजनामानः' (ह.ना.व्या.सू.३७३), लिङाशिषि 'आशिषि यात् यास्तामित्यादयः कामपालनामानः' (ह.ना व्या. सू. ३७४) लुडर्थम् 'अर्हार्थेऽनद्यतनभविष्यति च तादयो बालकल्किनामानः' (ह.ना व्या. सू. ३७५), लृडर्थं 'भविष्यत्काले स्यत्यादयः कल्किनामानः' (ह.ना व्या. सू. ३७६), लृङर्थं 'साकांक्षं यत्र क्रियातिक्रमो निर्दिश्यते, तत्र कार्यकारणयोः स्यदादिका अजितनामानो भूते भविष्यति च' (ह.ना व्या. सू. ३७७) इत्यादिषु केवलम् एकैकमेव सूत्रं दृश्यते[23]। परन्तु एतेषां लकाराणां रूपाणां सिद्ध्यर्थं पाणिनीयव्याकरणे नैकानि सूत्राणि दृश्यन्ते।

## १.२.३.१ आदरामगोपालयोरुर्नित्यम् (ह.ना.व्या. १४०)

पाणिनिव्याकरणदृष्ट्या अपेक्षिता दीर्घा प्रक्रियाऽत्र न्यूनीकृता। सा यथा -- पाणिनीयपद्धत्या अकारपरस्य विसर्जनीयस्य अवर्णे परे साक्षात् उकारो न भवति। तत्रोपदिष्टा पद्धतिश्चेत्थम्—विसर्जनीयस्य सकारः (विसर्जनीयस्य सः पा ८.३.३४), पुनः सकारस्य रुत्वम् (ससजुषोः रुः पा. ८.२.६६), ततः रोः उकारादेशः (अतोरुरप्लुतादप्लुते पा. ६.१.११३) भवेत्। किन्त्वत्र जीवगोस्वामिना प्रक्रियालाघवसम्पादनार्थं अकार परस्य विर्जनीयस्य साक्षात् उकारः उपदिष्टः।

## १.२.३.२ पूर्वस्य विष्णुपदवत्त्वं स्वादि—तद्धितयोरयसर्वेश्वराद्योः (ह.ना.व्या.२४७)

यसर्वेश्वरादिभिन्नयोः स्वादितद्धितयोः परयोः पूर्वस्य विष्णुपदवत्त्वं भवति इति सूत्रार्थः। एतत्पर्यायविशिष्टं सूत्रं पाणिनीयव्याकरणे साक्षात् नोपलभ्यते। किन्तु एतस्य कार्य्यं पाणिनिना भिन्नया पद्धत्या सूचितम्। वस्तुतः सुप्तिङन्तं पदमिति सुबन्तानां सर्वत्र पदसंज्ञा। किन्तु रूपनिर्माणार्थं कुत्रचित् भसंज्ञायाः आवश्यकता वर्तते। भसंज्ञानिरूपणं यचि भम् (पा. १.४.१८) इति संज्ञासूत्रेण विहितमस्ति। स्वादिषु अजादिप्रत्ययेषु एव परेषु सत्सु पूर्वं भसंज्ञा भवति। न तु पदसंज्ञा। भ्याम्प्रभृतिषु अनच्रूपविशिष्टेषु सुप्सु सत्सु यदि पूर्वं भसंज्ञ स्यात् तर्हि प्रत्यच्भ्याम् इत्यत्र 'च' कारस्य कुत्वं न स्यात्, नापि ककारस्य जश्त्वम्। कुत्वं जश्त्वं च पदसंज्ञायां सत्यां भवति। अतएव सुप्तिङन्तं पदम् (पा.१.४.१४) 'यचि भम्' (पा.१.४.१८) 'चोः कुः' (पा.८.२.३०) 'झलां जशोऽन्ते' (पा. ८.२.३९) एतेषां सामान्यविवेचनेन पाणिनीयव्याकरणे प्रत्यग्भ्याम् इत्यादिरूपाणि सिद्ध्यन्ति।

अवश्यम् एतत्सत्यं प्रत्यग्भ्याम् इत्यत्र 'ग्' कारस्य समाधानाय भ—पदयोर्मध्ये पार्थक्यज्ञानम् अपि च तज्जन्यफलपार्थक्यस्य ज्ञानञ्च अपेक्षते। पाणिनेः तदर्थसूत्राणां ज्ञानादनन्तरमेव एतद् सम्भवति। अत्र गौरवं भवतीति धिया एतस्य बोधनकाठिन्यस्य निराकरणाय जीवगोस्वामिना सूत्रमिदं परिकल्पितम्। एतेन एकेनैव सूत्रेण सोऽर्थः संपाद्यते।

उपसंहार:

विषयोऽयं बहुव्यापकोऽस्ति। सर्वे विन्दव: अत्र विस्तारभिया न स्पृष्टा:। केवलं स्थालीपुलाकन्यायेन केचन यथाग्रन्थम् आलोचिता:।

टिप्पणी

१. द्र. ह. ना. व्या. सू. १२५३
२. द्र. तत्रैव सू. १३७५
३. द्र. तत्रैव सू. २११५
४. द्र. तत्रैव सू. २२१९
५. द्र. तत्रैव सू. २९०३
६. द्र. तत्रैव सू. २३६०
७. द्र. तत्रैव सू. २३१२
८. द्र. तत्रैव सू. २३१९
९. द्र. तत्रैव सू. २३२०
१०. द्र. तत्रैव सू. २१९७
११. द्र. तत्रैव सू. २३२४
१२. द्र. तत्रैव सू. २३४९
१३. द्र. तत्रैव सू. २३५७
१४. द्र. तत्रैव सू. २३५८
१५. द्र. तत्रैव सू. २३६०
१६. द्र. तत्रैव सू. २८३३
१७. द्र. तत्रैव सू. २३६९
१८. द्र. तत्रैव सू. २४०२
१९. द्र. तत्रैव सू. २४१०
२०. द्र. तत्रैव सू. २४५३
२१. द्र. तत्रैव सू. २४६७
२२. द्र. तत्रैव सू. २४८५
२३. द्र. तत्रैव सू. २४८६

२४. द्र. तत्रैव सू. २४९२

२५. द्र. तत्रैव सू. २४९५

२६. द्र. तत्रैव सू. २५००

२७. द्र. तत्रैव सू. २५७०

२८. द्र. तत्रैव सू. २८०१

२९. द्र. तत्रैव सू. ३०८३

३०. द्र. तत्रैव सू. ३१४८

३१. द्र. तत्रैव सू. २९६०

३२. मत्प्रस्तुता सूत्रमेलनसूची द्रष्टव्या

३३. विशेषत: कातन्त्रचान्द्रजैनेन्द्रपरम्परा अनुसृता

३४. द्र. ह. ना. व्या. सू. २

३५. द्र. तत्रैव सू. ३

३६. द्र. तत्रैव सू. ४

३७. द्र. तत्रैव सू. ५

३८. द्र. तत्रैव सू. ६

३९. द्र. तत्रैव सू. ७

४०. द्र. तत्रैव सू. ८

४१. द्र. तत्रैव सू. ९

४२. द्र. तत्रैव सू. १०

४३. द्र. तत्रैव सू. ११

४४. द्र. तत्रैव सू. १२

४५. द्र. तत्रैव सू. १३

४६. द्र. तत्रैव सू. १४

४७. द्र. तत्रैव सू. १५

४८. द्र. तत्रैव सू. १६

४९. द्र. तत्रैव सू. १७

५०. द्र. तत्रैव सू. १८

५१. द्र. तत्रैव सू. १९

५२. द्र. तत्रैव सू. २०
५३. द्र. तत्रैव सू. २५
५४. द्र. तत्रैव सू. २७
५५. द्र. तत्रैव सू. २८
५६. द्र. तत्रैव सू. २९
५७. द्र. तत्रैव सू. ३०
५८. द्र. तत्रैव सू. ३१
५९. द्र. तत्रैव सू. ३२
६०. द्र. तत्रैव सू. ८२
६१. द्र. तत्रैव सू. १७१
६२. द्र. तत्रैव सू. ३६८
६३. द्र. तत्रैव सू. ३६९
६४. द्र. तत्रैव सू. ३७०
६५. द्र. तत्रैव सू. ३७१
६६. द्र. तत्रैव सू. ३७२
६७. द्र. तत्रैव सू. ३७३
६८. द्र. तत्रैव सू. ३७४
६९. द्र. तत्रैव सू. ३७५
७०. द्र. तत्रैव सू. ३७६
७१. द्र. तत्रैव सू. ३७७
७२. द्र. तत्रैव सू. ३७८
७३. द्र. तत्रैव सू. ३७९
७४. द्र. तत्रैव सू. ३८०
७५. द्र. तत्रैव सू. ३८१
७६. द्र. तत्रैव सू. ३८२
७७. द्र. तत्रैव सू. ३८३
७८. द्र. तत्रैव सू. ३८४
७९. द्र. तत्रैव सू. ३८५

८०. द्र. तत्रैव सू. ३८७

८१. द्र. तत्रैव सू. ३८८

८२. द्र. तत्रैव सू. ४३९

८३. द्र. तत्रैव सू. ६०९

८४. द्र. तत्रैव सू. १६९४

८५. द्र. तत्रैव सू. १६९४

८६. द्र. तत्रैव सू. १६९४

८७. द्र. तत्रैव सू. १६९४

८८. द्र. तत्रैव सू. ४०७

८९. द्र. तत्रैव सू. १५४

९०. द्र. तत्रैव सू. १७७

९१. द्र. तत्रैव सू. १७९

९२. द्र. तत्रैव सू. १९०

९३. द्र. तत्रैव सू. १९१

९४. द्र. तत्रैव सू. २१०

९५. द्र. तत्रैव सू. २२०

९६. द्र. तत्रैव सू. २२७

९७. द्र. तत्रैव सू. २२८

९८. द्र. तत्रैव सू. २३५

९९. द्र. तत्रैव सू. ४१९

१००. द्र. ह. ना. व्या. सू. १२५३

१०१. द्र. तत्रैव सू. १३७५

१०२. मत्प्रस्तुता सूत्रमेलनसूची द्रष्टव्या

१०३. विस्तारभिया सर्वे लकाराः नात्र आलोचिताः। विज्ञैः सुधिभिः सर्वत्र लकारान्तरेषु एतादृशी पद्धतिरनुसृता इति विवेचनीयम्।



# पण्डितराज-शास्त्ररत्नाकर-वे-सुब्रह्मण्यशास्त्रि-विरचिता शाब्दतरङ्गिणी : एकं विहगावलोकनम्

रिछारिया ब्रजेशकुमार:

संस्कृतक्षेत्रे दक्षिणभारतस्य महद्योगदानमस्ति। प्राचीनकालादेव प्रदेशोऽयं संस्कृतस्य संवर्धनाय प्रयत्नशील: परिलक्ष्यते। प्रदेशेऽस्मिन् बहवो विद्वांस: प्रादुरभूवन्, येषां कृतयोऽद्यापि विद्वत्सु समादृता: भवन्ति। प्रसङ्गादत्र शाब्दतरङ्गिणीकर्तु: पण्डितराज–शास्त्ररत्नाकर–वेपत्तूर–सुब्रह्मण्यशास्त्रि–महाभागस्य संक्षिप्तपरिचयं प्रस्तौमि।

एतेषां जन्म जुलाईमासे नवोत्तरैकोनविंशतितमे क्रैस्ते वर्षे तमिलनाडुराज्यान्तर्वर्ति तंजौर–जनपदस्य वेपत्तूर–ग्रामे अभवत्। ते मद्रास–विश्वविद्यालयत: न्याय–वेदान्तशिरोमणि: इत्युपाधिमधिगतवन्त:। तदनन्तरम् अण्णामलैविश्वविद्यालये अध्यापनं कृत्वा मद्रासस्य संस्कृत–महाविद्यालये प्राध्यापकपदम् अलङ्कुर्वाणा: स्वाध्यायाध्यापनपरा: आसन्। तत: निवृत्ते: परं 'कुम्बाकोनम्' अद्वैतसभायां महापण्डितपदं तै: समलङ्कृतम्।

विद्वत्सभासु शास्त्रार्थसत्रेपु च तेषां वैदुष्यं अनितरसाधारणतया प्रकाशते स्म। पाण्डित्यप्रभया सर्वेषां अज्ञानतिमिरं दूरत एव उपयाति स्म।

तेषां वैदुष्यं अनेनैव द्योतते –

१. कांचीपुरम् पीठाधीश्वर–जगद्गुरुशंकराचार्यवर्यै: 'शास्त्ररत्नाकर' इत्युपाधिना इमे सभाजिता:

२. कोचीनमहाराज–परीक्षितवर्यैरपि ते पण्डितराजेत्युपाधिना विभूषिता:।

३. संस्कृतक्षेत्रे उत्कृष्टकार्यार्थं भारतस्य महामहिम–राष्ट्रपतिमहोदयेन सम्मानिता:।

४. शाब्दतरङ्गिणीति ग्रन्थमधिकृत्य साहित्य अकादेमी इति राष्ट्रियसंस्थया ते सम्मानिता:।

श्रीशास्त्रिचरणै: बहवो ग्रन्था: प्रकाशिता:। तेषां ग्रन्थानां त्रिधा विभागो दृश्यते। यथा–

११. प्रकरणग्रन्था:

क. व्युत्पत्तिवादे लकारार्थविवरणम्, अण्णामलै विश्वविद्यालयत: प्रकाशितम्।

ख. शाब्दतरङ्गिणी, मद्रपुरी–संस्कृत–समिति–मद्रासत: प्रकाशिता।

ग. प्रकटानुबन्धिशास्त्रार्थ:, अद्वैतसभा–कुम्बाकोनमत: प्रकाशित:।

घ. न्याय–वैशैषिकतन्त्रार्थसंग्रह:, अद्वैतसभा–कुम्बाकोनमत: प्रकाशित:।

ङ. ख्यातितत्त्वसमीक्षा, अद्वैतसभा–त्रिचित: प्रकाशिता।

२. व्याख्या–ग्रन्था:

क. ब्रह्मानन्दीभावप्रकाश: (व्याख्या) कोचीनत: प्रकाशित:।

ख. न्यायकल्पलतिका व्याख्या, भागद्वयेन केन्द्रीय–संस्कृत–विद्यापीठ–तिरुपतित: प्रकाशिता।

३. प्रबन्धा:

क. त्रिमाशश्लोकी, अण्णामलै विश्वविद्यालयत: प्रकाशिता।

ख. न्यायरत्नम्, ऑरिएण्टल लाइब्रेरी मद्रासत: प्रकाशितम्।

ग. अवच्छेदकसार:, अण्णामलै विश्वविद्यालयत: प्रकाशित:।

घ. न्यायसार:, ऑरिएण्टल लाइब्रेरी मद्रासत: प्रकाशित:।

वयंत्वत्र पण्डितराज–शास्त्ररत्नाकर–श्री–वे.–सुब्रह्मण्यशास्त्रिणां "शाब्दतरङ्गिणी" इति ग्रन्थमधिकृत्य किञ्चिद् विवेचयितुम् इच्छाम:।

ग्रन्थेऽस्मिन् आस्तिकदर्शनशास्त्रीयपरम्परासु प्राय: सर्वमपि शाब्दबोधविषयकं मतजातं सुविशदं सुसंहतं च निरूपितमस्ति। तत्र शाब्दबोधविचारा: विशिष्य मीमांसा–व्याकरण–न्याय–साहित्यशास्त्रेषु प्रामुख्येन दृश्यन्ते। प्रतितन्त्रं शाब्दबोधीयसिद्धान्ता: तदनुकुलतर्का: प्रक्रियाश्च बहुधा भिद्यन्ते। तेषां यथायथमाकलनं सर्वेषां शास्त्राणां गभीराध्ययनं विना विदुषां शास्त्रार्थगहनेऽध्वनि प्रविविक्षुणाञ्च अनायासेन नो भवति। परन्तु अनेन एकेनैव ग्रन्थेन सर्वेषां शास्त्रीय–विचाराणां न्यक्षेण ज्ञानं भवितुमर्हतीति श्रीशास्त्रिचरणानां वैदुष्यस्य पर: प्रकर्ष: सुतरां ज्ञात एव भवति। तथाहि –

मीमांसकेषु मुख्यतः सम्प्रदायद्वयं दृश्यते। भाट्टाः प्राभाकराश्च। भाट्टाः शाब्दबोधे अभिहितान्वयवादमुररीकुर्वन्ति। प्राभाकरास्तु अन्विताभिधानवादिनः।

तत्र अभिहितान्वयवादे पदैः पदार्थाः अभिधीयन्ते। पदार्थाः अभिहिताः सन्तः वाक्यार्थानुभवं जनयन्ति। अतः वाक्यार्थबोधे पदार्थाः एव करणानि इति उच्यन्ते भाट्टमते। अभिहितैः पदार्थैः वाक्यार्थानुभव अन्वयबोधः जायते इत्यतः अयं वादः अभिहतान्वयवादः इत्युच्यते।

प्राभाकरास्तु तन्नानुमन्यते। ते तु पदमेव वाक्यार्थबोधे कारणमिति स्वीकुर्वन्ति। पदेभ्यः अन्विता एव अर्थाः अभिधीयन्ते अन्वितार्थाभिधानं हि पदानाम् अन्विता–भिधायित्वम्। प्राभाकराः भाट्टाश्च भावनामेव मुख्यविशेष्यकं शाब्दबोधे इति मन्यन्ते।

वैयाकरणास्तु धात्वर्थमुख्यविशेष्यकशाब्दबोधवादिनः। तत्र कर्मत्वादिकं द्वितीयाद्यर्थाः। उदाहरणार्थं – 'ग्रामं गच्छति चैत्र' इति वाक्यस्य ग्रामकर्मकं चैत्रकर्तृकं गमनमिति स्थूलं शाब्दबोधं वर्णयन्ति।।

प्रायशः शाब्दबोधीय–व्याकरण–मीमांसादि–निबन्धेषु नव्यनैयायिकानां शाब्दबोधविचारपद्धतिरेवानुसृता लक्ष्यते।

## नञर्थवादनिरूपणप्रकरणे

"भूतले घटो नास्ति" इत्यत्र घटविशेष्यक–भूतल–वृत्तित्वाभावप्रकारकबोध–वादिनां घटाभावविशेष्यक–वृत्तित्व–प्रकारकबोधवादिनाञ्चाशयविशेषादिकं सुनिरूपितमस्ति।

अत्रेदं बोध्यम्। 'नीलो घटः' इत्यत्र नीलाभिन्नो घटः इति शाब्दबोधः। नीलपदस्य नीलरूपवान् अर्थः। तस्याभेदसम्बन्धेन घटपदार्थे अन्वयः। अभेदो न कस्यापि पदस्यार्थः। परन्तु प्रथमान्तनीलपदोत्तर–प्रथमान्त–घटपदत्वरूपाकांक्षया शाब्दबोधे भासते। तन्निष्ठविषयता सांसर्गिकविषयता। अयमभेद–संसर्गको बोधः अभेदान्वयबोधः इत्युच्यते। श्रीगदाधर–भट्टाचार्याः शब्दमणेः पक्षधरमिश्रकृतस्य शब्दमण्यालोकस्य शिरोमणि–विरचितानां आख्यात–नञवादादिनाञ्च व्याख्यानानि विधाय व्युत्पत्तिवाद–शक्तिवाद–विविध–शाब्द–बोधेपयोयगि–पदार्थ–स्वरूप–विचारादीन् स्वतन्त्र–प्रबन्धांश्च निर्माय शाब्दबोध–पद्धितिं सुपरिष्कृतां सर्वदार्शनिकचित्तविनोदनीं चक्रुः।

अत्र वैयाकरणानां नैयायिकानाञ्च बोधानुबन्धिनः सिद्धान्तभेदाः प्रदर्श्यन्ते।

अथ वैयाकरणसिद्धान्ताः

१. धात्वर्थमुख्यविशेष्यकः शाब्दबोधः।

२. सकर्मकाणामिवाकर्मकाणामपि धातूनां फलव्यापारोभयार्थता।

३. कर्तृकर्मादयो धर्मिणः प्रत्ययवाच्याः।

४. लडाद्यर्थकालः धात्वर्थभावनान्वयी।

५. समासे एकार्थीभावः।

६. बोधकत्वं शक्तिः, न संकेतः।

७. अपभ्रंशा वाचकाः।

८. लक्षणाख्या: वृत्यन्तरं नास्ति।

९. प्रादीनां चादीनाञ्च वैषम्यं नास्ति।

१०. वाक्यार्थबोधकः स्फोटः।

अथ नैयायिकसिद्धान्ताः

१. प्रायः प्रथमान्तार्थमुख्यविशेष्यको बोधः।

२. सकर्मकाणामेव धातूनां फलव्यापारोभयार्थकता, नाकर्मकधातूनाम्।

३. कर्तृकर्मत्वादिः धर्म एव प्रत्ययवाच्यः, न धर्मी।

४. आख्यातार्थकालः आख्यातार्थकृत्यन्वयी, यत्राख्यातार्थे कृतेर्न बोधः तत्र जानाति, नश्यति इत्यादौ धात्वर्थान्वयी।

५. समासे वाक्यवत् व्यपेक्षैव, नैकार्थीभावः।

६. ईश्वरसंकेतः शक्तिः।

७. अपभ्रंश न वाचकाः, शक्तिभ्रमात् तेभ्यः शाब्दबोधः।

८. लक्षणा नाम वृत्यन्तरम्।

९. प्रादयो द्योतकाः चादयो वाचकाः।

१०. स्फोटः न प्रमाणसिद्धः।

नव्यवैयाकरणसिद्धान्तापेक्षया प्राचीनवैयाकरणसिद्धान्ताः नैयायिकसिद्धान्तसंनिकृष्टा वर्तन्ते। तथाहि–

१. धातोः फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले च शक्तिद्वयं स्वीकुर्वन्ति नव्य–वैयाकरणाः। प्राचीनास्तु फलं व्यापारश्च धात्वर्थः इति नैयायिकसंमतं खण्ड–शक्तिपक्षं स्वीकुर्वन्ति। परन्तु फलव्यापारयोः सामानाधिकरण्ये धातोरकर्मत्वं, वैयधिकरण्ये तु सकर्मकत्वमिति वैयाकरणनयः। अकर्मधातोः केवलव्यापारार्थकत्वं, न फलार्थकत्वमपि। सकर्मकधातोरेव फलव्यापारोभयार्थकत्वमिति न्यायनयः।

२. क्रियाजन्यफलाश्रयत्वात् कर्मत्वमिति व्यवहारदर्शनात् स्वस्य स्वप्रयोज्यत्वा–संभवात् क्रियाजन्यफलाश्रयत्वातिरिक्तं कर्मत्वखण्डो धर्मः इति नवीनाः। नैयायिकमतवत् क्रियाजन्यफलाश्रयत्वं सखण्डमेव कर्मत्वम्। निरुक्तव्यवहारे कर्मत्वपदं कर्मसंज्ञापरमिति प्राचीना वदन्ति।

३. द्वितीयार्थः कर्म। तत्र क्रियायाः फलस्य च धातुतः, जन्यत्वस्य आकांक्षाया च लाभात् अनन्यलभ्यः आश्रयः अर्थः इति फलितम्। शक्तिपक्षे आश्रयत्वमर्थः इति प्राचीनानां निरूपणं, कर्मत्वार्थकद्वितीयायाः आधेयत्ववाचितावादि–नैयायिकपद्धतिमध्यस्ते।

४. जातिः, द्रव्यं, संख्या, लिङ्गं, कारकमिति पञ्चकस्य नामार्थपक्षं परमसिद्धान्त–तया आद्रियन्ते नव्याः। कारकस्य प्रत्ययवाच्यतापक्षं निरूपयन्ति प्राचीनाः भूषणसारकाराः 'प्रत्ययस्यैव वाचकतया युक्तत्वात्' इति ग्रन्थेन।

५. लिङर्थः प्रेरणा। तेनेष्टसाधनत्वमनुमाय पुरुषः प्रवर्तते इति नव्याः। प्राचीनास्तु नैयायिकवत् इष्टसाधनत्वं लिङर्थ इति प्रतिपादयन्ति। परन्तु नैयायिकसंमतं बलवदनिष्टाननुबन्धित्वं कृतिसाध्यत्वञ्च न लिङर्थः शाब्दिकमते। नव्यनैयायिकाः केचन इष्टसाधनमात्रस्य लिङर्थतां स्वीकुर्वन्ति।

६. आरोपितत्वं नञा द्योत्यते। 'चैत्रो न पचति' इति वाक्यात् आरोपितः चैत्रकर्तृकः पाकः इति बोधः इति नव्याः। प्राचीनास्तु आरोपितत्वस्य नञ्द्योत्यतापक्षमुपन्यस्य, 'निवृत्तपदार्थको नञ्।' इति भाष्यप्रामाण्यात् नैयायिकाभिमतं नञः अभावार्थकत्वं सिद्धान्तपक्षतया निरूपयन्ति।

शब्दानुशासनादिविषये प्रायः सर्वेषां दार्शनिकानां सिद्धान्ताः प्राप्यन्ते, तेषु सर्वत्र पाणिनीयव्याकरणानुबन्धीन्यनुशासनादि प्रमाणीकुर्वन्ति। ''क्रियाविशेषणस्थले च न द्वितीयातिरिक्तविभक्तिरुत्पद्यते क्रियाविशेषणानां कर्मत्वम् इत्यनुशासनपदेन सीरदेवकृत–

परिभाषावृत्तौ ठकपादे ज्ञापकसिद्धपरिभाषात्वेन निरूपितमेव व्यवहरन्ति भट्टाचार्याः स्पष्टीकृतश्चायमर्थः षष्ठे तरङ्गे।

पाणिनीयव्याकरणनुसारेणैव 'गां दोग्धि पयः' इत्यादौ पयसः प्रधानकर्मत्वं गोः कर्मत्वसंज्ञा 'अकथितञ्च' इति सूत्रेण दुहादिसमभिव्याहृतकर्म लकारस्य अप्रधान–कर्मत्वार्थकता इति निरूपयन्ति। एवमनुशासनानुरोधेन विभक्तीनामर्थं निर्धारयन्ति दुह्यमानपदस्य गोपदार्थविशेष्यबोधकत्वं तदुत्तरसप्तम्याः भावार्थकत्वञ्च स्वारसिकमिति मन्यमानाः विनैव दूषणोक्तिं व्युत्पत्तिवादे "गोषु दुह्यमानेषु गतः" इत्यादौ 'यस्य च भावेन' इत्यनेन गवादि पदात् सप्तमी तत्सामानाधिकरणदुह्यामानादिपदाच्च 'नीलं घटमानय' इत्यादि नीलादिपदात् द्वितीयावत् विशेषणपदस्य विशेष्यपदसमानविभक्तित्वनियमात् सप्तमी–विधायक–सूत्रे च भावपदं क्रियापरम्" इति ग्रन्थेन गभीरसरण्या तर्कालंकारमतं कटाक्षयन्ति।

दुःखविशेषाभावरूपस्य नरकाभावस्य इष्टत्वाक्रान्तत्वात् तत्साधनत्वं लिङर्थ इति वर्णनमनुशासनमनुसरतीति ज्ञेयम्। कर्मणि विहितद्वितीयाया आधेयत्वार्थकत्व–तण्डुलानोदनं पचतीत्यत्र नाशकत्वस्य न द्वितीयार्थकत्वञ्चानुशासनानुसरोधतीति व्युत्पादिताः षष्टे तरङ्गे।

ग्रन्थेऽस्मिन् व्युत्पत्तिवाद–शब्दशक्तिप्रकाशिकादिभिरनवगता बहवोऽर्थाः विवेचिताः। सुबर्थनिरूपणावसरे शाब्दिकानां मीमांसकानां नैयायिकानाञ्चाशयः निरूप्यते। स्थालीपुला–कन्यायेन तदुक्तं किञ्चित् चिन्तितम्। क्रियाविशेषणस्थले वैयाकरणाभिमतां स्तोकादेः कर्मसंज्ञां सुखमास्यते इति कर्मणि लकारापत्तिं दर्शयित्वा, 'ततोऽन्यत्रापि दृश्यते' इति वार्तिकात् क्रियाविशेषणपदात् द्वितीया–विभक्तिमिव स्थापयन्ति पदस्वरूपतज्ज्ञानोत्पत्तिप्रकारं पदस्यार्थे संकेत्यैवाभिधायित्वं संकेतज्ञानस्य करणत्वञ्च व्युत्पाद्य सोदाहरणं भेदान्वयञ्च प्रदर्श्य संमतः स्फोटवादो निरस्तः। ततः प्रथमादीनां विभक्तीनामर्थनिरूपणपूर्वकं शाब्द–बोधमुपवर्ण्य ग्रन्थोऽयं समाप्तिं नीतः।



# पाणिनीयव्याकरणेऽर्थतत्त्वं सम्भाषणसन्दर्भश्च*

बसन्तकुमारो भट्टः

## भूमिका

केनापि वैयाकरणेन कस्याश्चिदपि भाषाया व्याकरणे विचार्यमाणे, ये ये तन्तवो भाषापटे ओतप्रोता दृश्यन्ते, ते सर्वे शृङ्गग्राहिकतया परिगण्यमाने सति, चत्वारो भवन्ति। तद्यथा -- १. ध्वनिः, २. पदम्, ३. वाक्यम् ४. अर्थश्चेति। अत्राप्यन्तिमाद् अर्थतन्तो ऋते, ये ध्वन्यादयस्त्रायस्तन्तवः सन्ति, ते साधनकोटिं समाविशान्ति। अन्तिमश्चार्थरूपस्तन्तुस्तु साध्यकोटिमारोहति। वाग्व्यवहारकाले ये वक्तारो भवन्ति, ते स्वकीये मनसि स्वरव्यञ्जनात्मकैः ध्वनिभिः पदानि संसाधयन्ति, सुबन्ततिङन्तात्मकैश्च पदैर्वाक्यानि निष्पादयन्ति। ततश्च वाक्यानि संप्रयुज्य श्रोतृभ्यो नैकानर्थान् प्रकटीकुर्वन्ति। इत्थं वाग्व्यवहारस्य चरमं परमञ्च लक्ष्यम् अर्थाभिव्यक्तिरेवेति निश्चप्रचम्।

अतः पाणिनीयव्याकरणे साध्यरूपस्यार्थस्य किं स्थानम् अस्ति, तेन चार्थतत्त्वेन पाणिनि कानि कार्याणि साधयति, तस्य निरूपणमुदाहरणमुखेन क्रियतेऽत्र। पाणिनिना स्वकीये व्याकरणतन्त्रे सम्भाषणसन्दर्भस्य समुल्लेखः क्रियते न वा तदपि विचारणीयमास्ते।।

१

आधुनिकैर्भाषावैज्ञानिकैर्विचार्यते यद् भाषायाश्चतुर्थोऽयमर्थरूपो वर्ण्यविषयो विवेचनावसरे दुष्करः प्रतिभाति। यतोहि -- भाषाया अर्थतत्त्वे वाच्यार्थेन सत लक्ष्यार्थस्य व्यङ्ग्यार्थस्य चानुपदं समावेशोऽनिरुद्धेन प्रजवेन च भवत्येव। अत एव च व्याकरणस्य ये ये चत्वारो वर्ण्यविषयाः (ध्वनिः, पदम्, व्यक्यम् अर्थश्चेति) सन्ति, तेभ्योऽर्थं निष्कास्य, ध्वन्यादयस्त्रयो विषया एव विवेचनीया इति केषाञ्चन भाषावैज्ञानिकानां

---

* महात्मागान्धीकाशीविद्यापीठस्य संस्कृतविभागेन वाराणस्यां समायोजिता "अखिलभारतीय संस्कृतवर्षव्याख्यानमाला" (24–27 नवं. 2000)। तत्र प्रस्तुतमिदं व्याख्यानम्।।

मतिः। परन्तु पाणिनीयव्याकरणस्य याथार्थ्येन सूक्ष्मेक्षिकया च परीक्षणे क्रियामाणे सति, सूत्रकारोऽर्थतन्त्रूनपि संग्रथ्नात्येवेति दरीदृश्यते। व्यक्रियन्ते पृथक्क्रियन्ते शब्दा अनेनेति व्याकरणम् इति व्युत्पत्तिस्त्वित्थं कथयति यद् भाषायां वाक्यस्य प्रयोगः प्रथमं भवति, तदनन्तरं तत्र कानि पदानि सन्ति, पदे च का प्रकृतिः, कश्च प्रत्ययः इति क्रमशः पृथक्कृत्यान्ततो गत्वा कोऽस्ति प्रत्याय्योऽर्थः इति निरूप्यते। व्याकरणशब्दस्य पूर्वोक्ता व्युत्पत्तिस्तु भाषायाः पृथक्करणाय प्रवृत्तं किमपि तन्त्रजातं व्याकरणपदेनोच्यत इति व्याख्यां विवृणोति। एवमेव तत्रार्थतत्त्वमपि व्याकरणतन्त्राद् निष्पद्यमानम् अन्तिमं (Out-put) सोपानं दृश्यते। परन्तु व्याकरणशब्दस्यैतादृशी व्युत्पत्तिस्तु पाणिनीयतन्त्रय कृते नितराम् असमीचीना प्रतिभाति यतोहि – पाणिनीयतन्त्रेण किमपि वाक्यं पदं वा पृथक्क्रियतेऽर्थो वा निष्पाद्यतेऽवबोध्यते वा।

अत्र पाणिनीयतन्त्रे तु प्रकृतिः प्रत्ययेन सह संयोज्यते, तत्र च ये ध्वनिविकाराः परमावश्यकाः सन्ति, तेषां विधयो विधीयन्ते। अर्थात् पाणिनेरष्टाध्यायीरूपं यद्व्याकरणमस्ति, तस्य कृते तु "व्याक्रियन्ते = निष्पाद्यन्ते प्रथमं यथैकः इक्षुदण्डः (input रूपेण) प्रस्थाप्यते, तदनन्तरं यन्त्रेण निपीड्यमाने दण्डे, ततः इक्षुरसो (out-put रूपेण) बहिनिष्यन्दति, तथैव पाणिनीयतन्त्रेऽपि प्रथमे सोपान एव विवक्षितार्थस्य स्थापना क्रियते, तदनन्तरं तस्यार्थस्य वाचिका या प्रातिपदिकरूपा धातुरूपा वा प्रकृतिः स्यात्, सा वरणीयाऽस्ति। तस्याः प्रकृतेः पश्चात् विवक्षितकारक–कालवचनादि रूपस्यार्थजातस्य वाचकः कोऽपि विभक्तिसंज्ञकः प्रत्ययः संस्थाप्यते। ततश्च तयोः सम्मेलनं क्रियते। इत्थं पाणिनेर्व्याकरणं नास्ति पृथक्करणात्मकं, किन्तु संयोजनात्मकमस्ति। एवञ्चात्र पाणिनीय–तन्त्रेऽर्थतत्त्वम् इक्षुदण्डस्थानीयम् (input रूपम्) अस्ति, तन्त्राद् बहिर्निष्यन्दमानरसस्थानीयञ्च व्यक्यम् (Out-put रूपेण) अस्ति। अर्थात् भगवना पाणिनिना संस्कृतभाषाया व्याकरणनिरूपणावसरेऽर्थस्योपेक्षाऽवहेलना वा नैव कृता। प्रत्युत तन्त्रेऽस्मिन् विवक्षितार्थ–स्यावधारणा तु प्रथमे सोपान एवास्माभिः करणीयेति निर्विवादम्।

२

पाणिनेरष्टाध्याय्यां यद् व्याकरणं विलसति तद् आधुनिके भाषाविज्ञाने "वर्णनात्मकं शब्दनिष्पादकञ्च व्याकरणम्" (Descriptive and Generative grammar) इति नाम्नोच्यते।। अत्र शब्दनिष्पादकतन्त्रात्मकस्य पाणिनीयव्याकरणस्यारम्भबिन्दावेव

विपक्षितार्थस्य सङ्कल्पना निश्चीयते निवेद्यते वा। तदनन्तरं तस्यार्थस्य तद्वाचकध्वनि–सङ्केते परिवर्तनं भवति। ततश्च क्रमशः पदसिद्धया समं वाक्यसिद्धिरपि भवति। उदाहरणमुखेन यद्यस्य प्रदर्शनं क्रियते तर्हि–''राम लकडीसे चावल पकाता है'' इत्यस्ति मे विवक्षितार्थसमूहः। अत्र वर्तमानकालिकं विक्लित्त्यनुकूलात्मकं पाकक्रियारूपम् अर्थजातं रूढ़ितः सङ्केतितायां ध्वनिश्रेण्यां प्रकटीकरणाय पाणिनिना स्वकीये धातुपाठेऽर्थपुरस्सरं यद् धातुपारायणं क्रियते। तद्यथा – भू सत्तायाम् इत्यादि, ततः डुपचष् पाके, (भ्वादिगण ७.१८) स्वरितेत् धातुरित्यस्य चयनं क्रियते। एवमेव वर्तमाने लट् (३–२–१२–३) इति सूत्रमपि यत् प्रणीयते, तेन वर्तमानकालरूपस्यार्थस्य द्योतनाय – वचनाय वा लङ् इति शास्त्रीयः सङ्केतः स्वीक्रियते।

अत्र धातुपाठेऽष्टाध्यायीसूत्रे च सप्तम्यन्ते पदेऽर्थनिर्देशो विधीयते। तद्यश्च–डुपचष् पाके, वर्तमाने लडिति च। एवं पचतीति तिङन्तपदसिद्धौ प्रथमे सोपान एव (inputरूपेण) विवक्षितार्थस्य सङ्कल्पना स्थाप्यते, तदनन्तरं 'डुपचष्' रूपा धातुप्रकृतिः, 'लङ्' इति प्रत्ययश्चोद्भाव्य तयोः संयोजनं प्रारभ्यते। एवमेवाष्टाध्याय्यां कारकप्रकरणे (१–४–२३)पि यदर्थरूपं तत्त्वं वक्तृश्रोत्रोः मनसि विलसति, तस्य किमपि पारिभाषिकं व्याकरणिकं नाम (=कारकसंज्ञा) प्रदीयते। तद्यथा ''साधकतमं करणम्। ध्रुवमपायेऽपादानम्'' इत्यादीनि कारकसंज्ञाविधायकानि सूत्राणि। अत्र 'साधकतमं', यद्वा, अपाये यद् ध्रुवम् (अवधिभूतं कारकं) इत्यादि अर्थतत्त्वम् अस्ति। करणम्, अपादानम् इत्यादयश्च कारकसंज्ञाः। तदनन्तरं विभक्तिपादे (२–३–१ तः २– ३–७३) कर्मकरणापादानादिरूपस्यार्थस्य प्रकटीकरणाय याः द्वितीयादयः विभक्तयः प्रभवन्ति तद्यथा – कर्मणि द्वितीया (२–३–२), कर्तृकरणयोस्तृतीया (२–३–१८) अपादाने पञ्चमी (२–३–२८) इत्यादिषु सूत्रेषु तासाम् उद्घोषणा श्रूयते।

अत्र विविधेषु विधिसूत्रेषु यानि सप्तम्यन्तानि पदानि श्रूयन्ते, तानि विविच्यन्ते। एकतः सन्ति– इको यणचि (६–१–७७), झरो झरि सवर्णे (८–४–६५), शश्छोऽटि (८–४–६३), आमि सर्वनाम्नः सुट् (७–१–५२), घेर्ङिति (७–३–१११), सिचि वृद्धिः परस्मैपदेषु (७–२–१), इत्यादीनि सूत्राणि। अपरतश्च सन्ति – क्षय्यजय्यौ शक्यार्थे (६–१–८१), आङो नाऽस्त्रियाम् (७–३–१२०), प्रातिपदिकार्थलिङ्गपरिमाण–वचनमात्रे प्रथमा। (२–३–४६), चार्थे द्वन्द्वः (२–२–२९), जनपदे लुप् (४–२–८१), परोक्षे लिट् (३–२–११५), लिङ्निमित्ते लृङ् क्रियातिपत्तौ (३–३–१३९), इत्यादीनि सूत्राणि।

एकतो यानि 'इको यणचि' इत्यादीनि सूत्राणि सन्ति, तेषु निमित्तसप्तमी प्रयुक्ताऽऽस्ते। अर्थात् औश्लेषिकसप्तमी सा वर्णान्तरेणाव्यवडितस्य पूर्वस्य कार्यबोधिका भवति। परन्त्वत्र परतश्च क्षय्यजय्यौ शक्यार्थे (६–१–८१), चार्थे द्वन्द्वः (२–२–२९), यद्वा 'परोक्षे लिट्' (३–२–११५) इत्यत्र यानि सप्तम्यन्तानि पदानि प्रयुक्तानि दृश्यन्ते, तत्र तु वैषयिकी सप्तमी ग्रहीतव्या। अर्थात् तादृशी सप्तमी तु प्रथमे सोपाने विवक्षितस्यार्थ–स्योद्घोषणाय प्रयुज्यते। यदि शब्दान्तरेणोच्यते तर्हि – पाणिनिना पदसिद्धौ वाक्यसिद्धौ केऽर्थे रूपसिद्धेः प्रक्रियाद्य आरम्भबिन्दावेव विवक्षितार्थस्य स्थापना क्रियते। तद्यथा – अमुकोऽर्थोव्यच्ये सति लिट्लकारः प्रयोक्तव्यः लृङ्कारो वा। एवमेव 'भवतु' इत्यत्राशिषि वाच्ये सति, 'तु' इत्यस्य स्थाने तातङ्ङादेशो विधीयते। अस्य विमर्शस्यायमेवाशयो यद् भगवान् पापिनिः स्वकीये व्याकरणे संस्कृतभाषाया वर्णनावसरेऽर्थतत्त्वस्योपक्षां नैव करोति, प्रत्युतविवक्षितार्थस्य स्थापनां रूपसाधनिकायाः प्रथमे सोपाने कृत्वा, तदनन्तरमेव ध्वनिविकारान् वर्णयति, प्रकृतिप्रत्यययोः सम्मेलनञ्चादिशति।

३

पाणिनीयव्याकरणस्यार्थतत्त्वस्य न केवलम् आरम्भविन्दावेव स्थानं दृश्यते, कुत्रचित् पाणिनिः तस्यार्थतत्त्वस्य निमित्तांशे निर्देशं कृत्वाऽर्थभेदेन रूपभेदं, वैकल्पिकं रूपं वा जनयति। तद्यथा – (१) तस्माच्छसो नः पुंसि (६–१–१०३) इत्यत्र पुंस्त्वरूपो लिङ्गविशेषार्थो निमित्तदले विलसति, येन च रामान् – कवीन् इत्यादीनि रूपाणि भवन्ति। पुंस्त्वाभावे च मतीः नदीः इत्यादीनि रूपाणि भवन्ति। अत्र पूर्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य नः न स्यात्, यतो हि मति – नदीन्यादिषु प्रातिपदिकेषु नास्त्यत्र पुंस्त्वम्।

(२) द्वितीयमुदाहरणम् – 'कालाध्वनोरत्यन्तसंयोगे' (२–३–५) इत्यनेन सूत्रेणान्तसंयोगे वाच्ये सति द्वितीया विधीयते कालावाचकाच्छब्दाद्, अध्ववाचकाच्छब्दादपि। यथा – द्वादशवर्षाणि व्याकरणमधीतम्। परन्तु 'अपवर्गे तृतीया' (२–३–६) इत्यनेन सूत्रकारः कथयति यद् अपवर्गशब्देन फलप्राप्तिरुच्यते, तस्यां द्योत्यायां काला–ध्वनोरत्यन्तसंयोगे तृतीया स्यात्। येन च द्वादशवर्षैर्व्याकरणमधीतम् इति विभक्तिभेदो भवति। अर्थात् 'द्वादशवर्षाणि' –'द्वादशवर्षैश्च' इत्यत्रार्थभेदेन रूपभेदः प्रादुर्भवति।

(३) तृतीयमुदाहरणम् – अचोऽन्त्यादि टि (१–१–६४) इत्यत्र शकन्ध्वादिषु पररूपं वाच्यम् इति वार्तिकवचनं वर्तते। येन शकन्धुः–कर्कन्धुः कुलटा–इत्यादयः शब्दाः साध्यन्ते। परन्तु तत्र सीमन्तः केशवेशे' इत्यनेन वार्त्तिकेन सीमन्तः – सीमान्तश्च इन्युभावपि शब्दौ विभिन्नार्थौ विलसतः इत्युक्तम्। एवं पाणिनीयव्याकरणे कुत्रचिद् अर्थभेदं निमित्तीकृत्य रूपभेदः प्रसाध्यते।

३

अस्मिन् व्याकरणशास्त्रे पाणिनिना न केवलम् अनुपेक्षणीयम् अर्थतत्त्वमुररीकृत्य वाक्यसिद्धिः प्रदर्शिता, किन्त्वर्थतत्त्वेन सह सम्भाषणसन्दर्भस्यापि भाषाप्रयोगे कीदृशः प्रभावः स्यात्तदपि सूक्ष्मेक्षिकया वर्णितम्। अत इदानीं वाग् व्यवहारकालेऽर्थतत्त्वादतिरिच्यमानः सम्भाषणसन्दर्भः कथं पाणिनीयसूत्रेषु निरुप्यते तदुदाहरणमुखेन प्रदर्श्यते।

(१) नादिन्याक्रोशे पुत्रस्य (८–४–४८) इत्यनेन पुत्रशब्दस्य न द्वेस्त आदिनीशब्दे पटे, आक्रोशे जभ्यमाने। तद्यथा – "पुत्रादिनी त्वमसि पापे"। अत्र पुत्रवधूम् उद्दिश्य काऽपि श्वश्रूः कथयति इति लौकिको व्यवहारः सुविदितमेव। किन्तु यदा तत्त्वकथनं भवति तदा तत्र पुत्रशब्दस्य यरः द्वित्वं भवत्येव यथा "पुत्त्रादिनी सर्पिणी"। अत्र लोके यः सम्भाषणसन्दर्भेः पाणिनिनाऽवलोकितः, तमधिकृत्य रूपभेदस्य समुल्लेखः सूत्रबद्धः क्रियते।।

(२) युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः (१/४/१०५) इत्यनेन सूत्रेण तिङ्वाच्यकारकवाचिनि युष्मदि उपपदे प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः पुरुषः स्यादित्युक्त्वा, तदनन्तरमेव पाणिनिना "प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च।" (१–४–१०६) इत्यपि भणितम्। सूत्रेणानेन महर्षिः पाणिनिर्लोके प्ररिहासरूपं सम्भाषणसन्दर्भं लक्ष्यीकृत्य तिङ्प्रत्ययस्य युष्मदादिवाच्यपुरुषस्याऽसामानाधिकरण्यं वर्णयति। तद्यथा– "त्वं (युवां यूयं वा) मन्ये, अहं रथेन यास्यसि" इति। अत्र वक्तुर्विवक्षितार्थः परिहासपूर्णोऽस्ति, येन 'त्वम्' इति युष्मद्वाच्यपुरुषेण सह मन्यतेदुत्तममुरुपस्य प्रयोगो भवितुमर्हति, 'अहम्' इति अस्मद्वाच्यपुरुषेण सत 'या' इति धातोः पश्चात् मध्यमपुरुषस्य प्रत्ययस्य योगो भवति। इदानीं 'त्वं मन्येऽहं रथेन यास्यसि' इत्यस्य वाक्यस्य योऽर्थः प्रतिभाति यद् "त्वं यद्यपि मन्यसे यदहं रथेन यास्यामि, किन्तु वस्तुतस्तु मदीयो रथो दग्धः। अतः कथं त्वं रथेन यास्यसि? इति परिहासः। अत्र पाणिनिना सम्भाषणसन्दर्भानुसारं विपरीता वाक्यनिष्पत्तिरपि स्वकीये व्याकरणे कथं व्युत्पादनीयेति वर्णितम्।।

(३) परोक्षे लिट् (३–२–११५) इत्यनेन भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्याद् इत्युक्त्वा, भगवता पाणिनिना परोक्षकालरूपमर्थम् प्रकटीकर्तुम् लिट्लकारस्य विधानं समुपदिष्टम्। किन्तु तत्र कात्यायनेन "परोक्षे लिड् अत्यन्तापह्नवे च" इति वार्तिकं प्रस्तावितम्। येन च वाग्व्यवहारकाले यदि कश्चिद् वक्ता श्रोतुः कामपि वार्ता निषेद्धुम् अभिलषति तर्ह्यपि लिट्लकारस्यैव प्रयोगं करोति। तद्यथा – "नाहं कलिङ्गान् जगाम" इति प्रदर्शयति।

(४) क्षेपे, गर्हायाम्, भूषणे, संज्ञायाम्, आक्रोशे इत्यादिभि र्बहुभिः शब्दैः पाणिनिः सम्भाषणसन्दर्भान् सूत्रबद्धान् कुरुत एव। एवमेव, वार्त्तिककारो तं मुनिमनुसृत्य व्यवहारकाले दृश्यमानान्, नूतनाविर्भूतान् सम्भाषणसन्दर्भान्नपि बहुशः परिगणयति भिन्नेषु वार्त्तिकेषु। तद्यथा – अभूततद्भावेच्विः। अभ्यर्दितञ्च (पूर्वम्)। इत्यादीनि वार्तिकानि।।

इत्थं पाणिनीयव्याकरणं यदि वर्णनात्मकं शब्दनिष्पादकञ्च तन्त्रं स्यात् तर्हि तदपि विदुषां दृष्टिपथगामि भवितुमर्हति यद् पाणिनिनाऽर्थतत्त्वस्य स्वकीये तन्त्रे समावेशः कृत एव। तथा वाक्यसिद्धेरारम्भविन्दावेव विवक्षितार्थस्य संङ्कल्पना प्रस्थापिता दृश्यते। तदनन्तरमेव प्रकृतिप्रत्यययोः सम्मेलनमुपदिश्यते। एवमेव – यदीदं वर्णनात्मकं व्याकरणं स्यात् तर्हि तत्र लोके प्रचलितो यः कश्चित् सम्भाषणसन्दर्भः स्यात्, तदपि सूत्रे सङ्ग्रन्थनामर्हति। पाणिनिनोभयविधस्यापि व्याकरणस्येतिकर्तव्यता सुचारूपेण परिपालितेति सप्रमाणं वक्तुं पार्यते।।

संदर्भाः

1. The role of and approach to meaning in language is an important and vexatious theme of inquiry. Formerly, many American linguists, in a mood of strong rejection of traditional grammar and influenced by a rather extreme behavioristic position, viewed meaning with suspicion... some have said that meaning lies totally outside the linguistic system, that it is a sort of net work between cultural systems; some feel that it is to be analyzed as a quite separate problem. others, that it must be constantly taken into consideration.

See : *American School of Linguistics;* by Eric. P. Hamp; published in "**Linguistics**", Ed, by Archibald A. Hill, Voice of America Forum Series, Washington, Reprinted in 1978, Pages - 280.

# संस्कृत परिषद के महत्त्वपूर्ण प्रकाशन
## संस्कृत विभाग
### डॉ.हरीसिंह गौर विश्वविद्यालय, सागर - 470003 (म.प्र.)

1. **अप्राप्त नाट्यशास्त्रीय ग्रन्थ** : (1987) राधावल्लभ त्रिपाठी, मूल्य 20रु.
2. **अर्वाचीनसंस्कृतमहाकाव्यानुशीलनम्** (1861–1970) : (1981) रहसबिहारी, (अप्राप्त)।
3. **आदिकविवाल्मीकि** : (1981) हिन्दी में , राधावल्लभ त्रिपाठी, मूल्य 25 रु.
4. **आधुनिकसंस्कृतसाहित्यानुशीलनम्** : (2022 वि.सं.) रामजी उपाध्याय, मूल्य 30 रु.।
5. **आयाति** : (1998) समकालिक संस्कृत काव्य संङ्ग्रहः, राधावल्लभ त्रिपाठी, मूल्य 25रु.।
6. **कर्णभार** : (1985) डॉ. फतेहसिंह, (सचित्र) मूल्य 10रु.।
7. **कवि भवभूति और उनका नाट्यलोक** : (1987) राधावल्लभ त्रिपाठी, मूल्य 50रु.।
8. **कालिदास की समीक्षापरम्परा** : (1988) राधावल्लभ त्रिपाठी, मूल्य 30 रु.
9. **कालिदासपरिशीलन** : (1988) राधावल्लभ त्रिपाठी, मूल्य 20रु.।
10. **कुन्दमाला** : (1982) संस्कृत नाटक का सरस सुपाठ्य हिन्दी अनुवाद, अनु. राधावल्लभ त्रिपाठी, (अप्राप्त)।
11. **नाट्यमण्डपम्** : (1981) प्राचीन भारतीय रंगमंच पर नया प्रकाश, राधावल्लभ त्रिपाठी, मूल्य 20 रु.।
12. **नाट्यशास्त्र के बीजशब्द (द्वितीय भाग)** : (1986) राधावल्लभ त्रिपाठी, कुसुम भूरिया, (अप्राप्त)।
13. **न्यायसत्रम्** : (1984) राधावल्लभ त्रिपाठी, मूल्य 60रु.।
14. **पञ्चवटी (अनुवादकाव्य)** : (2002) राधावल्लभ त्रिपाठी, मूल्य 50 रु.।
15. **पार्वतीपरमेश्वरीयम्** : (1966) संगीतिका, वनमाला भवालकर, मूल्य10रु.
16. **प्रख्या I** : संस्कृतकाव्य सीरीज, राधावल्लभ त्रिपाठी, मूल्य 30रु.।
17. **प्रबुद्धरौहिणेय** : (1983) संस्कृत नाटक का हिन्दी अनुवाद, राधावल्लभ त्रिपाठी, (अप्राप्त)।
18. **भरटकद्वात्रिंशिका** : (1987) प्राचीन कथा संग्रह , राधावल्लभ त्रिपाठी, मूल्य 15रु.।
19. **भारतीयनाट्य : स्वरुप और परम्परा** : (1988) राधावल्लभ त्रिपाठी मूल्य 25रु.।

